# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

[ त्रैमासिकी ]

प्रधानसम्पादकः

श्रीकुबेरनाथशुक्लः, एम० ए०, व्याकरणाचार्यः

सहसम्पादकः

श्रीव्रजवल्लभद्विवेदो दर्शनाचार्यः

भाद्रपूर्णिमा २०१३

एकादशवर्षे, १–२ अङ्कौ

# विषय-सूची

// सारस्वती सुषमा
काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

११ वर्षः { ज्येष्ठभाद्रौ २०१३ } १-२ अङ्कौ

# श्रुतिविमर्शः

## शतपथब्राह्मण आचारविचाराः

अथवा

## शतपथब्राह्मणपर्यालोचनम्

व्याप्य स्थितं त्रिभुवनं परितोऽप्रमेयं पुण्यं परं परमनिर्वृतिधाम सत्यम्।
पापापहं त्रिविधतापहरं वरेण्यं शान्तं शिवं परमतत्त्वमहं नतोऽस्मि ॥

न केवलं भारतीयवाङ्मयं एव, किन्तु पृथिव्याः समस्तेऽपि वाङ्मये, अतिप्राचीनत्वाद् अतिविस्तृतत्वात् पुरुषार्थचतुष्टयस्यापि व्यापकदृष्ट्या समन्वितत्वाद् विविधगूढातिगूढविषय-प्रतिपादकत्वेनातिगभीरत्वाच्च वैदिकवाङ्मयस्याद्वितीयं महत्त्वमिति नैव तिरोहितं विपश्चिताम्। तस्यैवास्य वैदिकवाङ्मयस्य तत्तद्भागक्रमेण विचारणीयविषयानधिकृत्य प्रबन्धमाला-रूपेण प्रवृत्तस्यास्य श्रुतिविमर्शस्येतः पूर्वम्—१. ऐतरेयब्राह्मणपर्यालोचनम्, २. ऐतरेयारण्यक-पर्यालोचनम्, ३. कौषीतकिब्राह्मणपर्यालोचनं चेत्याख्येषु त्रिषु निबन्धेषु तत्तद्ग्रन्थान्तर्गता रीति-नीति-स्वर्ग-यज्ञस्वरूप-तत्तद्देवतास्वरूप-तत्तत्पदार्थविज्ञानादिविषयका विचाराः स्पष्टीकृता अस्माभिः।

अस्मिन् खलु चतुर्थे निबन्धे शुक्लयजुर्वेदीयमाध्यन्दिनशाखायाः शतपथब्राह्मणमधिकृत्य तादृश एव विचारः प्रस्तूयते। परं विद्यतेऽत्र कश्चित् प्रक्रियाभेदः। ब्राह्मणस्यास्यातिविस्तृतत्वात् ततो गृहीतानामुद्धरणानां तात्पर्यविनिर्णयार्थं प्रायेणापेक्षितस्य मौलिकग्रन्थस्थलानामवलोकनस्य सौकर्यमुद्दिश्य ग्रन्थक्रममाश्रित्यैवेदं पर्यालोचनमारभ्यते। तदेवं सहेतुक एवास्य प्रस्तुतस्य पर्यालोचनस्य पूर्वप्रकाशितपर्यालोचनानामपेक्षया प्रक्रियाया भेदः।

अस्मिन् हि ब्राह्मणे चतुर्दश काण्डानि विद्यन्ते। तानि च यथाक्रमम्—१-हविर्यज्ञम्, २-एकपादिका, ३-अध्वरम्, ४-ग्रहनाम, ५-सवम्, ६-उपासंभरणम्, ७-हस्तिघटम्, ८-चितिः, ९-संचितिः, १०-अग्निरहस्यम्, ११-अष्टाध्यायी, १२-मध्यमम्, १३-अश्वमेधम्, १४-बृहदारण्यकं चेति नामभिः प्रसिद्धानि। काण्डानि पुनः शतसंख्याकेष्वध्यायेषु विभक्तानि। अत एवास्य ब्राह्मणस्य शतपथमित्यन्वर्था संज्ञा।

प्रधानप्रतिपाद्यविषयदृष्ट्या ग्रन्थस्यास्यान्तिमभागस्य बृहदारण्यकेतिनाम्ना प्रसिद्धस्य ब्रह्मविद्यैव विषयः। अवशिष्टेषु भागेषु पुनः श्रौतकर्मकाण्डस्यैव प्रपञ्चः।

सत्यप्येवम्, प्रस्तुतेऽस्मिन् पर्यालोचने, ग्रन्थस्य प्रधानप्रतिपाद्यविषयमपहाय, पूर्वनिबन्धत्रय इव, प्रायेणार्थवादप्रसङ्गेन प्रतिपादितास्तदानीन्तनरीतिनीत्यादिपरिचायका विषया एव ग्रन्थक्रमेण संग्रथ्यन्ते। सोऽयं संग्रहो नूनं विविधदृष्टिभिस्तत्तद्विषयेष्वनुसन्धानपराणामन्येषां च विदुषामत्युपयोगी रुचिकरश्च भविष्यतीत्यस्माकं विश्वासः।

सर्वेषां ब्राह्मणग्रन्थानामनया विधया पर्यालोचनस्यानन्तरं विशेषतस्तदाधारेण ब्राह्मणसामान्यविषयको विमर्शात्मको ग्रन्थोऽस्माभिर्यथावकाशं प्रकाश्येतेत्येवास्माकमन्ततोऽभीष्टम्।

## अथातः शतपथब्राह्मणपर्यालोचनम्

अमेध्यो वै पुरुषो यदनृतं वदति। ( श० ब्रा० १।१।१।१ )

मेध्या वा आपः।...पवित्रं वा आपः। ( श० ब्रा० १।१।१।१ )

अग्निर्वै देवानां व्रतपतिः। ( श० ब्रा० १।१।१।२ )

द्वयं वा इदं न तृतीयमस्ति, सत्यं चैवानृतं च। सत्यमेव देवाः, अनृतं मनुष्याः।...“इदमहमनृतात् सत्यमुपैमि” [ यजु० १।५ ] इति, तन्मनुष्येभ्यो देवानुपैति। ( श० ब्रा० १ १।१।४ )

स वै सत्यमेव वदेत्। एतद्ध वै देवा व्रतं चरन्ति यत्सत्यम्। तस्मात्ते यशः। यशो ह भवति य एवं विद्वान् सत्यं वदति। ( श० ब्रा० १।१।१।५ )

सः कृतव्रतोपायनः।

अमानुष इव वा एतद्भवति यद् व्रतमुपैति। ( श० ब्रा० १।१।१।६ )

सत्यवदनादिव्रतोपायनेन हि मनुष्यः स्वभावसिद्धमनृतवदनादिकं परित्यज्य—“सत्यमेव

देवाः, अनृतं मनुष्याः" [ श० ब्रा० १।१।१।४ ] इति श्रुत्यनुसारं मनुष्येभ्यो देवानुपैतीति भावः ।

मनो ह वै देवा मनुष्यस्याऽऽजानन्ति । ( श० ब्रा० १।१।१।७ )

तन्न्वेवानवक्लृप्तं यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयात्, अथ किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात् । ( श० ब्रा० १।१।१।८ )

मनुष्येषु । गृहागतेष्वतिथिष्विति भावः । अनवक्लृप्तमनुचितम् । यदि गृहागतेष्वतिथिष्वनश्नत्सु यजमानस्य पूर्वमशनमनुचितम्, तर्हि देवयजनप्रसङ्गे देवेष्वनश्नत्सु तस्य पूर्वमशनं तु विशेषतोऽनुचितमिति भावः ।

यस्य वै हविर्न गृह्णन्ति तदशितमनशितम् । ( श० ब्रा० १।१।१।६ )

यस्य द्रव्यस्य संबन्ध्यन्नं हविर्देवा न गृह्णन्ति तदशितमपि सदनशितवद् भवतीति भावः । तद्यथा—"आरण्या ओषधयो यद्वा वृक्ष्यम्" [ तु० श० ब्रा० १।१।१।१० ] । वृक्ष्यं वृक्षोद्भवं फलम् ।

व्रीहियवयोर्वा एतदुपच्चं यच्छमीधान्यम् । ( श० ब्रा० १।१।१।१० )

शमीधान्यं तिलमाषादि । उपचिनोतीत्युपच्चम् । यत्ताभ्यां मिश्रितमुपभुज्यते ।

देवान् वा एष उपावर्तते यो व्रतमुपैति । ( श० ब्रा० १।१।१।११ )

अधस्तादिव हि श्रेयस उपचारः । ( श० ब्रा० १।१।१।११ )

उपरि स्थितं श्रेयांसमध एव स्थिता उपचरन्तीति भावः ।

यज्ञो वा आपः । ( श० ब्रा० १।१।१।१२ )

अपां यज्ञसाधनतया यज्ञरूपत्वमिति भावः ।

अनिरुक्तो वै प्रजापतिः । प्रजापतिर्यज्ञः । ( श० ब्रा० १।१।१।१३ )

अनिरुक्तोऽनिर्ज्ञातः ।

अद्भिर्वा इदं सर्वमाप्तम् । ( श० ब्रा० १।१।१।१४ )

वज्रो वा आपः । वज्रो हि वा आपः । तस्माद् येनैता यन्ति निम्नं कुर्वन्ति, यत्रोपतिष्ठन्ते निर्दहन्ति । ( श० ब्रा० १।१।१।१७ )

येनैता यन्ति । येन पथा गच्छन्ति । निर्दहन्ति निःसारं कुर्वन्ति ।

योषा वा आपो वृषाग्निः । ( श० ब्रा० १।१।१।१८ )

योषा वा आपः । अप्शब्दस्य स्त्रीलिङ्गत्वात् । वृषाग्निः । अग्निशब्दस्य पुँल्लिङ्गत्वात्

अस्मिन् हि ब्राह्मणे चतुर्दश काण्डानि विद्यन्ते। तानि च यथाक्रमम्—१–हविर्यज्ञम्, २–एकपादिका, ३–अध्वरम्, ४–ग्रहनाम, ५–सवम्, ६–उपासंभरणम्, ७–हस्तिघटम्, ८–चितिः, ९–संचितिः, १०–अग्निरहस्यम्, ११–अष्टाध्यायी, १२–मध्यमम्, १३–अश्वमेधम्, १४–बृहदारण्यकं चेति नामभिः प्रसिद्धानि। काण्डानि पुनः शतसंख्याकेष्वध्यायेषु विभक्तानि। अत एवास्य ब्राह्मणस्य शतपथमित्यन्वर्था संज्ञा।

प्रधानप्रतिपाद्यविषयदृष्ट्या ग्रन्थस्यास्यान्तिमभागस्य बृहदारण्यकेतिनाम्ना प्रसिद्धस्य ब्रह्मविद्यैव विषयः। अवशिष्टेषु भागेषु पुनः श्रौतकर्मकाण्डस्यैव प्रपञ्चः।

सत्यप्येवम्, प्रस्तुतेऽस्मिन् पर्यालोचने, ग्रन्थस्य प्रधानप्रतिपाद्यविषयमपहाय, पूर्वनिबन्धत्रय इव, प्रायेणार्थवादप्रसङ्गेन प्रतिपादितास्तदानीन्तनरीतिनीत्यादिपरिचायका विषया एव ग्रन्थक्रमेण संग्रथ्यन्ते। सोऽयं संग्रहो नूनं विविधदृष्टिभिस्तत्तद्विषयेष्वनुसन्धानपराणामन्येषां च विदुषामत्युपयोगी रुचिकरश्च भविष्यतीत्यस्माकं विश्वासः।

सर्वेषां ब्राह्मणग्रन्थानामनया विधया पर्यालोचनस्यानन्तरं विशेषतस्तदाधारेण ब्राह्मणसामान्यविषयको विमर्शात्मको ग्रन्थोऽस्माभिर्यथावकाशं प्रकाश्येतेत्येवास्माकमन्ततोऽभीष्टम्।

## अथातः शतपथब्राह्मणपर्यालोचनम्

अमेध्यो वै पुरुषो यदनृतं वदति। ( श० ब्रा० १।१।१।१ )

मेध्या वा आपः।···पवित्रं वा आपः। ( श० ब्रा० १।१।१।१ )

अग्निर्वै देवानां व्रतपतिः। ( श० ब्रा० १।१।१।२ )

द्वयं वा इदं न तृतीयमस्ति, सत्यं चैवानृतं च। सत्यमेव देवाः, अनृतं मनुष्याः।···"इदमहमनृतात् सत्यमुपैमि" [ यजु० १।५ ] इति, तन्मनुष्येभ्यो देवानुपैति। ( श० ब्रा० १ १।१।४ )

स वै सत्यमेव वदेत्। एतद्ध वै देवा व्रतं चरन्ति यत्सत्यम्। तस्मात्ते यशः। यशो ह भवति य एवं विद्वान् सत्यं वदति। ( श० ब्रा० १।१।१।५ )

सः कृतव्रतोपायनः।

अमानुष इव वा एतद्भवति यद् व्रतमुपैति। ( श० ब्रा० १।१।१।६ )

सत्यवदनादिव्रतोपायनेन हि मनुष्यः स्वभावसिद्धमनृतवदनादिकं परित्यज्य—"सत्यमेव

देवाः, अनृतं मनुष्याः" [ श० ब्रा० १।१।१।४ ] इति श्रुत्यनुसारं मनुष्येभ्यो देवानुपैतीति भावः ।

मनो ह वै देवा मनुष्यस्याऽऽजानन्ति । ( श० ब्रा० १।१।१।७ )

तन्न्वेवानवक्लृप्तं यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयात्, अथ किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात् । ( श० ब्रा० १।१।१।८ )

मनुष्येषु । गृहागतेष्वतिथिष्विति भावः । अनवक्लृप्तमनुचितम् । यदि गृहागतेष्वतिथिष्वनश्नत्सु यजमानस्य पूर्वमशनमनुचितम्, तर्हि देवयजनप्रसङ्गे देवेष्वनश्नत्सु तस्य पूर्वमशनं तु विशेषतोऽनुचितमिति भावः ।

यस्य वै हविर्न गृह्णन्ति तदशितमनशितम् । ( श० ब्रा० १।१।१।९ )

यस्य द्रव्यस्य संबन्ध्यन्नं हविर्देवा न गृह्णन्ति तदशितमपि सदनशितवद् भवतीति भावः । तद्यथा—"आरण्या ओषधयो यद्वा वृक्ष्यम्" [ तु० श० ब्रा० १।१।१।१० ] । वृक्ष्यं वृक्षोद्भवं फलम् ।

व्रीहियवयोर्वा एतदुपचं यच्छमीधान्यम् । ( श० ब्रा० १।१।१।१० )

शमीधान्यं तिलमाषादि । उपचिनोतीत्युपचम् । यत्ताभ्यां मिश्रितमुपभुज्यते ।

देवान् वा एष उपावर्तते यो व्रतमुपैति । ( श० ब्रा० १।१।१।११ )

अधस्तादिव हि श्रेयस उपचारः । ( श० ब्रा० १।१।१।११ )

उपरि स्थितं श्रेयांसमध एव स्थिता उपचरन्तीति भावः ।

यज्ञो वा आपः । ( श० ब्रा० १।१।१।१२ )

अपां यज्ञसाधनतया यज्ञरूपत्वमिति भावः ।

अनिरुक्तो वै प्रजापतिः । प्रजापतिर्यज्ञः । ( श० ब्रा० १।१।१।१३ )

अनिरुक्तोऽनिर्ज्ञातः ।

अद्भिर्वा इदं सर्वमाप्तम् । ( श० ब्रा० १।१।१।१४ )

वज्रो वा आपः । वज्रो हि वा आपः । तस्माद् येनैता यन्ति निम्नं कुर्वन्ति, यत्रोपतिष्ठन्ते निर्दहन्ति । ( श० ब्रा० १।१।१।१७ )

येनैता यन्ति । येन पथा गच्छन्ति । निर्दहन्ति निःसारं कुर्वन्ति ।

योषा वा आपो वृषाग्निः । ( श० ब्रा० १।१।१।१८ )

योषा वा आपः । अप्शब्दस्य स्त्रीलिङ्गत्वात् । वृषाग्निः । अग्निशब्दस्य पुँलिङ्गत्वात् ।

(तद्) गृहेष्वेवैतन्मिथुनं प्रजननं क्रियते। (श० ब्रा० १।१।१।१८)

यो वा अप्रतिष्ठितो वज्रमुद्यच्छति नैनं शक्नोत्युद्यन्तुम्। सं हैनं शृणाति। (श० ब्रा० १।१।१।१८)

संशृणाति हिनस्ति।

गृहा वै प्रतिष्ठा। (श० ब्रा० १।१।१।१६)

उत्तरतो हि स्त्री पुमांसमुपशेते। (श० ब्रा० १।१।१।२०)

उत्तरतो वामभागे।

अस्ति वा अग्नेश्चापां च विभ्रातृव्यमिव। (श० ब्रा० १।१।१।२१)

विभ्रातृव्यम्। भ्रातृव्यः शत्रुः। तस्य भावो भ्रातृव्यं शात्रवम्। युवादित्वाद् भावेऽण्। विशिष्टं भ्रातृव्यम्। अग्नेरपां च परस्परविनाशकत्वाद् महदस्ति वैरमित्यर्थः।

द्वन्द्वं वै वीर्यम्। यदा वै द्वौ संरभेते, अथ तद्वीर्यं भवति। द्वन्द्वं वै मिथुनं प्रजननम्। (श० ब्रा० १।१।१।२२)

संरभेते। किमपि कार्यं कर्तुमुपक्रमेते। 'रभ राभस्ये'। राभस्यं कार्योपक्रमः।

यज्ञो वै कर्म। (श० ब्रा० १।१.२।१)

यज्ञस्य विशिष्टकर्मत्वादिति भावः।

वाग्वै यज्ञः। (श० ब्रा० १।१।२।२)

वाचो यज्ञसाधनत्वादिति भावः।

देवा ह वै यज्ञं तन्वाना:। तेऽसुररक्षसेभ्य आसङ्गाद् बिभयाञ्चक्रुः। (श० ब्रा० १।१।२।३)

आसङ्गात् संसर्गात्, विघ्नाद्वा।

अन्तरिक्षं वा अनु रक्षश्चरत्यमूलमुभयतः परिच्छिन्नम्, यथायं पुरुषोऽमूल उभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति। तद् ब्रह्मणैवैतदन्तरिक्षमभयमनाष्ट्रं कुरुते। (श० ब्रा० १।१।२।४)

यथा वृक्षो मूलैः पृथिवीमनुप्रविष्टस्तिष्ठत्येव, न च गच्छति; यथा च व्याघ्रादिरभितः पाशाभ्यां बद्ध्वा ध्रियमाणस्तिष्ठत्येव; नैवं पुरुषो मूलवान्, नाप्युभयतः केनचित् संसर्गिणा प्रतिबद्धः। किन्तु 'परिच्छिन्नः' प्रतिबन्धकासंसृष्टः सन्नन्तरिक्षे विश्रम्भं चरति। तथैव

यज्ञविघातार्थं रक्षोऽपि चरद् 'ब्रह्मणा' मन्त्रेण निवार्यत इति भावः। अनाष्ट्रम्। नाशयन्तीति नाष्ट्राणि असुररक्षांसि, तद्रहितम्। एवमत्र यज्ञादिकर्मसु मन्त्रप्रयोजनमुच्यते।

**ब्रह्मणैवैतदन्तरिक्षमभयमनाष्ट्रं कुरुते। (श० ब्रा० १।१।२।४)**

ब्रह्मणा मन्त्रेण (सायणः)। अनाष्ट्रम्। नाशयन्तीति नाष्ट्राणि असुररक्षांसि तद्रहितम्।

**भूमा हि वा अनः। तस्माद्यदा बहु भवत्यनोवाह्यमभूदित्याहुः।**
**(श० ब्रा० १।१।२।६)**

बहोर्भावो भूमा। अनः = शकटम्। अनोवाह्यम् = अनसा वोढुमर्हम्।

**यज्ञो हि वा अनः। तस्मादनस एव यजूँषि सन्ति, न कोष्ठस्य न कुम्भ्यै। भस्त्रायै ह स्म ऋषयो गृह्णन्ति। तदृषीन् प्रति भस्त्रायै यजूँष्यासुः। तान्येतर्हि प्राकृतानि। (श० ब्रा० १।१।२।७)**

तदृषीन्। तदु ऋषीनिति च्छेदः। उस्त्वर्थे।

**यतो ह्येव युञ्जन्ति ततो विमुञ्चन्ति। (श० ब्रा० १।१।२।८)**

यतो यत्र। ततस्तत्र। यत्रैव योगस्तत्रैव वियोगो न्याय्यः। नहि कर्णे युक्तः कट्या विमुच्यत इत्यर्थः। (सायणः)।

**यजमानो वै यज्ञपतिः। (श० ब्रा० १।१।२।१२। इत्यादिस्थलेषु)**

**यज्ञो वै विष्णुः। (श० ब्रा० १।१।२।१३। इत्यादिस्थलेषु)**

**(यज्ञो वै विष्णुः) स देवेभ्य इमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिः। इदमेव प्रथमेन पदेन पस्पार, अथेदमन्तरिक्षं द्वितीयेन, दिवमुत्तमेन। (श० ब्रा० १।१।२।१३)**

विक्रान्तिं विचक्रमे विक्रमणेन प्राप्तवानित्यर्थः। 'इदमेव' दृश्यमानं पृथिव्याख्यं स्थानम्। 'पस्पार' प्राप्तवान्। पालयामासेति सायणः, 'स्पृ प्रीतिपालनयोः' इति धातोः।

**पाङ्क्तो वै यज्ञः। (श० ब्रा० १।१।२।१६ इत्यादिस्थलेषु)**

यज्ञो हि धानाकरम्भादिपञ्चहविष्क इति पञ्चसंख्यायोगसाम्यात् पाङ्क्तः। धानाः, करम्भः, परिवापः, पुरोडाशः, पयस्येति पञ्च हवींषि। (सायणः)।

**सविता वै देवानां प्रसविता। (श० ब्रा० १।१।२।१७)**

**अश्विनावध्वर्यू। (श० ब्रा० १।१।२।१७)**

देवानामिति प्रकृतम्।

पूषा कामदुघः, अशनं पाणिभ्यामुपनिधाता। (श० ब्रा० १।१।२।१७)

भागं दोग्धीति भागदुघो भागप्रदः। "दुहः कब् घश्च" [ पा० ३।२।७० ] इति कब्घत्वे। अशनं भोज्यमन्नम्। उपनिधाता। उपनिधातुमुपस्थापयितुं शीलवान्। ताच्छीलिकस्तृन्।

सत्यं देवा अनृतं मनुष्याः। ( श० ब्रा० १।१।२।१७ )

यावतीभ्यो ह वै देवताभ्यो हवींषि गृह्यन्त ऋणामु हैव तास्तेन मन्यन्ते यदस्मै तं कामं समर्द्धयेयुर्यत्काम्या गृह्णाति। तस्माद्वै देवताया आदिशति। ( श० ब्रा० १।१।२।१९ )

अस्मै यजमानाय। यत्काम्या। यस्य फलस्येच्छया। यत्काम्येति यच्छब्दादिच्छार्थे "काम्यच" [ पा० ३।१।६ ] इति काम्यच्। तदन्तादकारप्रत्यये तृतीयाया लुक् [ तु० पा० ७।१।३६ ]।

यज्ञो वै स्वरहर्देवाः सूर्यः। ( श० ब्रा० १।१।२।२१ )

स्वःशब्देन यज्ञादिचतुष्टयमर्थजातमुच्यत इति भावः।

मध्यमभयम्। ( श० ब्रा० १।१।२।२३ )

यन्मध्यं तदभयं भयरहितं भवति। प्रान्तदेशे हि चोरव्याघ्रादिभयमिति सायणः।

उपस्थ इवैनदभार्षुरिति वा आहुर्यत् सुगुप्तं गोपायन्ति।
( श० ब्रा० १।१।२।२३ )

उपस्थे उत्सङ्गे। अभार्षुः भृतवन्तः। आहुर्लौकिकाः। सुगुप्तं सुष्ठु रक्षितं यथा भवति तथा।

अयं वै पवित्रं योऽयं पवते। ( श० ब्रा० १।१।३।२ )

योऽयं पवमानो वायुः।

वृत्रो ह वा इदं सर्वं वृत्वा शिश्ये यदिदमन्तरेण द्यावापृथिवी। स यदिदं सर्वं वृत्वा शिश्ये तस्माद् वृत्रो नाम। ( श० ब्रा० १।१।३।४ )

एते वा उत्पवितारो यत् सूर्यस्य रश्मयः। ( श० ब्रा० १।१।३।६ )

उत्पवितारः। उत्कृष्टं शोधकाः।

देव्यो ह्यापः। ( श० ब्रा० १।१।३।७ )

यज्ञो ह देवेभ्योऽपचक्राम । स कृष्णो भूत्वा चचार । तस्य देवा अनुविद्य त्वचमेवावच्छायाऽऽजह्रुः ॥ तस्य यानि शुक्लानि च कृष्णानि च लोमानि तान्यृचां च साम्नां च रूपम् । यानि शुक्लानि तानि साम्नां रूपम्, यानि कृष्णानि तान्यृचाम् । यदि वेतरथा । यान्येव कृष्णानि तानि साम्नां रूपम्, यानि शुक्लानि तान्यृचाम् । यान्येव बभ्रूणीव हरीणि तानि यजुषां रूपम् । सैषा त्रयी विद्या यज्ञः । तस्या एतच्छिल्पमेष वर्णस्तद्यत्कृष्णाजिनं भवति । ( श० ब्रा० १।१।४।१-३ )

कृष्णः कृष्णमृगः । अवच्छाय अपच्छिद्य 'छो छेदने' इति धातुः । बभ्रूणीव हरीणि । पिङ्गलवर्णानीव हरितवर्णानि । शिल्पं चित्रं रूपम् ।

सैषा त्रयी विद्या यज्ञः । ( श० ब्रा० १।१।४।३ )

त्रयी विद्या । ऋग्यजुःसामात्मिका । सैव यज्ञः, तत्साध्यत्वात् ।

इयं वै पृथिव्यदितिः । ( श० ब्रा० १।१।४।५ )

प्रति हि स्वः संजानीते । ( श० ब्रा० १।१।४।५ )

स्वः स्वकीयो जन आत्मीयं जनं प्रति संजानीते परस्परानुकूल्यं प्रकटयितुं संज्ञां करोति । ( सायणः ) ।

ब्राह्मणो हि रक्षसामपहन्ता । ( श० ब्रा० १।१।४।६ )

देवानवदित्यु हि हविर्गृह्यते । ( श० ब्रा० १।१।४।६ )

अवत् । अवतु तर्पयतु ।

तानि वा एतानि चत्वारि वाचः । एहीति ब्राह्मणस्य । आगह्याद्रवेति वैश्यस्य च राजन्यबन्धोश्च । आधावेति शूद्रस्य ।......एतद्धि यज्ञियतमम्, एतदु ह वै वाचः शान्ततमं यदेहीति । तस्मादेहीत्येव ब्रूयात् ।
(श० ब्रा० १।१।४।१२ )

चत्वारि रूपाणीति शेषः । राजन्यबन्धोः क्षत्रियजातेः । यज्ञियतमम् । अतिशयेन यज्ञार्हम् । प्रायेण यज्ञियमन्त्रेषु प्रयोगादिति भावः ।

भूयो हि मानुषी वाग्वदति । ( श० ब्रा० १।१।४ १६ )

भूयः । तिर्यग्वाचः सकाशाद्बहुतरम् ।

अयं वै वायुर्योऽयं पवते, एष वा इदं सर्वं विविनक्ति यदिदं किञ्च विविच्यते। ( श० ब्रा० १।१।४।२२ )

विविनक्ति पृथक्करोति।

त्रिवृद्धि यज्ञः। ( श० ब्रा० १।१।४।२३ इत्यादिस्थलेषु )

सवनत्रयादिरूपेण त्रिरावृत्तो हि यज्ञः। (सायणः)।

अग्निर्हि रक्षसामपहन्ता। ( श० ब्रा० १।२।१।६ )

बह्वी वै यजुःष्वाशीः। ( श० ब्रा० १।२।१।७ )

यजुर्मन्त्रेषु खलु बहुविधा फलप्रार्थना श्रूयते।

उभे वीर्ये। ( श० ब्रा० १।२।१।७ )

उभे। ब्रह्म च क्षत्रं च।

अनद्धा वै तद् यदिमाँल्लोकानति चतुर्थमस्ति वा न वा।
( श० ब्रा० १।२।१।१२ )

त्रीँल्लोकानतिक्रम्य चतुर्थं स्थानमस्ति वा न वेत्यप्रत्यक्षमेव। अनद्धा अप्रत्यक्षं संदिग्धं वा।

एतद्वै तेजिष्ठं तेजो यद् भृग्वङ्गिरसाम्। ( श० ब्रा० १।२।१।१३ )

तेजिष्ठम्। तेजस्वितमम्, अतिशयेन दीप्तम्।

अन्तरिक्षेण हीमे द्यावापृथिवी विष्टब्धे। ( श० ब्रा० १।२।१।१६ )

विष्टब्धे। विविधमधस्तादुपरिष्टाच्च धारिते।

देवान् धिनवदित्यु हि हविर्गृह्यते। ( श० ब्रा० १।२।१।१८ )

धिनवत् प्रीणयेत्। 'धिवि प्रीणनार्थः' इति धातुः।

मह्य इति ह वा एतासामेकं नाम यद् गवाम्। ( श० ब्रा० १।२।१।२२ )

मह्यः। मह्यन्ते पूज्यन्त इति। 'मह पूजायाम्' इति धातुः।

अर्धो ह वा एष आत्मनो यज्ञस्य यदाज्यम्। अर्धो यदिह हविर्भवति। (श० ब्रा० १।२।२।५)

आज्यं यज्ञस्यात्मनो यज्ञशरीरस्यार्द्धभागः। इतरोऽर्धः पुरोडाशादिहविः।

व्यृद्धं वै तद्यज्ञस्य यन्मानुषम्। (श० ब्रा० १।२।२।६ इत्यादिस्थलेषु)

व्यृद्धम्। विगतर्द्धिकम्।

शान्तिरापः। (श० ब्रा० १।२।२।११)

नग्न इव मुषित इव शयातै। (श० ब्रा० १।२।२।१६)

यथा खलु नग्नः स्वभावतो विवसनः। मुषितः चौरादिभिरपहृतवसनः। शयातै शयीत।

यथेदं ब्राह्मणो राजानमनुचरति। (श० ब्रा० १।२।३।२)

यथेदं यथेदानीम्।

नादक्षिणेन हविषा यजेत। आप्त्येषु ह यज्ञो मृष्टे, आप्त्या उ ह तस्मिन्मृजते योऽदक्षिणेन हविषा यजते। (श० ब्रा० १।२।३।४)

अदक्षिणेन दक्षिणारहितेन। आप्त्या अद्भ्यो जातास्त्रयः—एकतो द्वितस्त्रित इति। यज्ञो हि एनः पापम् आप्त्येषु मृष्टे संश्लेषयति। आप्त्याश्च तत्तस्मिन् संश्लेषयन्ति योऽदक्षिणेन हविषा यजते।

चतुर्धा विहितो ह वा अग्रेऽग्निरास। स यमग्रेऽग्निं होत्राय प्रावृणात स प्राधन्वत्। यं द्वितीयं प्रावृणात स प्रैवाधन्वत्। यं तृतीयं प्रावृणात स प्रैवाधन्वत्। अथ योऽयमेतर्ह्यग्निः स भीषा निलिल्ये। सोऽपः प्रविवेश। तं देवा अनुविद्य सहसैवाद्भ्य आनिन्युः। सोऽपोऽभितिष्ठेवावष्ठ्यूता स्थ या अप्रपदनं स्थ याभ्यो वो मामकामं नयन्तीति। तत आप्त्याः संबभूवुस्त्रितो द्वित एकतः॥१॥

त इन्द्रेण सह चेरुः, यथेदं ब्राह्मणो राजानमनुचरति। स यत्र त्रिशीर्षाणं त्वाष्ट्रं विश्वरूपं जघान तस्य हैतेऽपि वध्यस्य विदाञ्चक्रुः शश्वद्धैनं त्रित एव जघान। अत्यह तदिन्द्रोऽमुच्यत देवो हि सः॥२॥

त उ हैन ऊचुः। उपैवेम एनो गच्छन्तु येऽस्य वध्यस्यावेदिषुरिति। किमिति। यज्ञ एवैषु मृष्टामिति। तदेष्वेतद्यज्ञो मृष्टे यदेभ्यः पात्रीनिर्णेजनमङ्गुलिप्रणेजनं निनयन्ति॥३॥

त उ हाप्त्या ऊचुः। अत्येव वयमिदमस्मत्परो नयामेति। कमभीति। य एवादक्षिणेन हविषा यजाता इति। तस्मान्नादक्षिणेन हविषा यजेत। आप्त्येषु ह यज्ञो मृष्टे। आप्त्या उ ह तस्मिन्मृजते योऽदक्षिणेन हविषा यजते॥४॥ (श० ब्रा० १।२।३।१-४)

प्राधन्वत् प्रागच्छत् । अम्रियतेत्यर्थः । 'धवि गमने' इति धातुः । निलिल्ये निलीनोऽन्तर्हितो बभूव । अनुविद्य ज्ञात्वा । अभि तिष्ठेव । अभिलक्ष्य ष्ठीवनं कृतवान् । 'ष्ठिवु निरसने' इति धातुः । अप्रपदनमनाश्रयभूताः ॥ १ ॥ शश्वत् तत्कालमेव । अत्यमुच्यत । हननजनितात् पापादतिमुक्तोऽभवत् ॥ २ ॥ एते लौकिका जनाः । मृष्टाम् मृजीत । तदेतत् । विश्वरूपहननजनितमेनः । मृष्टे संश्लेषयति । 'मृजू शुद्धौ' । एषु आप्त्येषु ॥ ३ ॥ परः परस्तात् । यजातै यजेत ॥ ४ ॥

पशुर्ह वा एष आलभ्यते यत्पुरोडाशः ॥५॥

पुरुषं ह वै देवा अग्रे पशुमालेभिरे । तस्यालब्धस्य मेधोऽपचक्राम । सोऽश्वं प्रविवेश । तेऽश्वमालभन्त । तस्यालब्धस्य मेधोऽपचक्राम । स गां प्रविवेश । ते गामालभन्त । तस्यालब्धस्य मेधोऽपचक्राम । सोऽविं प्रविवेश । तेऽविमालभन्त । तस्यालब्धस्य मेधोऽपचक्राम । सोऽजं प्रविवेश । तेऽजमालभन्त । तस्यालब्धस्य मेधोऽपचक्राम ॥६॥

स इमां पृथिवीं प्रविवेश । तं खनन्त इवान्वीषुः । तमन्वविन्दन् । ताविमौ व्रीहियवौ । तस्मादप्येतावेतर्हि खनन्त इवैवानुविन्दन्ति । स यावद्वीर्यवद्ध वा अस्यैते सर्वे पशव आलब्धाः स्युस्तावद्वीर्यवद्धास्य हविरेव भवति य एवमेतद्वेद । अत्रो सा सम्पद्यदाहुः पाङ्क्तः पशुरिति ॥७॥

यदा पिष्टान्यथ लोमानि भवन्ति । यदाप आनयत्यथ त्वग्भवति । यदा संयौत्यथ मांसं भवति । सन्तत इव हि स तर्हि भवति, सन्ततमिव हि मांसम् । यदा शृतोऽथास्थि भवति । दारुण इव हि स तर्हि भवति, दारुणमिव ह्यस्थि । अथ यदुद्वासयिष्यन्नभिघारयति तं मज्जानं दधाति । एषो सा सम्पद्यदाहुः पाङ्क्तः पशुरिति ॥८॥

स यं पुरुषमालभन्त स किम्पुरुषोऽभवत् । यावश्वं च गां च तौ गौरश्च गवयश्चाभवताम् । यमविमालभन्त स उष्ट्रोऽभवत् । यमजमालभन्त स शरभोऽभवत् । तस्मादेतेषां पशूनां नाशितव्यमपक्रान्तमेधा ह्येते पशवः ॥ ९ ॥

( श० ब्रा० १।२।३ ५-९ )

संस्कृतस्य पुरोडाशस्य पशुत्वेनात्र स्तुतिः क्रियते । मेधो यज्ञियः सारांशः । अन्वीषुरन्वैच्छन् । यावद्वीर्यवत् । यत्परिमाणविशिष्टवीर्यवद् हविः । अत्रो अत्रापि पुरोडाशे ।

एतद्वै तेजिष्ठं तेजो यदयम्। योऽयं पवते। एष हीमाँल्लोकाँस्तिर्यङ् नु पवते। ( श० ब्रा० १।२।४।७ )

एष वायुः।

अस्यां हीमे सर्वे लोकाः प्रतिष्ठिताः। ( श० ब्रा० १।२।४।१४ )

अस्यां पृथिव्याम्।

तद्ध्यनपक्रमि यद् व्रजेऽन्तः। ( श० ब्रा० १।२।४।१६ )

व्रजे गोष्ठे। अनपक्रमि इतस्ततो गमनरहितम्।

त्रयो वा इमे लोकाः।......अद्धा वै तद्यदिमे लोकाः।
( श० ब्रा० १।२।४।२० )

अद्धा वै प्रत्यक्षमेव।

अनद्धो तद्यत्तूष्णीम्। ( श० ब्रा० १।२।४।२१ )

अनद्धा उ। अप्रत्यक्षमस्पष्टं सन्दिग्धमेव वा।

यावती वेदिस्तावती पृथिवीति। एतया हीमां सर्वां समविन्दन्त। एवं ह वा इमां सर्वां सपत्नानां संवृङ्क्ते, निर्भजत्यस्यै सपत्नान् य एवमेतद्वेद।
( श० ब्रा० १।२।५।७ )

यज्ञानुष्ठानस्य सर्वसम्पत्तिलाभहेतुत्वेन यज्ञवेदेः पृथिव्यात्मकत्वमत्र प्रतिपाद्यते। संवृङ्क्ते। अपहरति यजमानः। 'सपत्नान्' शत्रून् 'अस्यै' अस्याः पृथिव्याः 'निर्भजति' निर्भक्तान् भागरहितान् करोतीत्यर्थः।

षड् वा ऋतवः संवत्सरस्य। संवत्सरो यज्ञः प्रजापतिः।
(श० ब्रा० १।२।५।१२)

एतावान्वै पुरुषः। ( श० ब्रा० १।२।५।१४ )

एतावान् व्याममात्रः। व्यामः पुनः प्रसारितकरद्वयान्तरालक्षणः।

योषा वै वेदिर्वृषाग्निः। ( श० ब्रा० १।२।५।१५ )

परिगृह्य वै योषा वृषाणं शेते। ( श० ब्रा० १।२।५।१५ )

लोके हि योषित् पुमांसमंसाभ्यां परिष्वज्य शेते।

एवमिव हि योषां प्रशंसन्ति। पृथुश्रोणिर्विमृष्टान्तरांसा मध्ये संग्राह्येति। ( श० ब्रा० १।२।५।१६ )

विमृष्टान्तरांसा। श्रोणितो विमृष्टं न्यूनमन्तरमवकाशो ययोरतौ विमृष्टान्तरौ, तथाविधावंसौ यस्याः सा तथोक्ता। मध्ये संग्राह्या मध्येदेशे हस्तेन संग्रहीतुं शक्या, कृशोदरीति यावत्।

प्राची हि देवानां दिक्।...उदीची हि मनुष्याणां दिक्।...एषा वै दिक् पितॄणाम्। (श० ब्रा० १।२।५।१७)

एषा दिक्=दक्षिणा।

तस्मादाहुश्चन्द्रमस्यस्यै पृथिव्यै देवयजनमिति। (श० ब्रा० १।२।५।१८)

संग्रामो वै क्रूरम्। संग्रामे हि क्रूरं क्रियते—हतः पुरुषो हतोऽश्वः शेते। (श० ब्रा० १।२।५।१९)

इतः प्रदानाद्धि देवा उपजीवन्ति। (श० ब्रा० १।२।५।२४)

इतः प्रदानात्। अस्माल्लोकात्प्रदीयमानं यद्धविस्तस्मात्। प्रदानमित्यत्र कर्मणि ल्युट्।

स होवाच बृहस्पतिराङ्गिरसः—यद्वै शुश्रुम देवानां परिपूतं तदेष यज्ञो भवति। (श० ब्रा० १।२।५।२६)

यद्वै देवानुद्दिश्य क्रियते स एव यज्ञ इति शुश्रुम इति तात्पर्यम्।

यथा वै देवानां चरणं तद्वा अनु मनुष्याणाम्। तस्माद्यदा मनुष्याणां परिवेषणमुपक्लृप्तं भवति॥ अथ पात्राणि निर्णेनिजति। तैर्निर्णिज्य परिवेविषति। एवं वा एष देवानां यज्ञो भवति यच्छृतानि हवींषि क्लृप्ता वेदिः। तेषामेतान्येव पात्राणि यत्स्रुचः॥ स यत्संमार्ष्टि निर्णेनेक्त्येवैना:, एतन्निर्णिक्ताभिः प्रचराणीति। तद्वै द्वयेनैव देवेभ्यो निर्णेनिजत्येकेन मनुष्येभ्यः। अद्भिश्च ब्रह्मणा च देवेभ्यः। आपो हि कुशा ब्रह्म यजुः। एकेनैव मनुष्येभ्योऽद्भिरेव। एवम्वेतन्नाना भवति॥ (श० ब्रा० १।३।१।१-३)

चरणं वर्तनम्। देवानां चरणं मनुष्याणां चरणानुसारं विद्यत इति भावः।

तस्मादितीवेमानि लोमानि, इतीवेमानि। (श० ब्रा० १।३।१।७)

अरत्नेरुपरिभागस्य लोमानि 'इतीव' एवमेव प्राचीनानि भवन्ति। पृष्ठभागस्य च लोमानि 'इतीव' इत्थं प्रतीचीनानि भवन्तीत्यर्थः। अयमर्थस्तैत्तिरीयके विस्पष्टमाम्नायते—"तस्मादरत्नौ प्राञ्च्युपरिष्टाल्लोमानि प्रत्यञ्च्यधस्तात्" [तै० ब्रा० ३।३।१।४] इति।—(सायणः)।

यथावमर्शं निर्णिज्यानवमर्शमुत्तमं परिक्षालयेदेवम्…।

( श० ब्रा० १।३।१।८ )

यथा खलु कांस्यादिकं लौकिकं पात्रमवमृश्यावमृश्य 'निर्णिज्य' प्रक्षाल्य 'उत्तमम्' चरमम्। क्रियाविशेषणमेतत्। अन्ततः 'अनवमर्शम्' अवमर्शनमकृत्वैव केवलमुदकेनैन 'परितः' अन्तरतो बाह्यतश्च सर्वतः क्षालयेत्, एवम्—

तस्माद्यद्यपि बह्व्य इव स्त्रियः सार्धं यन्ति य एव तास्वपि कुमारक इव पुमान् भवति स एव तत्र प्रथम एत्यनूच्य इतराः। ( श० ब्रा० १।३।१।६ )

बह्व्योऽपि स्त्रियः संभूय गच्छन्त्यो बालमपि पुमांसं पुरस्कृत्य तस्य पश्चात् प्रयन्तीत्यर्थः।

यथा यस्मा अशनमाहरिष्यन् स्यात्तं पात्रनिर्णेजनेनाभिव्युक्षेदेवं तत्…।

( श० ब्रा० १।३।१।१० )

पात्रनिर्णेजनेन पात्रप्रक्षालनोदकेन। अभिव्युक्षेत् अभ्युक्षेत्। नहि लोके पात्रप्रक्षालनोदकेन भोक्ताभ्युक्ष्यते।

( तदु तथा न कुर्यात् ) यथा यस्मा अशनमाहरेत्तं पात्रनिर्णेजनं पाययेदेवं तत्…। ( श० ब्रा० १।३।१।११ )

जघनार्धो वा एष यज्ञस्य यत्पत्नी। ( श० ब्रा० १।३।१।१२ )

जघनार्धोऽपरार्धः।

योक्त्रेण हि योग्यं युञ्जन्ति। ( श० ब्रा० १।३।१।१३ )

रथाद्यवयवस्य युगस्य धुरि बलीवर्दादियोजनार्थं दाम योक्त्रम्। तेन हि 'योग्यं' योजनीयमनडुदश्वादिकं संनह्यन्ति। एवमेव योग्यपुरुष एव कार्यभारः प्रक्षेपणीय इति भावः।

अस्ति वै पत्न्या अमेध्यं यदवाचीनं नाभेः। ( श० ब्रा० १।३।१।१३ )

अवाचीनमधस्तात्।

इयं वै पृथिव्यदितिः। सेयं देवानां पत्नी। ( श० ब्रा० १।३।१।१५)

तदु होवाच याज्ञवल्क्यः…कस्तदाद्रियेत यत्परःपुंसा वा पत्नी स्यात्। ( श० ब्रा० १।३।१।२१ )

परःपुंसा। स्वपुरुषादन्यत्र राजवीथ्यादौ पुरुषसमूहं प्राप्ता परःपुंसेत्युच्यते। समासान्तोऽच्प्रत्ययः। पत्नी परःपुंसेत्येतदपि दूषणं को वा आद्रियेतेत्यर्थः। ( सायणः )।

इदं हि यदा वर्षत्यथौषधयो जायन्ते। ओषधीर्जग्ध्वाप: पीत्वा तत एष रस: संभवति। (श० ब्रा० १।३।१।२५)

एष रसः। पयोरूपो रसः।

तदु होवाच याज्ञवल्क्य:। कथं नु न स्वयमध्वर्यवो भवन्ति, कथं स्वयं नान्वाहुर्यत्र भूयस्य इवाशिष: क्रियन्ते।'''यां वै कां च यज्ञ ऋत्विज आशिषमाशासते यजमानस्यैव सा। (श० ब्रा० १।३ १।२६)

भवन्ति। यजमाना इति शेष:। नान्वाहुः। स्वयमेव होतारो भूत्वा याज्यानुवाक्यादीनि नानुब्रूयुः। दक्षिणाभि: परिक्रीतत्वादृत्विग्भिर्यत्फलमाशास्यते तद् यजमानस्यैवेति भावः।

सत्यं वै चक्षु:। सत्यं हि वै चक्षु:। तस्माद्यदिदानीं द्वौ विवदमानावेयाताम्—अहमदर्शमहमश्रौषमिति, य एव ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम। (श० ब्रा० १।३।१।२७)

सत्य एव मन्त्र:। (श० ब्रा० १।३।१।२८)

सत्यो यथार्थ:।

पुरुषो वै यज्ञ:। पुरुषस्तेन यज्ञो यदेनं पुरुषस्तनुते। एष वै तायमानो यावानेव पुरुषस्तावान् विधीयते। तस्मात्पुरुषो यज्ञ:।

(श० ब्रा० १।३।२।१)

आत्मन एवेमानि सर्वाण्यङ्गानि प्रभवन्ति। (श० ब्रा० १।३।२।२)

आत्मनो मध्यदेहात्। इमान्यङ्गानि। परितो वर्तमानानि हस्तपादादीन्यङ्गानि प्रभवन्ति उत्पद्यन्ते।

सोऽयं प्राण: सर्वाण्यङ्गान्यनु संचरति। (श० ब्रा० १।३।२।३)

अनुसंचरति। नाडीभिश्चरन् क्रमेण व्याप्नोतीत्यर्थ:।

अस्या एवेमे सर्वे लोका: प्रभवन्ति। (श० ब्रा० १।३।२।४)

अस्या: पृथिव्या:।

सोऽयमिमान् सर्वान् लोकाननु पवते। (श० ब्रा० १।३।२।५)

अयं वायुः। पवते संचरति।

स एष यज्ञस्तायमानो देवेभ्यस्तायत ऋतुभ्यश्छन्दोभ्यः। यद्धवि-स्तद्देवानां यत्सोमो राजा यत्पुरोडाशः।…अथ यान्याज्यानि गृह्यन्त ऋतुभ्यश्चैव तानि छन्दोभ्यश्च गृह्यन्ते। (श० ब्रा० १।३।२।६-७)

तायमानो विस्तार्यमाणः।

तद्धि समृद्धं यत्राचा कनीयान्, आद्यो भूयान्। (श० ब्रा० १।३।२।१२)

यत्खलु भोक्तृणामल्पीयस्त्वं भोग्यवस्तुजातस्य च भूयस्त्वं तत्खलु समृद्धमित्यर्थः।

तस्मादुत राजाऽपारां विशं प्रावसायाप्येकवेश्मनैव जिनाति। त्वद्यथा त्वत्कामयते तथा सचत एतेनो ह तद्वीर्येण। (श० ब्रा० १।३।२।१४)

तस्माद् आत्मनो बलसहितत्वात् प्रजायाश्च निर्बलत्वात्। अपारां निरवधिकाम्। विशं राज्यम्। प्रावसाय प्राप्य। एकवेश्मनैव एकगृहात्मनैव। जिनाति जयति स्वाधीनं करोति। तत्र च राज्ये 'त्वत् त्वत्' एकमेकं वस्तु यथा कामयते तथा 'सचते' समवैति, प्राप्नोति। 'त्वत्' शब्द एकशब्दसमानार्थः। यद्वा त्वदिति निपातश्चार्थे। तत्र—जिनाति च यथा च कामयते—इति योज्यम्। तदेतद्राज्ञः सामर्थ्यं वीर्येणैव जनितमित्यभिप्रायः।

तस्मादिमा विशः क्षत्रियाय बलिं हरन्ति।…तस्मादु क्षत्रियस्यैव वशे सति वैश्यं पशव उपतिष्ठन्ते।…तस्माद्यदैत क्षत्रियः कामयतेऽथाह वैश्यमपि यत्ते परो निहितं तदाहरेति। तं जिनाति। त्वद्यथा त्वत्कामयते तथा सचत एतेनो ह तद्वीर्येण। (श० ब्रा० १।३।२।१५)

'क्षत्रियस्य वशे' रक्षार्थं क्षत्रियाधीनत्वे सत्येव। वैश्यं पशव उपतिष्ठन्ते। वैश्यस्य धनसमृद्धिर्भवतीत्यर्थः। 'परः' परस्ताद् गोप्यस्थाने। 'यत्' धनम्। जिनाति धनापहारेण हीनं करोति। 'त्वत् त्वत्' एकमेकं (तत्तदिति वा) वस्तु। अथवा 'त्वद्' इति चार्थे निपातः। 'सचते' समवैति, प्राप्नोति। तदेतत्सामर्थ्यं राज्ञो वीर्येणैव जनितमिति तात्पर्यम्।

वाचो वा इदं सर्वं प्रभवति। (श० ब्रा० १।३।२।१६)

वाचः शब्दस्य सकाशात्। इदं सर्वमर्थजातम्। अत एव जगतः शब्दविवर्तत्वम्, शब्दानुवेधात्तत्कार्यत्वं चार्थप्रपञ्चस्योच्यते।

एतद्वै देवानां प्रियतमं धाम यदाज्यम्। (श० ब्रा० १।३।२।१७)

धामशब्दस्तेजोवाची। तद्धेतुत्वादाज्यमपि धामेत्युच्यते। (सायणः)।

वज्रो ह्याज्यम्। ( श० ब्रा० १।३।२।१७ )

आज्यं वज्रः। "घृतं खलु वै देवा वज्रं कृत्वा सोममघ्नन्" इति श्रुतेः। ( सायणः )। अत्र श० ब्रा० ४।१।४।८ द्रष्टव्यम्।

पुरस्ताद् ध्ययं स्तुपः। ( श० ब्रा० १।३।३।५ )

स्तुपः केशसंघातः। पिण्डीभावेन बद्धो मानुषः 'स्तुपः' केशसंघातः शिरसः पूर्वभागे हि भवतीत्यर्थः।

दक्षिणत इव हीयं नीविः।......अभिच्छन्नेव हीयं नीविः।

( श० ब्रा० १।३।३।६ )

लोके हि वाससः परिधाने दक्षिणपार्श्वे एव हि नीविः परिकल्प्यते। अभिच्छन्ना। उपरिवाससा आवृता।

योषा वै वेदिः। ( श० ब्रा० १।३।३।८ )

यावती वै वेदिस्तावती पृथिवी। ( श० ब्रा० १।३।३।९ )

वेदिर्वै पृथिवीरूपा तत्स्थाना वा।

यत्र वा अस्यै बहुलतमा ओषधयस्तदस्या उपजीवनीयतमम्।

( श० ब्रा० १।३।३ १० )

'अस्यै' षष्ठ्यर्थे चतुर्थी। अस्याः पृथिव्याः संबन्धिनि 'यत्र' स्थाने।

अधरमूला इव हीमा अस्यां पृथिव्यामोषधयः प्रतिष्ठिताः।

( श० ब्रा० १।३।३।१० )

शिरो वै यज्ञस्याऽऽवनीयः। पूर्वोऽर्द्धो वै शिरः। (श०ब्रा० १।३।३।१२)

पूर्वोऽर्द्धः पूर्वभागः।

इमां वै ते पृथिवीं प्राविशन्।......एतानि वै तेषामग्नीनां नामानि यद्भुवपतिर्भुवनपतिर्भूतानां पतिः। (श० ब्रा० १।३।३।१६–१७)

ते। प्रगता विनष्टास्तिरोहिता वा अग्नयः। ते च त्रिसंख्याका इति—"त्रीन् पूर्वान् प्रावृद्ध्वं ते प्राधन्विषुः" [श० ब्रा० १।३।३।१३] इत्यत्र प्रतिपादितम्।

ब्रह्म वै पलाशः। ( श० ब्रा० १।३।३।१९ )

ब्रह्माग्निः। (श० ब्रा० १।३।३।१९ )

एते हि वृक्षा यज्ञियाः। ( श० ब्रा० १।३।३।२० )

एते। पलाश-विकङ्कत-कार्ष्मर्य-बिल्व-खदिरोदुम्बरनामान एतेनैव क्रमेण पूर्वमुक्ताः।

गायत्री समिद्धाऽन्यानि च्छन्दांसि समिन्धे। छन्दांसि समिद्धानि देवेभ्यो यज्ञं वहन्ति। ( श० ब्रा० १।३।४।६ )

वसन्तः समिद्धोऽन्यानृतून् समिन्धे। ऋतवः समिद्धाः प्रजाश्च प्रजनयन्ति, ओषधीश्च पचन्ति। ( श० ब्रा० १।३।४।७ )

सूर्यो हि नाष्ट्राणां रक्षसामपहन्ता। ( श० ब्रा० १।३।४।८ )

ब्राह्मणः समिद्धो देवेभ्यो यज्ञं वहति। ( श० ब्रा० १।३।४।९ )

एते वै त्रया देवा यद्वसवो रुद्रा आदित्याः।

( श० ब्रा० १।३।४।१२। इत्यादिस्थलेषु )

त्रया देवा इति संघविवक्षया।

तस्मादुपर्यासीनं क्षत्रियमधस्तादिमाः प्रजा उपासते।

(श० ब्रा० १।३।४।१५ )

यज्ञो वा ऋतस्य योनिः···यज्ञो वै विष्णुः। (श० ब्रा० १।३।४।१६ )

गायत्रं वा अग्नेश्छन्दः।···वीर्यं गायत्री। ब्रह्म गायत्री।

( श० ब्रा० १।३।५।४ )

ब्रह्म गायत्री, क्षत्रं त्रिष्टुप्। ( श० ब्रा० १।३।५।५ )

त्रिवृत्प्रायणा हि यज्ञाः, त्रिवृदुदयनाः। ( श० ब्रा० १।३।५।६ )

यज्ञा हि प्रारम्भपरिसमाप्त्योस्त्रिरावृत्तियुक्ताः।

अर्धमासशो वै संवत्सरो भवन्नेति। ( श० ब्रा० १।३।५।८ )

द्वादश वै मासाः संवत्सरस्य। पञ्चर्तवः। एष एव प्रजापतिः सप्तदशः।

(श० ब्रा० १।३।५।१०)

सप्तदशः सप्तदशावयः।

सर्वं वै प्रजापतिः। (श० ब्रा० १।३।५।१०)

अनिरुक्तं वा उपांशु। सर्वं वा अनिरुक्तम्। (श० ब्रा० १।३।५।१०)

त्रयो वा इमे लोकाः। (श० ब्रा० १।३।५।१३)

त्रय इमे पुरुषे प्राणाः। (श० ब्रा० १।३।५।१३)

त्रयः प्राणाः। प्राणापानव्यानात्मकाः।

गायत्री वै प्राणः। (श० ब्रा० १।३।५।१५)

नासामा यज्ञोऽस्तीति वा आहुः। न वा अहिङ्कृत्य साम गीयते। स यद्धिङ्करोति तद्धिङ्कारस्य रूपं क्रियते। प्रणवेनैव साम्नो रूपमुपगच्छति। ओ३मो३मित्येतेनो हास्यैष सर्व एव ससामा यज्ञो भवति।

(श० ब्रा० १।४।१।१)

सामिधेनीयुक्तौ हिङ्कारप्रणवावुद्दिश्यैतदुच्यते। सामरहितस्यायज्ञत्वात्, हिङ्कार-प्रणवयोः सामावयवत्वात्, सामिधेनीषु तत्करणेन सामिधेनीयुक्तः सर्वोऽपि यज्ञः सामवान् संपद्यत इति भावः।

वाक् च वै प्राणश्च मिथुनम्। (श० ब्रा० १।४।१।२)

सर्वं वा इदमेति च प्रेति च। (श० ब्रा० १।४।१।६)

सर्वमपीदं जगत् प्रगमनस्वभावमावर्तनस्वभावं चेत्यर्थः। अस्मिन् विषयेऽत्रैव ब्राह्मणे उदाहरणे। तद्यथा—"प्रेति वै रेतः सिच्यते, एति प्रजायते। प्रेति पशवो वितिष्ठन्ते, एति समावर्तन्ते" [शत० ब्रा० १।४।१।६] इति। अथवा क्रिया प्रतिक्रिया चात्र जगति सर्वत्र स्वभावतो दृश्येते इति भावः।

तां ह स्म तां पुरा ब्राह्मणा न तरन्त्यनतिदग्धाग्निना वैश्वानरेणेति॥ तत एतर्हि प्राचीनं बहवो ब्राह्मणाः। तद्धाऽक्षेत्रतरमिवास, स्रावितरमिव, अस्वदितमिवाग्निना वैश्वानरेणेति॥ तदु हैतर्हि क्षेत्रतरमिव, ब्राह्मणा उ हि नूनमेनद्यज्ञैरसिष्वदन्॥······सैषाप्येतर्हि कोसलविदेहानां मर्यादा।

(श० ब्रा० १।४।१।१४–१७)

विदेघमाथवाख्यायिकागत एष प्रबन्धः। ताम्। सदानीरां नदीम्। तरन्ति स्पृशन्तीति सायणः। ततस्तस्याः सदानीरायाः। प्राचीनं प्राग्देशम्। एतर्हि इदानीम्। प्राचीनमित्यत्र अत्यन्तसंयोगे द्वितीया। प्राग्देशः सर्वोऽपि ब्राह्मणावास इत्यर्थः। तत् स्थानम्। अक्षेत्रतरं निवासायोग्यम्। स्रावि स्रवणशीलं फलप्रदानासमर्थम्। असिष्वदन्। आस्वादितमकुर्वत। सैषा। सदानीरा नदी।

सर्वं वा अनिरुक्तम्। (श० ब्रा० १।४।१।२१)

यन्नामविशेषैरनिरुक्तं तत्सर्वात्मकमित्यर्थः। (सायणः)।

समन्तिकमिव ह वा इमेऽग्रे लोका आसुरित्युन्मृश्या हैव द्यौरास ।
(श० ब्रा० १।४।१।२२)

समन्तिकं सन्निकृष्टतरम् । उन्मृश्या हस्तस्पृश्येव । आस बभूव ।

यविष्ठो ह्यग्निः । (श० ब्रा० १।४।१।२६)

यविष्ठः । युवतमो नित्यतरुणः । (सायणः) ।

अनिरुक्तो ह्येष लोकः । (श० ब्रा० १।४।१।२६)

एष लोकः । अन्तरिक्षलोकः ।

अदो वै पृथु यस्मिन् देवाः । एतच्छ्रवाय्यम् ॥...अदो वै बृहत् ।... एतत्सुवीर्यम् । (श० ब्रा० १।४।१।२७-२८)

अदः । द्युलोकः । श्रवाय्यम् । श्रवणीयं प्रशस्यम् ।

यद्वै नेत्यृचि ओमिति तत् । (श० ब्रा० १।४।१।३०)

"अश्वो न देववाहनः" [ऋग्० ३।२७।१४] इत्युदाहरणमत्र ।

इन्द्रो वै यज्ञस्य देवता । (श० ब्रा० १।४।१।३३)

यद्वै यज्ञस्यातिरिक्तं द्विषन्तं हास्य तद् भ्रातृव्यमभ्यतिरिच्यते ।
(श० ब्रा० १।४।१।३८)

अतिरिक्तं व्यतिरिक्तम् । तद् द्विषन्तं भ्रातृव्यमभ्यतिरिच्यते । तत् शत्रुवर्धनहेतुरित्यर्थः ।

एष हि हव्यवाहनो यदग्निः । (श० ब्रा० १।४।१।३९)

यथेदमप्येतर्हि ज्ञातीनां यं गरिष्ठे युञ्जन्ति तमुपमदन्ति वीर्यवान् वै त्वमसि, अलं वै त्वमेतस्मा असीति । (श० ब्रा० १।४।२।१)

गरिष्ठे गुरुतमे कार्ये । उपमदन्ति स्तुवन्ति ।

एष हि देवेभ्यो हव्यं भरति तस्माद्भरतोऽग्निरित्याहुः । एष उ वा इमाः प्रजाः प्राणो भूत्वा बिभर्त्ति तस्माद्वेवाह भारतेति । (श० ब्रा० १।४।२।२)

परस्ताद्ध्यर्वाच्यः प्रजाः प्रजायन्ते ।......इदं हि पितैवाग्रेऽथ पुत्रोऽथ पौत्रः । (श० ब्रा० १।१४।२।४)

पूर्वंपूर्वंपुरुषमारभ्यैवार्वाच्यः प्रजाः प्रजायन्ते । पिता, पुत्रः, पौत्र इत्यनेन क्रमेणोत्पत्तिरिति यत् 'इदं हि' लोकप्रसिद्धम् ।

न ह्येतं रक्षांसि तरन्ति। तस्मादाहातूर्तो होतेति।
(श० ब्रा० १।४।२।१२)

एतमग्निम्।

सर्वं ह्येष पाप्मानं तरति। तस्मादाह तूर्णिर्हव्यवाडिति।
(श० ब्रा० १।४।२।१२)

एषोऽग्निः।

देवपात्रं वा एष यदग्निः। तस्मादग्नौ सर्वेभ्यो देवेभ्यो जुह्वति।
(श० ब्रा० १।४।२।१३)

प्रयाजानुयाजा वै देवा आज्यपाः।
( श० ब्रा० १।४।२।१७। इत्यादिस्थलेषु )

कर्मवाचिना प्रयाजानुयाजशब्देन तत्संबन्धिनो देवा लक्ष्यन्ते। तेषामाज्यमेव हि भागः। ( सायणः )।

वाग्वा अस्य स्वो महिमा। (श० ब्रा० १।४।२।१७)

अस्याग्नेः।

यो ह वा अग्निः सामिधेनीभिः समिद्धः, अतितरां ह वै स इतरस्मादग्नेस्तपति, अनवधृष्यो हि भवति, अनवमृश्यः। (श०ब्रा०१।४।३।१)

अनवधृष्यः। घर्षितुं हिंसितुं न शक्यः। अनवमृश्यः। मर्शितुं स्प्रष्टुं न शक्यः।

स यथा हैवाग्निः सामिधेनीभिः समिद्धस्तपति, एवं हैव ब्राह्मणः सामिधेनीर्विद्वाननुब्रुवंस्तपति। अनवधृष्यो हि भवति, अनवमृश्यः।
(श० ब्रा० १।४।३।२)

मनश्च ह वै वाक् च युजौ देवेभ्यो यज्ञं वहतः॥ स यदुपांशु क्रियते तन्मनो देवेभ्यो यज्ञं वहति। अथ यद्वाचा निरुक्तं क्रियते तद्वाग् देवेभ्यो यज्ञं वहति। (श० ब्रा० १।४।४।१-२)

युजौ। मिथुनीभूतौ सन्तौ। यज्ञं यज्ञसंबन्धि हविः।

अनिरुक्तं हि मनः। अनिरुक्तं ह्येतद्यत् तूष्णीम्। (श०ब्रा०१।४।४।५)

निरुक्ता हि वाक्। निरुक्तो हि मन्त्रः। (श०ब्रा० १।४।४।६)

वाग्वै मनसो ह्रसीयसी। अपरिमिततरमिव हि मनः। परिमिततरेव हि वाक्। (श० ब्रा० १।४।४।७)

उच्छ्रितमिव हि वीर्यम्। (श० ब्रा० १।४।४।८)

शीर्ष्णो हीयमधि वाग्वदति। (श०ब्रा० १।४।४।११)

वाग् हि शीर्ष्ण उपरि ताल्वोष्ठपुटादिव्यापारेण शब्दमुच्चारयति। (सायणः)।

परिक्रामं हि योग्यं युञ्जन्ति। (श० ब्रा० १।४।४।१४)

परिक्रामम्। परिक्रम्य परिक्रम्य। योग्यमश्वादिकम्।

तद्यथा युक्त्वा प्राजेत् प्रेहि वहेति। एवमेवैतत् कशयोपक्षिपति। (श० ब्रा० १।४।४।१५)

युक्त्वा युगधुरेऽनड्वाहं संयोज्य। प्राजेत् प्रेरयेत्। प्रेहि प्रगच्छ। कशया ताडनेन।

श्रीर्वै शिरः। श्रीर्हि वै शिरः। तस्माद्योऽर्द्धस्य श्रेष्ठो भवत्यसावमुष्यार्द्धस्य शिर इत्याहुः। (श०ब्रा० १।४।५।५)

अर्द्धस्य। देशभागस्य ग्रामादेः। लोके हि श्रीमतः शिरःपदेन व्यवहारो भवतीति तात्पर्यम्।

अथातो मनसश्चैव वाचश्च अहंभद्र उदितम्। मनश्च ह वै वाक्चाहंभद्र ऊदाते॥ तद्ध मन उवाच। अहमेव त्वच्छ्रेयोऽस्मि। न वै मया त्वं किञ्चनानभिगतं वदसि। सा यन्मम त्वं कृतानुकरानुवर्त्मास्यहमेव त्वच्छ्रेयोऽस्मीति॥ अथ ह वागुवाच। अहमेव त्वच्छ्रेयस्यस्मि। यद्वै त्वं वेत्थाहं तद्विज्ञपयाम्यहं संज्ञपयामीति॥ ते प्रजापतिं प्रति प्रश्नमेयतुः। स प्रजापतिर्मनस एवानूवाच। मन एव त्वच्छ्रेयः। मनसो वै त्वं कृतानुकरानुवर्त्मासि। श्रेयसो वै पापीयान् कृतानुकरोऽनुवर्त्मा भवतीति॥ सा ह वाक् परोक्ता विसिष्मिये। तस्यै गर्भः पपात। सा ह वाक् प्रजापतिमुवाच। अहव्यवाडेवाहं तुभ्यं भूयासं यां मा परावोच इति। तस्माद् यत्किञ्च प्राजापत्यं यज्ञे क्रियते, उपांश्वेव तत् क्रियते। (श० ब्रा० १।४।५।८-१२)

अहंभद्रे। अहमेव भद्रः, अहमेव भद्र इति स्वस्वोत्कर्षविषये। उदितम्। यदुक्तं वचनं तदधिक्रियत इत्यर्थः। ऊदाते विवादं चक्रतुः। अनभिगतमविषयीकृतम्। कृतानुकरा। मया यत्कृतं तदेवानुकुर्वती। अनुवर्त्मा अनुगन्त्री। प्रश्नं प्रति प्रश्नार्थम्।

अनूवाच। अनुकूलमुवाच। 'श्रेयसो वा' इत्यादिना लोकप्रसिद्धिं दर्शयति। लोके हि पापीयान् अवरो जनः श्रेयसः कृतानुकरोऽनुवर्त्मा च भवति। परोक्ता प्रजापतिना पराजितत्वेनोक्ता सती। विसिष्मिये विगतस्मया भग्नवीर्या बभूव। गर्भः देवमनुष्यादीनामुत्पत्तिहेतुः (सायणः)। 'गर्भः पपात' इत्यस्य तस्या गर्वो गत इत्यर्थो वा। परावोचः। पराजितत्वेनोक्तवानसि।

श्रेयसो वै पापीयान् कृतानुकरोऽनुवर्त्मा भवतीति।

(श० ब्रा० १।४।५।११)

पापीयानवरो जनः श्रेयसः कृतानुकरोऽनुवर्त्मा भवतीति हि लोके दृश्यते। कृतानुकरः। श्रेयसा यत् कृतं तदेवानुकरोति। अनुवर्त्मा अनुगामी।

तस्मादप्यात्रेय्या योषितैनस्वी। (श० ब्रा० १।४।५।१३)

सृतगर्भा रजस्वला स्त्री नाम्ना 'आत्रेयी' इत्याख्यायते। तया योषिता सह संभाषणादिकं कुर्वन् पुरुष एनस्वी भवति। तैत्तिरीयकेऽप्याम्नातम्—"तस्मान्मलवद्वाससा न संवदेत, न सहासीत" [तै० सं० २।५।१।५]। (सायणः)।

अग्निर्हि देवानां होता। (श० ब्रा० १।५।१।५)

मनुर्ह वा अग्रे यज्ञेनेजे तदनुकृत्येमाः प्रजा यजन्ते।

(श० ब्रा० १।५।१।७)

एते वै ब्राह्मणा यज्ञस्य प्रावितारो येऽनूचानाः। एते ह्येनं तन्वते। एत एनं जनयन्ति। (श० ब्रा० १।५।१।१२)

स हि देवानां प्रसविता। (श० ब्रा० १।५।१।१५)

स सविता।

संवत्सरो वै पिता वैश्वानरः प्रजापतिः। (श० ब्रा० १।५।१।१६)

वैश्वानरः। विश्वे च ते नराश्च विश्वनराः, तेषां संबन्धी वैश्वानरः। स च पिता पालनात्। संवत्सरस्यैव सकलमनुष्योत्पादकत्वेन संबन्धाद् वैश्वानरत्वम्।

तद्धि समृद्धं यो जुष्टं देवेभ्योऽनुब्रवत्॥...तद्धि समृद्धं यो जुष्टं ब्राह्मणेभ्योऽनुब्रवत्॥...तद्धि समृद्धं, यश्च वेद यश्च न, साध्वन्ववोचत् साध्वन्ववोचदित्येव विसृज्यन्ते। (श० ब्रा० १।५।१।१८-२०)

अनुब्रवत्। अनुब्रूयात्। ब्रूञो लेट्। तत् तदीयं कर्म (सायणः)। विसृज्यन्ते

उच्चार्यन्ते। वाच इति शेषः। तद्धि कर्म समृद्धं यत्र। यश्च वेद यश्च न। यो जुष्टां वाचं जानाति यश्च न सः। सर्वैरप्ययं साधु उक्तवानित्येवंरूपया वाचा अयं भावः—जुष्टायाः ( प्रियायाः ) वाचोऽभिनन्दनं न केवलं होत्रैरेव क्रियते, किन्त्वन्यैरपि।

मनो वा अध्वर्युः, वाग् होता। ( श० ब्रा० १।५।१।२१ )

तस्यो हि न ह्वलास्ति यमेता देवता आर्त्तेर्गोपायेयुः।

( श० ब्रा० १।५।१।२२ )

एता देवताः। अग्निः, पृथिवी, आपः, वातः, अहः, रात्रिश्च। आर्त्तिर्नाशः, रोगो वा। ह्वला भ्रंशो हानिर्वा।

यथा येभ्यः पक्वं स्यात्तान् ब्रूयादनु मा शास्त यथा व आहरिष्यामि यथा वः परिवेक्ष्यामीत्येवमेवैतत्। ( श० ब्रा० १।५।१।२६ )

यज्ञो वै प्रावित्रम्। ( श० ब्रा० १।५।२।१ )

प्रावित्रम्। प्रकर्षेणावतीति प्रावित्रः। अवतेरित्रप्रत्ययः।

मनुष्या वा ईडेन्याः, पितरो नमस्याः, देवा यज्ञियाः।

( श० ब्रा० १।५।२।३ )

ईडेन्याः। कुशलादिस्तुतिमात्रेण प्रायेण परितुष्यन्त इति। नमस्याः नमस्कारार्हाः। यज्ञियाः हविःप्रदानमन्तरेणापरितुष्टाः।

या वै प्रजा यज्ञेऽनन्वाभक्ताः पराभूता वै ताः। एवमेवैतद् या इमाः प्रजा अपराभूतास्ता यज्ञ आभजति। मनुष्याननु पशवो देवाननु वयांस्योषधयो वनस्पतयो यदिदं किञ्चैवमु तत्सर्वं यज्ञ आभक्तम्।

( श० ब्रा० १।५।२।४ )

अनन्वाभक्ता अननुप्रविष्टाः, असंसृष्टा वा। आभक्तं संसृष्टम्। अत्र हि यज्ञसंस्पर्शवतां न कदाचित्पराभवोऽस्ति, तदसंसृष्टं च न किञ्चिदस्तीति यज्ञस्तुतिः।

नवेमे पुरुषे प्राणाः। ( श० ब्रा० १।५।२।५ )

शिरोऽवस्थितेषु सप्तसु च्छिद्रेषु, अधोऽवस्थितयोश्च द्वयोश्छिद्रयोः संचरन्तः प्राणा नवसंख्याका इत्यर्थः।

यथा पूर्णपात्रेण संप्रदायं चरेयुः, एवमनेनर्त्विजः संप्रदायं चरन्ति। तद्वाचैवैतत्संप्रदायं चरन्ति। ( श० ब्रा० १।५।२।७ )

यथा गृहान्तर्गतप्रभूतभाण्डपूरणसमये जलैरापूर्णं घटादिपात्रं परस्परहस्तेन संप्रदाय संप्रदाय चरन्ति, तद्वदेव ऋत्विजो यज्ञं 'संप्रदायम्' सम्यक् प्रदाय प्रदाय, एकोऽन्यस्मै सोऽप्यन्यस्मै इत्येवंप्रकारेण चरन्ति अनुतिष्ठन्ति। तच्च वाचैव वाचः साहाय्येनैव कर्तुं पार्यते।

**यथा पूर्णपात्रेण संप्रदायं चरेयुः, एवम्…( श० ब्रा० १।५।२।७ )**

**वाग् हि यज्ञः। वागु हि रेतः। ( श० ब्रा० १।५।२।७ )**

वाचा मन्त्रात्मिकया यज्ञस्योत्पत्तेस्तस्या रेतस्त्वम्। ( सायणः )।

**अग्निर्वै योनिर्यज्ञस्य स ततः प्रजायत इति। ( श० ब्रा० १।५।२।११ )**

स यज्ञः।

**यथा पूर्णपात्रं परासिञ्चेत्, एवम्…( श० ब्रा० १।५।२।१५ )**

यथा पूर्णपात्रमभिमतप्रदेशे घटादिषु प्रक्षेपमकृत्वा अन्यत्र परासिञ्चेत्। तादृगेव तत्…।

**यत्र हैवमृत्विजः संविदाना यज्ञेन चरन्ति सर्वमेव तत्र कल्पते न मुह्यति। तस्मादेवमेव यज्ञो भर्तव्यः। ( श० ब्रा० १।५।२।१५ )**

संविदानाः। ऐकमत्यं प्राप्ताः। सर्वमङ्गजातम्। कल्पते फलजननसमर्थं भवति। मुह्यति मोहमापद्यते।

**पाङ्क्तः पशुः। ( श० ब्रा० १।५।२।१६ )**

चत्वारः पादाः, शिर एकमिति वा; लोमत्वङ्मांसास्थिमज्जभेदेन वा पशोः पाङ्क्तत्वम्।

**पञ्चर्तवः संवत्सरस्य। ( श० ब्रा० १।५।२।१६ )**

हेमन्तशिशिरयोरेकत्वेन पञ्चर्तवः संवत्सरस्य।

**ता वा एताः पञ्च व्याहृतयो भवन्ति। ओ श्रावयास्तु श्रौषड् यज ये यजामहे वौषडिति ।।…तासां सप्तदशाक्षराणि। सप्तदशो वै प्रजापतिः। प्रजापतिर्यज्ञः। ( श० ब्रा० १।५।२।१६-१७ )**

व्याह्रियन्त इति व्याहृतयो वाक्यानि। प्रजापतिर्हि मासर्तु॑गतसंख्यया सप्तदशः।

**ओ श्रावयेति वै देवाः पुरो वातं ससृजिरे। अस्तु श्रौषडित्यभ्राणि समप्लावयन्। यजेति विद्युतम्। ये यजामह इति स्तनयित्नुम्। वषट्कारेणैव प्रावर्षयन्। ( श० ब्रा० १।५।२।१८ )**



( सावशेषम् )

# वैदिकराज्यविकासः

श्रीअनन्तशास्त्री फडके, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी ।

पुराणेतिहासप्रामाण्येन भूतार्थबोधकवैदिकवचनानां स्वार्थे प्रामाण्यमवलम्ब्य च भारतादौ स्थितानामार्याणामुपास्यदेवताभिः कृतस्य संपादितस्य च राज्यस्य विषये कियताप्यंशेन विकासक्रमनिरूपणं प्रसङ्गतः संस्कृतिवर्णनं चास्य निबन्धस्य मुख्यमुद्देश्यम् । तत्र वैदिक-वचनानि कांश्चनांशान् स्पष्टतया प्रतिपादयन्त्यपरान् सूचयन्ति च । पुराणेतिहासवचनानि वेद-सूचितानंशान् स्पष्टतया प्रतिपादयन्ति, नृपादिकानामितिवृत्तनिरूपणेन पोषयन्ति च । अत उद्देश्यभूतार्थस्य स्पष्टीकरणार्थं मुख्यतया संहिताब्राह्मणादिवचनानि क्वचिच्च पुराणेतिहास-वचनानि प्रमाणतया स्वीक्रियेरन् । महाभारते शान्तिपर्वणि भीष्मयुधिष्ठिरसंवादे राजशब्दं राजोत्पत्तिकारणजिज्ञासां चाधिकृत्य विचारः प्रवृत्तः । प्रकृतोद्देश्यस्य प्राथमिकी भूमिका तत्रोपलभ्यते । श्रुत्यापि विभिन्नया रीत्या तथैव वर्णितम् । तत्र भारतस्थितान् मुख्यानंशान् प्रदर्श्य ततः श्रुतिगतानंशान् प्रदर्शयिष्यामः । यद्यपि विस्तृतं तत्प्रकरणं तथाप्युद्देश्यज्ञान-सौकर्यार्थं महदपि तन्मुख्यमंशमवलम्ब्य प्रदर्श्यते—

युधिष्ठिर उवाच

य एष राजन् राजेति शब्दश्चरति भारत ।
कथमेष समुत्पन्नस्तन्मे ब्रूहि परंतप ॥
तुल्यपाणिभुजग्रीवस्तुल्यबुद्धीन्द्रियात्मकः ।
तुल्यदुःखसुखात्मा च तुल्यपृष्ठमुखोदरः ॥
तुल्यशुक्रास्थिमज्जा च तुल्यमांसासृगेव च ।
निःश्वासोच्छ्वासतुल्यश्च तुल्यप्राणशरीरवान् ॥
समानजन्ममरणः समः सर्वगुणैर्नृणाम् ।
विशिष्टबुद्धीन् शूरांश्च कथमेकोऽधितिष्ठति ॥
कथमेको महीं कृत्स्नां शूरवीरार्यसंकुलाम् ।
रक्षत्यपि च लोकस्य प्रसादमभिवाञ्छति ॥

यथा गृहान्तर्गतप्रभूतभाण्डपूरणसमये जलैरापूर्णं घटादिपात्रं परस्परहस्तेन संप्रदाय संप्रदाय चरन्ति, तद्वदेव ऋत्विजो यज्ञं 'संप्रदायम्' सम्यक् प्रदाय प्रदाय, एकोऽन्यस्मै सोऽप्यन्यस्मै इत्येवंप्रकारेण चरन्ति अनुतिष्ठन्ति। तच्च वाचैव वाचः साहाय्येनैव कर्तुं पार्यते।

**यथा पूर्णपात्रेण संप्रदायं चरेयुः, एवम्…( श० ब्रा० १।५।२।७ )**

**वाग् हि यज्ञः। वाग् हि रेतः। ( श० ब्रा० १।५।२।७ )**

वाचा मन्त्रात्मिकया यज्ञस्योत्पत्तेस्तस्या रेतस्त्वम्। ( सायणः )।

**अग्निर्वै योनिर्यज्ञस्य स ततः प्रजायत इति। ( श० ब्रा० १।५।२।११ )**

स यज्ञः।

**यथा पूर्णपात्रं परासिञ्चेत्, एवम्…( श० ब्रा० १।५।२।१५ )**

यथा पूर्णपात्रमभिमतप्रदेशे घटादिषु प्रक्षेपमकृत्वा अन्यत्र परासिञ्चेत्। तादृगेव तत्…।

**यत्र हैवमृत्विजः संविदाना यज्ञेन चरन्ति सर्वमेव तत्र कल्पते न मुह्यति। तस्मादेवमेव यज्ञो भर्तव्यः। ( श० ब्रा० १।५।२।१५ )**

संविदानाः। ऐकमत्यं प्राप्ताः। सर्वमङ्गजातम्। कल्पते फलजननसमर्थं भवति। मुह्यति मोहमापद्यते।

**पाङ्क्तः पशुः। ( श० ब्रा० १।५।२।१६ )**

चत्वारः पादाः, शिर एकमिति वा; लोमत्वङ्मांसास्थिमज्जभेदेन वा पशोः पाङ्क्तत्वम्।

**पञ्चर्तवः संवत्सरस्य। ( श० ब्रा० १।५।२।१६ )**

हेमन्तशिशिरयोरेकत्वेन पञ्चर्तवः संवत्सरस्य।

**ता वा एताः पञ्च व्याहृतयो भवन्ति। ओ श्रावयास्तु श्रौषड् यज ये यजामहे वौषडिति॥…तासां सप्तदशाक्षराणि। सप्तदशो वै प्रजापतिः। प्रजापतिर्यज्ञः। ( श० ब्रा० १।५।२।१६-१७ )**

व्याह्रियन्त इति व्याहृतयो वाक्यानि। प्रजापतिर्हि मासर्तुगतसंख्यया सप्तदशः।

**ओ श्रावयेति वै देवाः पुरो वातं ससृजिरे। अस्तु श्रौषडित्यभ्राणि समप्लावयन्। यजेति विद्युतम्। ये यजामह इति स्तनयित्नुम्। वषट्कारेणैव प्रावर्षयन्। ( श० ब्रा० १।५।२।१८ )**

 ( सावशेषम् )

# वैदिकराज्यविकासः

श्रीअनन्तशास्त्री फडके, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी।

पुराणेतिहासप्रामाण्येन भूतार्थबोधकवैदिकवचनानां स्वार्थे प्रामाण्यमवलम्ब्य च भारतादौ स्थितानामार्याणामुपास्यदेवताभिः कृतस्य संपादितस्य च राज्यस्य विषये कियताप्यंशेन विकासक्रमनिरूपणं प्रसङ्गतः संस्कृतिवर्णनं चास्य निबन्धस्य मुख्यमुद्देश्यम्। तत्र वैदिकवचनानि कांश्चनांशान् स्पष्टतया प्रतिपादयन्त्यपरान् सूचयन्ति च। पुराणेतिहासवचनानि वेदसूचितानंशान् स्पष्टतया प्रतिपादयन्ति, नृपादिकानामितिवृत्तनिरूपणेन पोषयन्ति च। अत उद्देश्यभूतार्थस्य स्पष्टीकरणार्थं मुख्यतया संहिताब्राह्मणादिवचनानि क्वचिच्च पुराणेतिहासवचनानि प्रमाणतया स्वीक्रियेरन्। महाभारते शान्तिपर्वणि भीष्मयुधिष्ठिरसंवादे राजशब्दं राजोत्पत्तिकारणजिज्ञासां चाधिकृत्य विचारः प्रवृत्तः। प्रकृतोद्देश्यस्य प्राथमिकी भूमिका तत्रोपलभ्यते। श्रुत्यापि विभिन्नया रीत्या तथैव वर्णितम्। तत्र भारतस्थितान् मुख्यानंशान् प्रदर्श्य ततः श्रुतिगतानंशान् प्रदर्शयिष्यामः। यद्यपि विस्तृतं तत्प्रकरणं तथाप्युद्देश्यज्ञानसौकर्यार्थं महदपि तन्मुख्यमंशमवलम्ब्य प्रदर्श्यते—

युधिष्ठिर उवाच

य एष राजन् राजेति शब्दश्चरति भारत।
कथमेष समुत्पन्नस्तन्मे ब्रूहि परंतप॥
तुल्यपाणिभुजग्रीवस्तुल्यबुद्धीन्द्रियात्मकः।
तुल्यदुःखसुखात्मा च तुल्यपृष्ठमुखोदरः॥
तुल्यशुक्रास्थिमज्जा च तुल्यमांसासृगेव च।
निःश्वासोच्छ्वासतुल्यश्च तुल्यप्राणशरीरवान्॥
समानजन्ममरणः समः सर्वगुणैर्नृणाम्।
विशिष्टबुद्धीन् शूरांश्च कथमेकोऽधितिष्ठति॥
कथमेको महीं कृत्स्नां शूरवीरार्यसंकुलाम्।
रक्षत्यपि च लोकस्य प्रसादमभिवाञ्छति॥

एकस्य तु प्रसादेन कृत्स्नो लोकः प्रसीदति ।
व्याकुले चाकुलः सर्वो भवतीति विनिश्चयः ॥
एतदिच्छाम्यहं श्रोतुं तत्त्वेन भरतर्षभ ।
कृत्स्नं तन्मे यथातत्त्वं प्रब्रूहि वदतां वर ॥
नैतत्कारणमल्पं हि भविष्यति विशांपते ।

भीष्म उवाच

यथा राज्यं समुत्पन्नमादौ कृतयुगेऽभवत् ॥
न वै राज्यं न राजासीन्न च दण्डो न दाण्डिकः ।
धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम् ॥
पाल्यमानास्तथाऽन्योन्यं नरा धर्मेण भारत ।
खेदं परमुपाजग्मुस्ततस्तान् मोह आविशत् ॥
ते मोहवशमापन्ना मनुजा मनुजर्षभ ।
प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत् ॥
नष्टायां प्रतिपत्तौ च मोहवश्या नरास्तदा ।
लोभस्य वशमापन्नाः सर्वे भरतसत्तम ॥
अप्राप्तस्याभिमर्षं तु कुर्वन्तो मनुजास्ततः ।
कामो नामापरस्तत्र प्रत्यपद्यत वै प्रभो ॥
तांस्तु कामवशं प्राप्तान् रागो नामाभिसंस्पृशत् ।
रक्ताश्च नाभ्यजानन्त कार्याकार्ये युधिष्ठिर ॥
अगम्यागमनं चैव वाच्यावाच्यं तथैव च ।
भक्ष्याभक्ष्यं च राजेन्द्र दोषादोषं च नात्यजन् ॥
विप्लुते नरलोके वै ब्रह्म चैव ननाश ह ।
नाशाच्च ब्रह्मणो राजन् धर्मो नाशमथागमत् ॥
नष्टे ब्रह्मणि धर्मे च देवांस्त्रासः समाविशत् ।

[म०भा०शां० ५९।५-२२]

महत्यस्मिन् महाभारतीये प्रकरणे सर्वेषां हृदि सर्वथा स्थितस्य नैकवारमनेकैर्जिज्ञासितस्य सम्यक् सन्देहप्रदर्शनपूर्वकं विवरणं दृश्यते । प्रथमं ज्ञानलोपस्ततो मोहस्ततो लोभो लोभा-

द्विषयाभिलाषोऽभिलषितसंयोगादिन्द्रियप्रीत्याख्यः कामस्ततस्तद्विषये रागो रागात् कर्तव्याकर्तव्य-प्रतिपत्तिशून्यत्वं ततः पुनर्मोह इत्यादिचक्रप्रवृत्तिरिति । तद्दोषनिवारणार्थं ब्रह्मणाऽध्याय-सहस्राणां शतं शास्त्ररूपेण कृतम् । तत्र च धर्मार्थकामानां निरूपणं कृतम्—

ततोऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम् ।

यत्र धर्मस्तथैवार्थः कामश्चैवाभिवर्णितः ॥ [म०भा० शा० ५९।२९]

ततस्तच्छास्त्रं शङ्करेण पूर्वमधीतम् । ततः शङ्करेण संक्षिप्तमिन्द्रोऽधीतवान् । इन्द्रसंक्षिप्तं तद् बृहस्पतिः पुनः संचिक्षेप । ततः पुनः शुक्र एकसहस्राध्यायात्मकं कृतवान् । तत्पुनरन्ये महर्षयः संचिक्षिपुः । अर्थशास्त्रप्रणयनानन्तरं देवप्रार्थनया भगवान् नारायणस्तैजसं विरजसं पुरुषं राज्यकरणार्थमुत्पादितवान् । रजोगुणरहितः स राज्यं नैच्छत् । तत्पुत्रः कीर्तिमानपि विषयासक्तिरहितो राज्यं नैच्छत् । तत्पुत्रः कर्दमोऽपि महातपास्तपश्चरण-शीलो राज्यं नाभिललाष । तत्पुत्रस्त्वनङ्गो दण्डनीतिविशारदो राज्यं स्वीकृतवान् । अनङ्ग-पुत्रो वेनो रागद्वेषवशगः प्रजास्वधर्मप्रचारको जगन्नाशार्थमेव प्रवृत्त ऋषिभिर्विनाशितः । तत्पुत्रो वैन्यः पृथुनामा राज्यं धर्मेण नीत्या च कृतवान् । स एव प्रथमो धार्मिको नीतिकुशलो राजा [म० भा० शा० ५९।८८-१०७], राजशब्दार्थश्च तत्रैव सम्यक् संबद्धः—

रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्द्यते ॥ [म० भा० शा० ५९।१२५]

"उत मा व्यन्तु" [५।४६।८] इति ऋग्वेदमन्त्रस्थराट्शब्दनिर्वचनं यास्केन—"राट् राजतेः" [१२।४६] इत्येव कृतम् । अन्यत्रापि—"राजा राजतेः" [२।३] इति कृतम् । राजतिधात्वर्थश्च—"राजतीति चत्वार ऐश्वर्यकर्माणः" [२।२१] इति तेन यास्केन प्रतिपादितः । एवं च प्रजारञ्जननिमित्तप्राप्तैश्वर्येण शोभमानो राजेति सिद्धयति ।

महाभारतप्रदर्शितप्रकरणापेक्षयाऽधिकसूक्ष्मतया राज्यविकासक्रमोऽथर्ववेदे प्रतिपादितः—

विराड् वा इदमग्र आसीत् ।

तस्या जातायाः सर्वमबिभेदियमेवेदं भविष्यतीति ॥ [८।१०।१]

प्रथमतो विगतो राजा यस्याः सा विराड् राजरहिता प्रजाऽऽसीत् । ततः प्रजा-समुदाये भीतिरुत्पन्ना । राजरहितप्रजावस्थां दृष्ट्वा तामवस्थामकामयमानं प्राणिजातं भीति-युक्तमभवत् । भीतेः कारणं च महाभारतप्रदर्शितमोहलोभादिकमेव स्यात् । ततः स्वामि-रहितासु भीतियुक्तप्रजासु सतीषु विचारकाणां विचारो गृहपतिकरणार्थं प्रवृत्तः—

सोदक्रामत् सा गार्हपत्ये न्यक्रामत् ॥ [८।१०।२]

सा प्रजामध्ये विचारकाणां विचारशक्तिः कुटुम्बव्यवस्थाकरणार्थं प्रवृत्ता, या पूर्वं प्रजासु नासीत्। ततः सा परिणता नैककुटुम्बयुतग्रामरूपेण, समाना जना भान्ति यस्यामिति निर्वचनयुतसभारूपेण च संवृत्ता—

सोदक्रामत् सा सभायां न्यक्रामत्॥ [८।१०।८]

अर्थात् सा कुटुम्बशक्तिर्ग्रामसभादिरूपेण समजायत। ततः परिणता सा प्रजाशक्तिः समितिरूपेणार्थादनेकग्रामसमूहव्यवस्थापकसमितिरूपेण संजाता—

सोदक्रामत् सा समितौ न्यक्रामत्॥ [८।१०।१०]

सह मिलितैर्जनैर्मितिर्विचारोऽस्यामिति समितेर्निर्वचनम्। अर्थादनेकग्रामसमुदायानां नियमार्थं समागतानां प्रतिनिधीनां विचारकसमितिरूपेण संस्थिता। ततोऽनेकग्रामसमुदायानां समुदायरूपे राष्ट्रे निमन्त्रितप्रतिनिधिनियोज्ये सा शक्तिः समाविष्टा—

सोदक्रामत् सामन्त्रणे न्यक्रामत्।
यन्त्यस्यामन्त्रणमामन्त्रणीयो भवति य एवं वेद॥ [अथर्व० ८।१०।१३]

आसमन्ताद् मन्त्रयन्ति विचारं कुर्वन्त्यस्मिन्नित्यामन्त्रणम्, सर्वापेक्षया विशिष्ट-विचारस्थानम्। अर्थात् सर्वतः परिपूर्णरूपेण राष्ट्रस्यालोचनं कृतवतां समुदाय एको जातः, इमां पद्धतिं यो वेत्ति स एवामन्त्रणसभासभ्य आमन्त्रणीयपदवाच्यो भवतीति ज्ञायते।

एवं च प्रथमतोऽनियन्त्रिताः प्रजा आसन्। तत्र मोहलोभादिजन्यभीत्यादिदोषाणां प्रादु-र्भावात् कुटुम्बव्यवस्था। ततोऽनेककुटुम्बसमूहरूपग्रामव्यवस्था, ग्रामसभाव्यवस्था च; यतस्तत्र सर्वेषां समानरूपेण स्वसुखदुःखादिभानं तद्विचारश्च भवति। ततोऽनेकग्रामव्यवस्थासंपादनाय सहमिलितानां विचारकरणार्थं विचारकाणां समितियोजना। ततोऽनेकग्रामसमुदायसमुदायरूपे राष्ट्रे व्यवस्थाकरणार्थं निमन्त्रितानां समूहरूपमामन्त्रणसंज्ञकं महद्विचारकमण्डलं समजायतेति स्पष्टतयाऽथर्ववेदतो ज्ञातुं शक्यते। एषा व्यवस्था च प्रजानियमितप्रजाधिकारिकराष्ट्रे संभवति। ऋग्वेदेऽपि प्रजानियन्त्रितस्वराज्यवर्णनमुपलभ्यते—

आ यद् वामीयचक्षसा मित्र वयं च सूरयः।
व्यचिष्ठे बहुपाय्ये यतेमहि स्वराज्ये॥ [५।६६।६]

"हे ईयचक्षसा व्याप्तदर्शनौ, हे मित्रा मित्रावरुणौ, वां युवाम्, यद् ये, वयं च सूरयः स्तोतारः, आ आह्वयामः। व्यचिष्ठे अत्यन्तविस्तृते, बहुपाय्ये···बहुभी रक्षितव्ये, स्वराज्ये

स्वराट्त्वाय एवंविधराज्यार्थं यतेमहि' ' '"इति श्रीसायणाचार्यः। बहुरक्षितव्यस्वराज्यार्थं यत्नं कुर्यामेति ऋषयोऽभिप्रयन्ति।

तदा प्रजाभिरेव पत्युः स्वामिनो वरणं क्रियते स्म। अथर्ववेदे स्पष्टतया वर्णितं विजय-तेजोयशपशुवीरादिकानां संरक्षकस्यैव वरणं प्रजाः कुर्वन्ति स्मेति—

"जितमस्माकम्' ' 'तेजोऽस्माकं ब्रह्मास्माकं' ' 'यशोऽस्माकं पशवोऽस्माकं प्रजा अस्माकं वीरा अस्माकम्। तस्मादमुं निर्भजामः।" [१६।८]

एतादृशः प्रजाभिर्वृतः पतिः सर्वथा प्रजारक्षणतत्पर आसीदिति निश्चितम्। अत एव स प्रजानिर्वाचितः प्रजानामनुसरणं करोतीत्यथर्ववेदे प्रतिपादितम्—

"स विशोऽनु व्यचलत्" [ १५।६।१ ]। विशः प्रजाः।

तैत्तिरीयब्राह्मणे च प्रजापतिः प्रजाश्रयेणैव तिष्ठतीति निरूपितम्—

"विशि राजा प्रतिष्ठितः" [२।६।५।६]

अत एव ऋग्वेदे विशो राजानं कामयन्तामित्याङ्गिरसः प्रार्थयते—

"विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत्" [१०।१७३।१] इति।

"सर्वाश्च विशः प्रजाः, त्वा त्वां वाञ्छन्तु। अयमेवास्माकं राजास्त्विति कामयन्तु। त्वत् त्वत्तः सकाशात्, राष्ट्रं राज्यम्, माधि भ्रशत् मा भ्रश्यतु' ' '"इति श्रीसायणाचार्यः।

एवं च प्रजाभिर्वृत एव प्रजानामाधिपत्ये प्रभवति। अत एव प्रजानां पुरतस्तेन प्रजा-पतिना प्रतिज्ञापि करणीया भवति। महाभारते वैन्याय पृथवे राज्यं प्रदाय देवा ऋषयश्च तं प्रतिज्ञाबद्धमकुर्वन्—

प्रतिज्ञां चाधिरोहस्व मनसा कर्मणा गिरा।
पालयिष्याम्यहं भौमं ब्रह्म इत्येव चासकृत्॥
यश्चात्र धर्मो नित्योक्तो दण्डनीतिव्यपाश्रयः।
तमशङ्कः करिष्यामि स्ववशो न कदाचन॥ [५६।१०६–१०७]

अन्यच्च—

प्रियाप्रिये परित्यज्य समः सर्वेषु जन्तुषु।
कामं क्रोधं च लोभं च मानं चोत्सृज्य दूरतः॥
यश्च धर्मात् प्रविचलेल्लोके कश्चन मानवः।
निग्राह्यस्ते स्वबाहुभ्यां शश्वद्धर्ममवेक्षता॥ [५६।१०४–१०५]

अथर्ववेदेऽपि—

त्वां विशो वृणतां राज्याय ।···

ततो न उग्रो वि भजा वसूनि ॥ [३।४।२]

प्रजाः प्रजापतिपदे त्वां योजयन्ति । त्वमुग्रभावं परित्यज्य संपत्त्यादिसर्वसाधनानि योग्यतया विभजेत्यर्थः ।

प्रजानियुक्तो राजा राजकार्यं संपाद्य तद्द्वारा विशिष्टां राष्ट्रशक्तिं समुत्पादयतीति ऋग्वेदेऽपि श्रूयते—

अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् । [१०।१२५।३]

राष्ट्री सर्वस्य राष्ट्रस्येश्वरी, वसूनां धनानां संगमनी संगमयित्री, चिकितुषी तत्त्वज्ञानं साक्षात्कृतवतीत्यर्थः ।

एतादृशाः प्रजापतयः प्रतिग्रामसमुदायमनेके आसन्, तेषां गणानां योऽधिपतिस्तं गणपतिपदेन ज्येष्ठराजपदेन वा वर्णयन्ति स्मेति गणानां त्वा गणपतिमित्यादिमन्त्रेण ज्ञायते—

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।

ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥ [ऋ०२।२३।१]

"गणानां देवादिगणानाम्, कवीनां क्रान्तदर्शिनाम्, ज्येष्ठराजं ज्येष्ठानां प्रशस्यतमानां मध्ये राजन्तम्, गणपतिमाह्वयामः । त्वमूतिभिः पालनैर्हेतुभिः,यज्ञगृहमासीद उपविश" इति सायणः । प्रजाशक्तिः परिणता सती गणपतिरूपेण ज्येष्ठराजरूपेण संस्थिता भवति, "सोदक्रामत् सामन्त्रणे न्यक्रामत्" [अथ० ८।१०।१३] इत्यनेन पूर्वं प्रदर्शिता च ।

एवं च रक्षां व्यवस्थां च कामयमाना प्रजाशक्तिः प्रथमं सामान्यप्रजापतिं ततो गणपतिं ततो विशिष्टप्रजापतिमर्थाद्राष्ट्रपतिं प्रजानियन्त्रितं निर्माय स्थिराऽभवत् । तदनन्तरं बहौ काले गते प्रजापतिनिर्वाचनप्रथा प्रायो विलुप्तप्रचारा कुलपरम्परात एव तत्कुलोत्पत्तिमात्रयोग्यतयैव प्रजापतिं राष्ट्रपतिं वृत्वा संस्थितेति बीजरूपेण ऋग्वेदीयदशममण्डलस्थप्रजापतिवर्णनपरसूक्तेन ज्ञातुं शक्यते । तथा हि—

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । [ १०।१२१।१ ]

यद्यपि श्रीसायणाचार्येण परमेश्वरवर्णनपरमिदं सूक्तमिति निरणायि, तथापि यास्कीयप्रजापतिपदनिर्वचनेन प्रजापालनकर्ता कश्चन तत्राभिप्रेत इत्यपि वर्णयितुं शक्यते—"प्रजापतिः प्रजानां पाता वा पालयिता वा । तस्यैषा भवति" [नि० १०।४३] इति हि निरुक्तनिर्वचनम् ।

हिरण्यगर्भो नाम प्रजापतिः—"प्रजापतिर्वै हिरण्यगर्भः" [६।२।२।६] इति शतपथ-ब्राह्मणे वर्णितम् । स च जातमात्र एव भूतस्य प्राणिजातस्य पतिरासीत् ।

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य च्छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥
यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥
[ऋग्० १०।१२१।२-३]

जातमात्रो यः प्रजानां पतिः स प्रजाभ्यो बलमात्मसत्ताम्, छायारूपदयया़ऽमृतत्वमवकृपया मृत्युं च प्रददाति । किञ्च, "यः प्राणतः प्रश्वसतः, निमिषतः अक्षिपक्ष्मचलनं कुर्वतः, जङ्गमस्य प्राणिजातस्य, महित्वा माहात्म्येन, एक इत् एक एव, राजा बभूव । अस्य परिदृश्यमानस्य, द्विपदः द्विपादयुक्तस्य मनुष्यादेः, चतुष्पदो गवाश्वादेश्च, प्रजापतिरीशे इष्टे" इति श्रीसायणः । अतस्तं प्रजा प्रार्थयते—

मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान ॥ [१०।१२१।६]

"स प्रजापतिः, नोऽस्मान्, मा हिंसीत् मा बाधताम्" इति श्रीसायणः । अस्मिन् सूक्तेऽन्ते च प्रजा ततो धनादिकं सर्वभोगजातं प्रार्थयत इति वर्णितम् । तथा हि—

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ [१०।१२१।१०]

"हे प्रजापते, त्वत् त्वत्तोऽन्यः कश्चित्, एतानि इदानीं वर्तमानानि, विश्वा विश्वानि, जातानि······भूतजातानि, न परि बभूव न परिगृह्णाति···"। वयं च यत्कामाः, ते तुभ्यम्, जुहुमः हवींषि प्रयच्छामः, तत्फलं नोऽस्माकमस्तु । वयं च रयीणां धनानां पतयः स्याम" इति श्रीसायणाचार्यः । एवं चास्मिन् सूक्तेऽनियन्त्रितराजसत्ता प्रजापतिसत्तातो बीजरूपेण प्रादुर्भूतेति ज्ञायते । पूर्वं तु लोकनियन्त्रितः प्रजानां पतिर्लोकार्थमनेकानि कार्याणि संपादयति । यथा—

"देवा वै मृत्योरबिभयुस्ते प्रजापतिमुपाधावन्" [ तै० सं० २।३।२ ] इति,
"प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत्" [ तै० सं० २।६।३ ] इति च ।

प्रजानां पत्या प्रजासु जातमृत्युनिवारणार्थं प्रयत्नोऽकारि । एवं प्रजानां कृतेऽनेकसुख-साधनभूतयज्ञाविष्करणं कृतमिति । परन्तु लोकनियन्त्रणाभावे जातमात्राधिकृते राजनि ये दोषाः प्रादुर्भवन्ति, ते सर्वेऽपि कामादयः प्रजापतौ संजाताः । अतस्तत्सत्तामात्मसात्कर्तुं

वरुणेन्द्रप्रभृतिभिः . प्रयत्नोऽकारि। तेषां सन्तोषार्थं प्रजापतिना वरुणेन्द्रादिभ्यस्तदा तदा किञ्चिदधिकृतपदार्थजातं संमानादिकं च प्रदाय स्वसत्तासंरक्षणार्थं प्रयत्नः पुनः कृत इत्यपि वेदादितो ज्ञातुं शक्यते। तथा हि—

"प्रजापतिः प्रजा असृजत। ता अस्मात् सृष्टाः पराचीरायन्। ता वरुणमगच्छन्। ता अन्वैत्। ताः पुनरयाचत। ता अस्मै न पुनरददात्। सोऽब्रवीद् वरं वृणीष्वाथ मे पुनर्देहीति। तासां वरमालभत। स कृष्णः (पशुः)···" [तै० सं० २।१।२]।

एवमग्निसाहाय्यमवलम्ब्य प्रजानां स्वायत्तीकरणं प्रजापतिना कृतमित्यन्यत्र श्रूयते— "प्रजापतिः प्रजा असृजत। ताः सृष्टाः पराच्य एवायन्। न व्यावर्तन्त। ता अग्निना पर्यगच्छत्" [ऐ० ब्रा० ३।३६]।

एवमिन्द्राय महेन्द्रपदवी स्वाधिकारसंरक्षणार्थं प्रदत्ता—

"इन्द्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीत् प्रजापतिमहमेतदसानि··· यन्महानिन्द्रोऽभवत्" [ऐ०ब्रा० ३।२१]।

एवं स्वाधिकारस्य कथञ्चिद्रक्षणतत्परे लोकानियन्त्रिते प्रजापतौ रुद्रवरुणेन्द्रप्रभृतयः स्वसामर्थ्यं लोकप्रियत्वं च कामयमाना अनेकधा प्रयत्नं चक्रुरिति ज्ञायते। रुद्रेण तदात्वे स्थितानामनेककर्माणि कृतवतां जनानां प्रत्युत स्त्रीणां चोराणामपि बहून् संघान् निर्माय तद्द्वारा च स्वकीया सेना महती निर्मिता। तथा हि—

"स्तेनानां पतये नमः।···निषङ्गिणे···तस्कराणां पतये नमो नमो वञ्चते परिवञ्चते स्तायूनां पतये नमः।···जिघांसद्भ्यो मुष्णतां पतये नमः।···नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च···। नमः कुलालेभ्यः कर्मारेभ्यश्च···सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम्" [तै० सं० ४।५।३-४,११]।

इत्यादिरुद्राध्यायवर्णने सर्वमुपलभ्यते।

वरुणेन च नियमानां स्थिरीकरणं सर्वत्र गुप्तचरप्रेषणादिकं च विधाय स्वाधिकारवर्धनं कृतम्। तथा हि—

परि स्पशो वरुणस्य स्मदिष्टा उभे पश्यन्ति रोदसी सुमेके।
ऋतावानः कवयो यज्ञधीराः प्रचेतसो य इषयन्त मन्म ॥ [ऋ०७।८७।३]

"वरुणस्य देवस्य, स्पशश्चराः…सह प्रेषिताः सन्तः…उभयोर्लोकयोर्वर्तमानात् पुण्यापुण्यकारिणो जनान् पश्यन्ति" इति श्रीसायणाचार्यः।

किमाग आस वरुण ज्येष्ठं यत्स्तोतारं जिघांससि सखायम्। [ऋ० ७।८६।४]

हे वरुण ज्येष्ठं किमागः (अपराधः) आस कोऽपराधो मया कृतो बभूव यत् येन आगसा सखायं मित्रभूतं सन्तं स्तोतारं हन्तुमिच्छसि। इत्यनेनापराधसहनं तस्य वरुणस्य स्वभाव एव नासीदिति ज्ञायते।

इन्द्रेण स्वसेनायामनेके कार्यकुशला देवगणाः संयोजिताः। यैश्चेन्द्रस्य सर्वदा सर्वविषयेषु साहाय्यं कृतमिति वर्णनमुपलभ्यते। तथा हीन्द्रेण शस्त्रनिर्माणार्थं त्वष्टुर्योजना कृता—

इदं न हि त्वा न्यृषन्त्यूर्मयो ब्रह्माणीन्द्र तव यानि वर्धना।
त्वष्टा चित् ते युज्यं वावृधे शवस्ततक्ष वज्रमभिभूत्योजसम्॥ [ऋ० १।५२।७]

"हे इन्द्र यानि ब्रह्माणि स्तोत्रशस्त्ररूपाणि…वर्धना वर्धयितॄणि त्वां न्यृषन्ति प्राप्नुवन्त्येव।…त्वष्टा चित्…ते तव युज्यं योग्यं शवो बलं ववृधे। अपि च अभिभूत्योजसं शत्रूणामभिभवितृणा ओजसा बलेन युक्तं वज्रं ततक्ष…" इति सायणः। एवमनेकत्र त्वष्टुर्वर्णनमिन्द्रसाहाय्यकारित्वेनोपलभ्यते [ऋ०६।१७।१०;१०।४८।३]।

एवमृभुसंज्ञको गणः पुत्रत्वेन प्रकल्पितो युद्धे साहाय्यार्थं स्थापितः—

पीवोअश्वाः शुचद्रथा हि भूताऽयःशिप्रा वाजिनः सुनिष्काः।
इन्द्रस्य सूनो शवसो नपातोऽनु वश्चेत्यग्रियं मदाय॥ [ऋ०-४।३७।४]

"हे वाजिनः ऋभवः पीवोअश्वाः पीवानोऽश्वा येषां ते तादृशाः, तथा शुचद्रथा दीप्तरथाः…सुनिष्काः शोभनधनाश्च भूत भवत। हे इन्द्रस्य सूनो सूनुवः पुत्रवद्रक्षणीयाः…" इत्याद्यर्थः श्रीसायणाचार्येण विवृतः। क्वचिदृभवः साक्षान्नूतन इन्द्र इति वर्णनमुपलभ्यते—

ऋभुर्न इन्द्रः शवसा नवीयानृभुर्वाजेभिर्वसुभिर्वसुर्ददिः। [ऋ०१।११०।७]

शवसा बलेन, वाजेभिः अन्नैः, वसुभिः निवासहेतुभिः, ऋभुर्नाम नवीयान् नवतर इन्द्रः, तेषां ददिः दाता भवतु (सायणः)।

एवमिन्द्रेण विमाननिर्माणकर्तॄणामेवं संचालकानां समुदायः, एवमौषधादिदातॄणां समुदायः स्वसेनायां निर्मितः। तेषां मुख्यौ अश्विनीकुमारौ एवमृभवः सन्ति—

अनश्वो जातो अनभीशुरुक्थ्यो रथस्त्रिचक्रः परि वर्तते रजः। [ऋ० ४।३६।१]

"हे ऋभवः, अश्विनोः संबन्धी युष्मद्दत्तो रथः, अनश्वो जातः वाहनाश्वनिरपेक्षः संपन्नः। तथा अनभीशुः प्रग्रहरहितः, उक्थ्यः स्तुत्यः, त्रिचक्रः त्रिचक्रयुक्तः सन्, रजोऽन्तरिक्षं परि वर्तते परिभ्रमति" इति सायणः। एवमन्यत्र [ऋग्० १।३४।२, १२; १।४७।२;१।११२।१२; ४।४४।३; १०।३९।१२ इत्यादिषु ] वर्णनमुपलभ्यते।

एवमश्विनौ वैद्यौ सन्तौ इन्द्रं सर्वथोपकुर्वाते—

उत त्या दैव्या भिषजा शं नः करतो अश्विना।
युयुयातामितो रपो अप स्रिधः॥ [ऋग्० ८।१८।८]

"उत अपि च त्या तौ प्रसिद्धौ दैव्या देवेषु भवौ भिषजा चिकित्सकौ ईदृशावश्विना अश्विनौ नोऽस्माकं शं सुखं रोगाणां शमनं वा करतः कुरुताम्" इति सायणः।

एवं सर्वत्र युद्धे परमसहायका मरुतः, गुप्तचराधिष्ठात्री शुनीयुता सरमा च। एवं इन्द्रकथनानुसारं पैतृकशास्त्रवेत्ता त्रितस्त्वष्टुः पुत्रं हतवान् [ऋ० १०।८।३]। एवमष्टौ वसव इन्द्रेणान्यकार्यकर्तारः [ऋग्० १०।६६।३] निर्मिताः, तद्द्वारा स्वसेना स्वाधिकारश्च दृढीकृतः।

अनियन्त्रितसत्तातोऽनेके दोषाः प्रजापतौ प्रादुर्भूताः। यथा—

राक्षसेभ्यो वरं दत्त्वा सूर्यस्य महती पीडोत्पादिता [तै० आ० २।२]। अन्ततः कामाधीनो भूत्वा स्वकुलस्थदुहितृसदृशकन्याधर्षणं कृतवान्—"प्रजापतिर्ह वै स्वां दुहितरमभिदध्यौ··· अतिसन्धं वा अयं चरति" [ शत० १।७।४।१-३ ] इति शतपथब्राह्मणे प्रतिपादितम्।

ऋग्वेदेऽपि—"पिता यत्स्वां दुहितरमधिष्कन्" [१०।६१।७] इत्यत्र प्रतिपादितम्। तस्य महतोऽपराधस्य यत्फलं प्रजाविद्रोहादिकं संपद्यते तत्प्रजापतिसमये संजातम्। क्रुद्धैर्देवैः प्रजापतिदण्डकरणार्थं संमिल्य मन्त्रयित्वा रुद्रो नियुक्तः। प्रजापत्यभिमानिभिर्देवैः सह महद्युद्धं समजनि, तत्र प्रजापतिवधः समजायत। सर्वत्राराजकतानिमित्तोपद्रवादिकं प्रादुरभवत्। रुद्रविषये जनानां मनसि महती भीतिः संजाता। ताश्च रुद्रक्रोधोऽस्मासु मास्तु, अस्माकं पशूनां वीराणां बालानां हननं रुद्रो मा करोत्विति प्रार्थयन्ति स्म। यथा—

नमस्ते रुद्र मन्यव उतो त इषवे नमः। [तै० सं० ४।५।१]
मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम्।
मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः॥
[तै० सं० ४।५।१०]

इत्यादिरूपेणाप्युपलभ्यते।

ततः प्रजापतिस्थानं वरुणः स्वीकृत्य न्यायेन सत्यतया यथायोग्यं शासनं संपादितवान्। साहाय्यार्थमिन्द्रं च सर्वशक्तियुक्तं स्वतुल्यं स्वीचकार। एवं च द्विराजराज्यपद्धतिर्वरुणराज्यकरणसमयतः प्रचलितेति प्रतीयते। तथा हि—

इन्द्रावरुणयोरहं सम्राजोरव आ वृणे।

ता नो मृळात ईदृशे। [ऋग्० १।१७।१]

"अहमनुष्ठाता सम्राजोः...इन्द्रावरुणयोर्देवयोः, अवो रक्षणं सर्वतः प्रार्थये। तौ देवौ मृळातः अस्मान् सुखयतः" इति श्रीसायणः। एवमनेकयोर्देवतयोर्युग्मवर्णनं यज्ञे आह्वानं च श्रूयते। यथा—मित्रावरुणौ, इन्द्रावरुणौ, इन्द्रवायू, इन्द्राबृहस्पती, इन्द्रापूषणौ।

परन्त्वन्ततो वरुणराज्यसत्ता सर्वथेन्द्रहस्ते आगता, वरुणश्च नष्टाधिकारो जनदृष्ट्या वर्ण्यतया केवलं स्थितः। वरुणसत्ता इन्द्रहस्त आगतेत्यस्य विवरणार्थं वरुणाग्न्योः संवाद ऋग्वेदे उपलभ्यते। यथा—

बह्वीः समा अकरमन्तरस्मिन्निन्द्रं वृणानः पितरं जहामि।

[ऋग्० १०।१२४।४]

"अस्मिन् वेदिलक्षणे स्थाने बह्वीः समाः बहून् संवत्सरान् अकरम्...चिरकालं न्यवात्सम्। तत्र इन्द्रं वृणानः संभजमानः पितरमुत्पादकमरण्यात्मकं जहामि" इति श्रीसायणः।

वरुणः स्वमहिमानं वर्णयति—

अहं राजा वरुणो मह्यं तान्यसुर्याणि प्रथमा धारयन्त।

क्रतुं सचन्ते वरुणस्य देवा राजामि कृष्टेरुपमस्य वव्रेः॥

[ऋग्० ४।४२।२]

अहमेव च वरुणो राजा भवामि, मह्यं मदर्थमेव मुख्यानि तानि प्रसिद्धानि असुर्याणि असुरविघातकानि बलानि धारयन्त अधारयन् देवाः। तथा देवाः कृष्टेः मनुष्यवतो वरुणस्य कर्म सचन्ते सेवन्ते, अतो वरुणोऽहं राजा।

इन्द्रो वरुणवाक्यं खण्डयति—

मां नरः स्वश्वा वाजयन्तो मां वृताः समरणे हवन्ते।

कृणोम्याजिं मघवाहमिन्द्र इयर्मि रेणुमभिभूत्योजाः॥ [४।४२।५]

मां शोभनाश्वाः संग्राममिच्छन्तो नरः, अनुगच्छन्ति। मामेव वृताः सन्तः समरणे संग्रामे हवन्ते। मघवाहमिन्द्रः सन्नाजिं कृणोमि। अभिभूत्योजाः परेषामभिभाविबलोऽहं रेणुमियर्मि

प्रेरयामि । यद्यपि श्रीसायणाचार्येणान्यथाभिप्रायो वर्णितोऽथाप्यनया रीत्यापि व्याख्यातमन्यैः ।

एवं च पूर्वं कुटुम्बसंस्था, ततो ग्रामसंस्था, तस्या अधिपतिर्ग्रामणीः । ततो नगरव्यवस्था, तस्या अधिपतिः सभापतिर्गणपतिः, ज्येष्ठराजो वा । ततोऽनेकनगरव्यवस्थार्थं समितिः । ततो राष्ट्राधिपतिः प्रजापतिः । परन्तु सर्वेऽप्येते प्रजावृताः प्रजानियन्त्रिताः । परन्तु प्रजापतिसमय एवानियन्त्रितराजसत्ता प्रादुर्भूता, तस्य यथेष्टाचरणे वधः । ततो द्विराजसत्तानियन्त्रितराज्यम्, ततः पुनरेकाधिपत्यराज्यम् । तथापि प्रजासंमत्यैव राजनियोजनं पूर्वं भारत आसीदिति रामायणकथातो ज्ञायते । यथा—

ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः ।
हितमुद्धर्षणं चैवमुवाच प्रथितं वचः ॥१॥
विदितं भवतामेतद्यथा मे राज्यमुत्तमम् ।
पूर्वकैर्मम राजेन्द्रैः सुतवत्परिपालितम् ॥४॥
सोऽहं विश्राममिच्छामि पुत्रं कृत्वा प्रजाहिते ।
संनिकृष्टानिमान् सर्वाननुमान्य द्विजर्षभान् ॥१०॥
यदीदं मेऽनुरूपार्थं मया साधु सुमन्त्रितम् ।
भवन्तो मेऽनुमन्यन्तां कथं वा करवाण्यहम् ॥१५॥
यद्यप्येषा मम प्रीतिर्हितमन्यद्विचिन्त्यताम् ।

[ वा० रा० अयो० २।१–१६ ]

यवनशासनतः पूर्वं भारते प्रायो राजप्रजयोः संबन्धः पितापुत्रवदासीत् । यथा शिवनृपेणाष्टौ मन्त्रिणो राज्यसंचालनार्थं नियुक्ताः । आङ्गलशासने तु सर्वथा कर्तव्यशून्याः प्रजाभक्षका नृपतयः समजायन्तेति प्रसिद्धमेव ।

अस्तु, साम्राज्यादिराज्यानि दिग्भेदेन ब्राह्मणे वर्णितानि दृश्यन्ते । यथा—

"प्राच्यां त्वा दिशि वसवो देवाः…साम्राज्याय, दक्षिणस्यां त्वा दिशि रुद्राः…भौज्याय, प्रतीच्यां त्वा दिश्यादित्याः…स्वाराज्याय, उदीच्यां त्वा दिशि विश्वे देवा…वैराज्याय" [ऐ०ब्रा०८।१६] इति । भौज्यं लोकनियुक्तमन्त्रियुक्तमेकदेशराज्यम् । सर्वदेशराज्यं साम्राज्यम् । स्वाराज्यं राजशासितं राज्यम् । वैराज्यं प्रजासत्ताकम् । अर्थात् पूर्वस्यां दिशि साम्राज्यसत्ता प्रचलिता । दक्षिणस्यां भौज्यम् । पश्चिमदिशि स्वाराज्यम् अनियन्त्रितराजसत्ता । उत्तरस्यां दिशि सर्वथा प्रजाकृतं राज्यमिति प्रतीयते ॥

# कालतत्त्वम्

श्रीरामसुरेशत्रिपाठी, बी० एस० एस० डी० कालेज, कानपुर ।

शक्त्यात्मदेवतापक्षे भिन्नं कालस्य दर्शनम् ।

[ वाक्यपदीये ३, काल० ६३ ]

अयं संसारः परिवर्तनशीलः । अत एव 'जगत्' इत्युच्यते । रात्रिर्गच्छति, दिवस आयाति । शरद्धेमन्तशिशिरादयः परिवर्तनं द्योतयन्ति । सर्वे ग्रहा नक्षत्राणि च सर्वाण्यनवरतं गतिशीलानि सन्ति । न हि कश्चित् स्वस्मिन्नात्मनि मुहूर्त्तमप्यवतिष्ठते, वर्धते वा यावदनेन वर्धितव्यम्, अपायेन वा युज्यते । तत्र परिवर्तनस्य किञ्चिदवस्थापरिबोधनाय, अवस्थायाश्च पूर्वापरसंबन्धज्ञानाय कश्चिदुपायोऽभ्युपेतव्यः । स एव कालः । अत एव—"येन मूर्त्तानामुपचयाश्च अपचयाश्च लक्ष्यन्ते तं कालमित्याहुः" [२।२।५] इति महाभाष्ये पतञ्जलिः । कालमीमांसा त्वतीव प्राचीना । यद्यपि ऋग्वेदे कालशब्दस्य केवलमेक एव प्रयोगो दृश्यते[1], तथापि मन्त्रद्रष्टॄणामृषीणामेतादृश्या अपि सत्ताया अनुभव आसीद् यया सर्वं परिवर्तनं क्रमबद्धमिव भासते । सा सत्ता 'ऋत' इति नाम्ना ऋग्वेदे प्रसिद्धा । 'ऋ गतौ' इत्यस्माद् धातोर्निष्पन्न [2]ऋतशब्दः सार्वभौमं नियमं द्योतयति । ऋतेन युक्तो वरुणः पश्यति यत् सूर्यचन्द्रादयः सरितो जनाश्च यथावसरं यथास्थानं सम्यक् वर्तयन्ति । वरुण एव 'ऋतवन्' । स कालं वेद—

वेद मासो धृतव्रतो द्वादश प्रजावतः ।
वेदा य उपजायते[3] ॥ [ऋक्० १।२५।८]

वत्सरपरिवत्सरादयः शब्दाः, भूतभव्येत्यादिकालभेदनिरूपकशब्दाश्च ऋग्वेदे उपलभ्यन्ते । तत्र न केवलं कालस्य कालभेदस्य वा चर्चाऽस्ति, अपि तु तद्गतदार्शनिकविवेचनस्यापि

---

१. कृतं यच्छ्वघ्नी विचिनोति काले । [ऋक्० १०।४२।९]

२. अवस्ताया अशशब्दः, १६०० खीष्टाब्दपूर्वेषु पारसीकमुद्रासूल्लिखितः 'अर्त'-शब्दश्च 'ऋत' इत्यस्यैव परिवर्तितं रूपमिति भाषावैज्ञानिकाः ।

३. 'य उपजायते' इत्यस्य 'यस्त्रयोदशोऽधिकमास उपजायते' इत्यर्थः सायण-ग्रासमन-ओल्डन-वर्गादीनां वेदविदां मते ।

बीजमुपलभ्यते। देशकालादयः पुरुषस्य विकाराः। कालादपि पूर्वं कालादपि पश्चात् पुरुष एवावतिष्ठते। कालभेदद्योतकाः सूर्यचन्द्रादयस्तस्मादेवाजायन्त। वसन्तादयस्तस्यैव क्रियाः (वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः [ऋ० १०।६०।६])। पुरुष एव कालः—

पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्। [ऋक्० १०।६०।२] इति।

अथर्ववेदे कालः परमदेवतारूपेण विराजते। तत्र काल एव स्रष्टा। काल एव भर्ता। काले सर्वं प्रतिष्ठितम्। कालस्यालौकिकस्वरूपद्योतकाः कतिपयमन्त्रा इहोदाह्रियन्ते—

कालो भूतिमसृजत काले तपति सूर्यः।
काले ह विश्वा भूतानि काले चक्षुर्विपश्यति॥ [अथर्व० १६।५३।६]
कालो ह सर्वस्येश्वरो यः पितासीत् प्रजापतेः। [अथर्व० १६।५३।८]

कालादापः समभवन् कालाद् ब्रह्म तपो दिशः।
कालेनोदेति सूर्यः काले नि विशते पुनः॥ [अथर्व० १६।५४।१]
काले लोकाः प्रतिष्ठिताः। [अथर्व० १६।५४।४]

आरण्यकेषु कालस्य भौतिकं स्वरूपं दृश्यते—

सूर्यो मरीचिमादत्ते सर्वस्माद् भुवनादधि।
तस्याः पाकविशेषेण स्मृतं कालविशेषणम्॥
[तैत्तिरीयारण्यके, १।२।१]

उपनिषत्सु कालस्वरूपस्य चर्चा यत्र तत्र दृश्यते। विराजः कालस्योत्पत्तिर्यथा—

"सोऽकामयत द्वितीयो म आत्मा जायेतेति, स मनसा वाचं मिथुनं समभवदशनाया मृत्युस्तद् यद् रेत आसीत् स संवत्सरोऽभवत्। न ह पुरा ततः संवत्सर आस। तमेतावन्तं कालमबिभः, यावान् संवत्सरः। तमेतावतः कालस्य परस्तादसृजत" [बृह० उ० १।२।४] इति।

किं सत्यमिति जिज्ञासायामपि कालस्योल्लेख उपलभ्यते। सर्वे भावाः कस्मिंश्चिद्देशे कस्मिंश्चित् काल एवाविर्भवन्ति। अतो रचनाप्रपञ्चस्य कालः कारणं भवितुमर्हति न वेति विचारविमर्शोऽप्युपलभ्यते। स चैवम्—

कालः स्वभावो नियतिर्यदृच्छा भूतस्य योनिः पुरुष इति चिन्त्यम्।
[श्वेता० उ० १।२]

## कालतत्त्वम्

पुराणेषु कालस्य देवतास्वरूपमेव प्रायेण वर्णितम्। ब्रह्माण्डपुराणे ब्रह्माविष्णुयशादयः कालस्याङ्गत्वेन गृहीताः[१]। विष्णुपुराणे कालस्यानादित्वं तस्येश्वरत्वमपि प्रकटीकृतम्[२]। एवं महाभारतेऽपि कालस्यालौकिकप्रभुत्वमुपर्युक्ताथर्ववेदरीत्या विस्तरेण व्यवहृतम्—"कालः पचति भूतानि कालः संहरते प्रजाः" इत्यादिभिः।

वस्तुतः कालस्वरूपस्य विचारो दर्शनग्रन्थेषु सम्यगुपलभ्यते। उपर्युक्तविवरणं तु कालस्य दार्शनिकव्याख्याने पीठिकारूपेणोपयोगीतीह दर्शितम्।

कालशब्दस्य व्युत्पत्तिर्नातिजटिला, तथापि प्रकारभेदो दृश्यतेऽस्य निष्पादने। तत्र यास्कः—"कालः कालयतेर्गतिकर्मणः" [२।२५] इति ब्रूते। क्षीरस्वामी तु—"कलयत्यायुः कालः" इत्याह[३]। पाणिनीयधातुपाठे—'कल शब्दसंख्यानयोः' (४६७), 'कल क्षेपे' (१६०५), 'कल गतौ संख्याने च' (१८६६) इति कलधातोर्बहवोऽर्था दृश्यन्ते। तथापि—"कलयति जगदेष कालोऽतः"[४], "कालोऽपि कल्यते येन", "कालोऽन्यः कलनात्मकः"[५], "सः कलाः कालयन् सर्वाः कालाख्यां लभते विभुः"[६], "कालः कलयतामहम्"[७] इत्यादिषु गत्यर्थे संख्याने च कालशब्दस्य प्रयोगाद् गतिः संख्यानं च कालस्य व्युत्पत्तिलब्धौ धर्माविति निश्चीयते।

---

१. ब्रह्मा विष्णुश्च यशश्च कालस्यैव कलास्त्रयः।
सर्वेष्वेव हि भावेषु चतुर्मूर्तिर्महेश्वरः॥
[ब्रह्माण्डपुराणे, २१ अध्याये]

२. अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते।
अविच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः॥
गुणसाम्ये ततस्तस्मिन् पृथक् पुंसि व्यवस्थिते।
कालस्वरूपरूपं तद् विष्णोर्मैत्रेय वर्तते॥
[विष्णुपुराणे, नागेशकृतयोगसूत्रवृत्तौ ४।३३, वाचस्पत्यकोशेऽप्युद्धृतः]

३. अमरकोशव्याख्याने, १।१।५९

४. भोजराजः।

५ सूर्यसिद्धान्ते, १।१०
तु०—कलणं पज्जायाणं कलिज्जए तेण वा जओ वत्थु।
कलयंति तयं तम्मि व समयाइकलासमूहो वा॥
[अभिधानराजेन्द्रे, तृ० भा० पृ० ४७०]

६. वाक्यपदीये ३ काण्डे, कालसमुद्देशे १४

७. भगवद्गीतायाम् १०।३०

नैयायिका-वैशेषिकाश्च कालस्य बाह्यसत्तां स्वीकुर्वन्ति। तेषां मते कालो द्रव्यम्। कालस्य सत्ता तु परापरचिरक्षिप्रादिलिङ्गैरनुमीयते—"कालः परापरव्यतिकरयौगपद्यायौगपद्य-चिरक्षिप्रप्रत्ययलिङ्गम्। तेषां विषयेषु पूर्वप्रत्ययविलक्षणानामुत्पत्तावन्यनिमित्ताभावाद् यदत्र निमित्तं स कालः"[१] इति। तस्य द्रव्यत्वं तु गुणाधारत्वात् सिध्यति। परापरचिर-क्षिप्रादिकं ज्ञानं त्वादित्यपरिस्पन्देन ज्ञायते। अयमेतदपेक्षया बहुतरतपनपरिस्पन्दावच्छिन्न-जन्मेति धीः परत्वकारणम्। अयमेतदपेक्षयाऽल्पतरतपनपरिस्पन्दावच्छिन्नजन्मेति धी-श्चापरत्वकारणम्। अवच्छिन्नत्वं च संबद्धत्वम्। न च सूर्यगतिः साक्षात् पिण्डसंबद्धा, नापि संयुक्तसमवायः संभवति, पिण्डसूर्ययोः संयोगाभावात्। तथा च संयुक्तसंयुक्तसमवायोऽत्र वाच्यः। पृथिव्यादिषु यत् पिण्डप्राप्तं तन्न सूर्यसंबद्धम्, यत् सूर्यसंबद्धं तन्न पिण्डप्राप्तमित्यप्राप्तिः। किञ्चित् सौरं तेजः पिण्डसूर्योभयसंबद्धमस्तीति चेन्न, क्वचित् पिण्डे तथा भावेऽपि भूनिखा-तादौ तदभावेन व्यभिचारः। एवं चैतादृशमेकं द्रव्यं स्वीकार्यं यद् यावत् पिण्डसूर्यसंबद्धम्[२]। तद् द्रव्यं कालः। अथादित्यपरिवर्तनमेवास्तु किं कालेनेति चेन्न, युगपदादिप्रत्ययानुमेय-त्वात्। न चादित्यपरिवर्तनादेव युगपदादिप्रत्ययाः संभवन्तीति। एकस्मिन्नेवादित्यपरिवर्तने सर्वेषामनुत्पादात्, व्यपदेशाभावाच्च। तथा हि—युगपत्काल इति व्यपदेशः, न युगपदादित्य-परिवर्तनमिति। न च क्रियैव काल इति वाच्यम्, युगपदादिप्रत्ययाभावप्रसङ्गात्।...न च क्रिया काल इति प्रतीयते[३]। प्रसिद्धो नैयायिको रघुनाथशिरोमणिस्तु कालस्य पृथक् सत्तां नाङ्गीकरोति, तस्येश्वरेऽन्तर्भावसंभवात्। तथा हि—"दिक्कालौ नेश्वरादतिरिच्येते, मानाभावात्। तत्त-न्निमित्तविशेषसमवधानवशादीश्वरादेव तत्तत्कार्यविशेषाणामुपपत्तेः"[४]। शिवादित्योऽपि दिक्-कालाकाशानामैक्यं मन्यते—"आकाशादित्रयं तु वस्तुत एकमेव, उपाधिभेदान्नानाभूतम्"[५] इति।

---

१. प्रशस्तपादभाष्ये पृ० ३३८ (चौखम्भा संस्कृत ग्रन्थमाला)

२. किरणावलीभास्करे, पृ० १३७

३. व्योमवत्याम्, पृ० ३४३

४. पदार्थतत्त्वनिरूपणे, पृ० १–३

वेणीदत्तस्तु रघुनाथशिरोमणेर्मतं खण्डयति। तस्य मते—"दिक्कालयोरतिरिक्तत्वान-भ्युपगमे 'पूर्वस्यां घटः', 'इदानीं घटः' इत्याद्यनुगतप्रत्ययानुपपत्तेः। न चेश्वरादेव तथाप्रत्यय-निर्वाहः, उपदर्शितप्रतीतीनां वैलक्षण्यानुपपत्तेः, ईश्वरस्यैकत्वात्" [ पदार्थमण्डने, पृ० १ ]।

५. सप्तपदार्थ्याम्, पृ० २२ (कलकत्ता संस्कृत ग्रन्थमाला)

## कालतत्त्वम्

सांख्यदर्शने कालनामकतत्त्वस्य चर्चा न श्रूयते। केचित् सांख्यमतानुयायिनः शब्द-तन्मात्रायां कालस्यान्तर्भावं कुर्वन्ति। लोकमान्यतिलकेन गौडपादस्य टीकाया आधारेणैका कारिका निष्पादिता, या तस्य मते सांख्यकारिकातः प्रच्युताऽऽसीत्। सा चैवम्—

कारणमीश्वरमेके ब्रुवते कालं स्वभावं वा।
प्रजाः कथं निर्गुणतो व्यक्तः कालः स्वभावश्च ॥

यदीयं कारिकेश्वरकृष्णस्यैव तदाऽत्र व्यक्तत्वं स्पष्टमेव। व्यक्तत्वं च प्रकृतेः परिणामत्वम्। "साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्" [सां०का०३३] इत्यत्रापि कालस्योल्लेखो व्यक्तत्वेनैव ग्राह्यः। अस्मिन् विषये वाचस्पतिमिश्रो व्याहरति यत्—"कालश्च वैशेषिकाभिमत एको न अनागतादिव्यवहारभेदं प्रवर्तयितुमर्हति। तस्मादयं यैरुपाधिभेदैरनागतादिभेदं प्रतिपद्यते सन्तु त एवोपाधयो येऽनागतादिव्यवहारहेतवः, कृतमत्रान्तर्गडुना कालेनेति सांख्याचार्याः। तस्मान्न कालरूपतत्त्वान्तराभ्युपगमः" [सां०त०कौ०३३] इति। *

योगदर्शने कालस्य बुद्धिनिर्माणत्वं दृश्यते। बुद्धिधर्मो हि विषयरूपानुपाती। विषय-भूतक्षणगताल्पत्वमहत्त्ववशेन चिरक्षिप्रादिभावो बुद्धिसंकलनस्य कालरूपस्य व्यवह्रियते। तथा हि—"स खल्वयं कालो वस्तुशून्योऽपि बुद्धिनिर्माणः शब्दज्ञानानुपाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इवावभासते। क्षणस्तु वस्तुपतितः क्रमावलम्बी। क्रमश्च क्षणानन्तर्यात्मा। तं कालविदः काल इत्याचक्षते योगिनः" [योगसूत्रव्यासभाष्ये, ३।५२] इति।

योगवाशिष्ठेऽपि कालस्य बौद्धिक्येव सत्ता स्वीक्रियते। उक्तं च—

विप्र संकल्पमात्रोऽसौ कालो ह्यात्मनि तिष्ठति।
[योगवाशिष्ठे, ५।४६।१४]

देशदैर्घ्यं यथा नास्ति कालदैर्घ्यं तथाङ्गने।
[योगवाशिष्ठे, ३।२०।२८]

निमेषे यदि कल्पौघसंविदं परिविन्दति।
निमेष एव तत्कल्पो भवत्यत्र न संशयः ॥
कल्पे यदि निमेषत्वं वेत्ति कल्पोऽप्यसौ ततः।
निमेषीभवति क्षिप्रं तादृग्रूपात्मिका हि चित् ॥
[योगवाशिष्ठे, ३।६०।२०-२१]

कान्ताविरहिणामेकं वासरं वत्सरायते ।

[योगवाशिष्ठे, ३।२०।५१]

ध्यानप्रक्षीणचित्तस्य न दिनानि न रात्रयः ।

[योगवाशिष्ठे, ३।६०।२६] इति ।

व्याकरणदर्शने क्रियैव कालः । तत्र क्रियैव कालस्य बोधिका । "नान्तरेण क्रियां भूतभविष्यद्वर्तमानकाला व्यज्यन्ते" [ १।३।१ ] इति हि महाभाष्यम् । शक्तिशक्तिमतोरभेदात् क्रियैव काल इति व्यपदिश्यते । "कालो हि प्रसिद्धपरिमाणा क्रिया, अप्रसिद्धपरिमाणस्य क्रियान्तरस्य परिच्छेदिका" [१।१।७०] इति च प्रदीपे कैयटः । गोदोहादिक्रियाविशेषश्च परिमाणत्वात् तदपराप्रसिद्धपरिमाणाऽस्यादिक्रियाविशेषपरिच्छेदहेतुत्वात् कालाख्यामासादयति । गोदोहमास्ते । अन्यतः प्रसिद्धपरिमाणो गोदोहनादिरपि देवदत्तादिगताऽस्यादिक्रियाः परिच्छिन्दन् भवत्येव कालः । यत्र च काचिद् बाह्यक्रिया नास्ति, तत्रापि प्राणप्रवाहादिरूपा क्रिया कालरूपेण परिणमते । प्राणप्रवाहादिकस्य बुद्ध्या संकलनं भवति । बाह्यक्रियाभावेऽपि बुद्धिसंक्रान्ता क्रिया बाह्यापरक्रियापरिच्छेदकत्वात् काल इत्युच्यते । तथा हि—भूयसीनां बुद्धीनामुदये बाह्ये चिरकालत्वमवैति, अल्पीयसीनामुदये क्षिप्रकालत्वमिति । प्राणचारेण च कलयन्त्येवार्थान् योगिनः । अतः क्रियैव कालः । उक्तं च [1]भर्तृहरिणा—

क्रियान्तरपरिच्छेदे प्रवृत्ता या क्रियां प्रति ।
निर्ज्ञातपरिमाणा सा काल इत्यभिधीयते ॥
ज्ञाने रूपस्य संक्रान्तिर्ज्ञनेनैवानुसंहृतिः ।
अतः क्रियान्तराभावे सा क्रिया काल इष्यते ॥ इति ।

परन्तु "कालाः परिमाणिना" [२।२।५] इत्यस्य पाणिनिसूत्रस्य व्याख्यायां पतञ्जलिः कालस्य स्वरूपम्—"येन मूर्त्तानामुपचयाश्चापचयाश्च लक्ष्यन्ते तं कालमित्याहुः । तस्यैव कयाचित् क्रियया युक्तस्याहरिति च भवति रात्रिरिति च । कया क्रियया ? आदित्यगत्या । तयैवासकृदावृत्तया मास इति भवति, संवत्सर इति च भवति" [२।२।५] इत्याह ।

कैयटेन कालस्य द्वे स्वरूपे निर्दिष्टे—"तत्र केचिन्नित्यं कालं पदार्थानामनुज्ञाप्रतिबन्धाभ्यां स्थित्युत्पत्तिप्रलयहेतुमाचक्षते । तत्र संसर्गिसूर्यादिक्रियाभेदाश्रयो मासादिभेदव्यवहारो

१. वाक्यपदीये ३, कालसमुद्देशे, ७७-७८ कारिके । तत्रत्यः प्रकीर्णप्रकाशोऽपि द्रष्टव्यः ।

भूतादिव्यपदेशश्च। अन्ये तु प्रसिद्धपरिमाणा क्रिया सूर्यादिकर्तृकाऽप्रसिद्धपरिमाणायाः क्रियायाः परिच्छेदायोपात्ताऽहरादिव्यपदेश्या काल इत्याहुः" [प्रदीपे, ३।२।८४] इति। तदुभयमपि नागेशभट्टो न सहते—"आद्ये पक्षे क्षणोपाधेर्निर्वक्तुमशक्यत्वम्। उत्तरदेशसंयोगावच्छिन्नक्रियेति चेत्, तस्या विशेष्यविशेषणसंबन्धरूपत्वे त्रयाणामपि स्थिरत्वात् क्षणव्यवहारनियामकत्वाभावः। अतिरिक्ते सिद्धोऽतिरिक्तः क्षणपदार्थ इति तत् प्रचयैरेव कलामुहूर्तादिव्यवहारोपपत्तौ किमखण्डेन तेन।······अन्ये त्विति मतेऽप्येष दोषोऽस्त्येव। किञ्च, प्रसिद्धपरिमाणेत्युक्तिरसंगता, तस्या अपि क्रियान्तरस्यैव परिच्छेदकत्वेऽनवस्थापत्तिरिति" [ उद्द्योते, ३।२।८४ ] इति। [1]नागेशस्य मते प्रकृतेः परिणामस्य विवर्तस्य वाऽतिभङ्गुरस्य विभोः क्षणस्य कालत्वात्। यद्वा शब्दतन्मात्रपरिणाम एव दिग्वत् कालः।

शैवागमेषु परमेश्वरस्य स्वातन्त्र्यशक्तिरूपत्वेन कालो गृह्यते। वाक्यपदीये भर्तृहरिरपि कालं शक्तिरूपेणाङ्गीकरोति—"अव्याहताः कला यस्य कालशक्तिमुपाश्रिताः" [ब्रह्म०, ३] इत्यादौ। कालाख्येन हि स्वातन्त्र्येण सर्वाः परतन्त्रा जन्मवत्यः शक्तयः समाविष्टाः कालशक्तिवृत्तिमनुपतन्ति। ततश्च प्रतिभावं स्वरूपस्य प्रतिबन्धाभ्यनुज्ञाभ्यां शक्त्यवच्छेदेन क्रमवानिवावभासोपगमो लक्ष्यते। सर्वेषां हि विकाराणां कारणान्तरेष्वपेक्षावतां प्रतिबन्धजन्मनामभ्यनुज्ञया सहकारिकारणं कालः। अयं भावः—कालस्य प्रतिबन्धलक्षणैका शक्तिर्भावानामदर्शनं करोति, भावाभासविधायिन्यनुज्ञालक्षणा द्वितीया शक्तिर्भावानामुन्मीलनं करोति। जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यतीत्याचार्यवार्ष्यायणिप्रोक्ताः षड् भावविकारा एतयोरेव क्रियाः। एताभ्यामेव जगद् विपरिवर्तते। अत एव कालं लोकयन्त्रस्य सूत्रधारं प्रचक्षते। स्वातन्त्र्यकल्पनाया मूलं तु "स्वतन्त्रः कर्ता" [१।४।५४] इति पाणिनिसूत्रमिति [2]केचिद् वदन्ति। आचार्याभिनवगुप्तस्तु कालशक्तेर्व्याख्यानमेवं कुरुते—"मायाविषये भगवतः संबन्धिन्याः कर्तृशक्तेः कालक्रमावभासनं नाम व्यापारः, न तु शुद्धसंविन्मात्रत्वे तदवभासनम्। तथा हि—यः कालक्रमो व्यवहारसिद्धः—इदं भातम्, न भाति, भात्येकरसम्, भासिष्यत इत्यादिभूतादिरूपो भावानामन्योन्यासहभावेनोपलभ्यमानत्वम्, तत्त्वस्य यदवभासनम्, यत् संविद इत्थं विमर्शनमप्रतिहतम्, यदहममुनापि रूपेणेत्थं

१. लघुमञ्जूषायाम्, पृ० ८३९-४० (चौखम्बा संस्कृत ग्रन्थमाला)।

२. द्रष्टव्यम्—अभिनवगुप्त एन हिस्टोरिकल एण्ड फिलासफिकल स्टडी, भा० १, पृ० २०३-४

प्रकाशयेत्येवंरूपश्च व्यापारः कर्तव्यं यस्याः परमेश्वरस्वातन्त्र्यशक्तेः, सा कालोत्थापकत्वाद् भगवतः कालशक्तिरित्युच्यते"[१]। अत्र विषये [२]हेलाराजः—"विश्वात्मैक एव परब्रह्माभिधानः सत्यो भावः। स एव नानाविधकार्यकारितयाऽनन्तशक्तित्वेन व्यवह्रियते। तथा च क्रमिकान् चक्रभ्रमिवत् परावर्तमानान् भावान् प्रकाशयन् कालयति भूतानीति काल इत्युच्यते। स विभुः स्वतन्त्रः। अत एव 'स्वातन्त्र्यशक्तिः कालः' इति वाक्यपदीये सिद्धान्तितम्" इत्याह।

अन्ये तु कालो नियतिः कला विद्या रागश्चैतानि मायातस्तत्त्वपञ्चकानि भवन्ति, तेषां कालतत्त्वमेव प्रथममिति वदन्ति। अपरे च पुनः शक्तिः शिवस्य धर्मः। सा शक्तिः द्विविधा—कालशक्तिः, भक्तिशक्तिश्च। तत्र कालशक्तिः कलारूपेण विश्वनिर्माणे हेतुः, वासनारूपेण च प्रवृत्तेः कारणमित्याहुः। वीरशैवतन्त्रे मायायाः सर्वाणि कार्याणि कालशक्त्यान्तर्भवन्ति[३]। विभिन्नशैवतन्त्रेषु कालक्रिया विभिन्नरूपेण दृश्यते, किन्तु कालस्य शक्तित्वं सर्वसाधारणोऽनुगतधर्मः। कालः शक्तिः, विश्वात्मा च कालः।

जैनदर्शने—"वर्तनालक्षणो कालः" [तत्त्वरत्नाकरे, पृ० ४२]। तत्र द्रव्यत्वमस्ति। जैनागमे स्वीकृतेषु षट्सु द्रव्येषु 'अद्धासमयः' एकम्। अद्धासमयः कालस्यैव नाम। तत्र कालस्य 'अस्तित्वम्' विद्यते, किन्तु 'कायत्वम्' नास्ति। जीवाजीवतयाऽप्यस्य विश्लेषणं जैनग्रन्थेषु दृश्यते—"किमयं भन्ते! कालेति पवुचई? गोयमा! जीवा चेव अजीवा चेव इति"।

बौद्धास्तु कालस्य बाह्यसत्तां न स्वीकुर्वन्ति। तेषां नये क्षणिकप्रवाहरूपा विज्ञानसन्ततिरेव कालः।

वेदान्ते परे ब्रह्मण्यध्यारोपिता प्रातिभासिकसत्तैव काल इति स्वीक्रियते। रामानुजस्यापि मते कालस्य स्वतन्त्रमस्तित्वं नास्ति। तथा हि—"कालस्य पदार्थविशेषणतयैव प्रतीतेः, तस्य पृथगस्तित्वनास्तित्वादयो न वक्तव्याः, न च परिहर्तव्याः। कालोऽस्ति नास्तीति व्यवहारो व्यवहर्तॄणां जात्याद्यस्तित्वनास्तित्वव्यवहारतुल्यः" [श्रीभाष्ये, २।२।३१] इति। अद्वैतवादे ब्रह्मण एव वस्तुत्वात् तद्व्यतिरिक्तं सकलं मिथ्याप्रपञ्च एव। अविद्यायां संसारहेतुभूतायां प्रथमं भेदावभासो हि संसारः। भेदश्च देशकालाभ्याम्। तत्र च कालभेदो जगत्सृष्टेराद्यः। निष्क्रमं हि ब्रह्मतत्त्वमकालकलितमविद्यावशात् क्रमरूपोपग्रहेण यथायथं विवर्तत इति कालानुवेधात्

१. ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्याम्, द्वितीये भागे, पृ० ८ (कश्मीर संस्कृत ग्रन्थमाला)

२. प्रकीर्णप्रकाशे—वाक्यपदीयतृतीयकाण्डे, कालसमुद्देशे, १४

३. द्रष्टव्यम्—हैण्ड बुक आफ वैष्णविज्म, बाई नन्दिमथ, १९४२

पदार्थानां क्रमेण प्रत्यवभासोऽनादिसिद्धजीवात्मगतः। सर्वस्य च भेदजातस्याविद्यामयत्वात् कालोऽप्यविद्याविजृम्भित एव। आविर्भूतायां तु विद्यायां सर्वस्य भेदप्रपञ्चस्यापगमादयमप्यपैति। अतोऽस्य वास्तविकसत्ता नास्त्येव।

उपर्युक्त विवरणं दर्शनभेदेन कालस्वरूपसामान्यकथनपरम्। अधुना कालस्य विशेष-गुणा निर्दिश्यन्ते। कालः सर्वत्राविशेषाद् विशेषलिङ्गाभावाच्चैकः। सर्वत्र तद्व्यवहाराद् विभुः। अवयवाश्रयानुपलम्भाद् निरवयवः। अवयवविभागादिनाशकरणानुपपत्तेर्नित्यः। "नित्ये हि कालनक्षत्रे"[१]। स च सर्वकार्याणामुत्पत्तिस्थितिविनाशहेतुः। नागेशभट्टस्तु कालस्यैकत्वं न मन्यते। तस्य मते—"एकत्वे तस्य कार्यवैचित्र्यनियामकत्वानुपपत्तिरिति भाष्योक्तलक्षणानुपपत्त्या क्षणधारारूपः काल इति युक्तम्" [उद्द्योते, २।२।५]। नागेशस्य मते कालस्य नित्यत्वविभुत्वादिकमपि न युक्तम्, कालस्याधिकरणत्वेनैव तत् तत् कार्यं प्रति कारणतयोपाध्यनालिङ्गितस्येदानीं घट इत्यादिव्यवहारोपयोग्यधिकरणासंभवेन तत्परिच्छेदकान्तर-स्वीकारेऽनवस्थापत्तिदोषात्, अद्वैतवादे तदसंभवाच्च। अतो नित्यत्वेन प्रवाहनित्यता ग्राह्या, न तु स्वरूपनित्यता[२]। संख्यापरिमाणपृथक्त्वसंयोगविभागा अपि कालस्य गुणा इति वैशेषिकादयः।

तत्र कालः केषाञ्चित् प्रत्यक्षगम्यः, केषाञ्चिदनुमेयः। महाभाष्यकारस्य मते कालोऽ-नुमानगम्यः। यथा क्रियाऽत्यन्तापरिदृष्टाऽशक्या पिण्डीभूता निदर्शयितुम्, तथैव कालोऽपि। "सूक्ष्मो हि भावोऽनुमितेन गम्यः"[३]। अन्येऽपि दण्डी देवदत्तः, नीलमुत्पलमित्यादिवत् क्रियाति-रेकस्याग्रहणात् प्रत्ययातिशयस्य च परोक्षकालेऽपि तत् तत् कारणकार्योपपत्तेरनुमेय एव काल इति मन्यन्ते। दिग्विपरीतपरत्वापरत्वेन कालोऽनुमीयत इति केचित्[४]। परन्तु जयन्तभट्टादयः कालस्य प्रत्यक्षतां स्वीकुर्वन्ति। तेषां मते प्रत्यक्षत्वं ह्यैन्द्रियकप्रतीतिविषयत्वमुच्यते। तच्चेदस्ति कालस्य नीरूपस्यापि प्रत्यक्षता केन वार्यते?...

न चानुद्घाटिताक्षस्य क्षिप्रादिप्रत्ययोदयः।
तद्भावानुविधानेन तस्मात्कालस्तु चाक्षुषः॥

---

१. महाभाष्ये ४।२।३; तु० 'अहमेवाक्षयः कालः" [भ० गी० १०।३३]

२. लघुमञ्जूषायाम्, पृ० ८४८ (चौखम्बा संस्कृत ग्रन्थमाला)

३. वर्तमाने लट् ३।२।१२३ इति सूत्रस्थं महाभाष्यम्।

४. तर्कभाषायाम्, पृ० ३१

स्वतन्त्र एव तर्हि घटादिवत् कस्मान्न गृह्यते काल इति चेत्, वस्तुस्वभाव एष न पर्यनुयोगार्हः[१]। नागेशस्यापि मते क्षणसमूहरूपः कालः षडिन्द्रियवेद्यः, इदानीं पश्यामि, जिघ्रामीत्यादिव्यवहारात्[२]। मीमांसका अपि प्रातःकालोऽयं सायंकालोऽयमित्यादिप्रत्ययानां सूर्योदयादिदर्शनानुगृहीतनयनजन्यत्वात्कालस्य प्रत्यक्षत्वम्, तस्य षडिन्द्रियग्राह्यत्वं च वदन्ति[३]।

कालस्य भूतभविष्यद्वर्तमानादिभेदस्तूपाधिवशात्। सर्वमेव हि भावजातमुपाधिसंसर्गवशेन भिद्यते, न तु स्वरूपेण। यदा तु क्रिया उत्पन्ना ध्वस्ताश्च भवन्ति, तदा तदुपाधिः कालो भूत इति व्यपदिश्यते। यदा तु क्रियाः संभाव्यमानोदया भवन्ति, तदा तदुपाधिकालो भविष्यदिति कथ्यते। प्रारब्धापरिसमाप्तक्रियोपाधिस्तु वर्तमानसंज्ञः। केचित्तु भूतादिभेदव्यवहारस्य कारणम्—प्रतिबन्धः, अभ्यनुज्ञेति शक्तिद्वयं मन्यन्ते। सततपरिणामिषु हि भावेषु किञ्चिज्जायते, किञ्चिदपक्षीयत इति नियममेतत्। तत्र व्यापारविघातस्वरूपा प्रतिबन्धशक्तिः, तद्विपरीताऽभ्युदयलक्षणाऽभ्यनुज्ञाशक्तिः। ताभ्यां हि जन्मविनाशवत्यो मात्राः काले समापतन्ति। तथा च वस्तुषु भूतादिव्यवहार उपाधिभूतो लक्ष्यते न तु स्वतन्त्रः। अपरे कालभेदस्य कारणं गुणविपरिणाममधिगच्छन्ति। कालोऽपि गुणात्मकः। अजस्रपरिणामिषु भावेषु सत्त्वरजस्तमसां शक्तिमात्रमतीतादिकालभेदसमाख्या। तत्र वर्तमानकालः प्रकाशकत्वात् प्रत्यक्षत्वात् सत्त्वगुणस्याभिव्यक्तिः। प्रकाशकत्वमेव सत्त्वधर्मः। अतीतानागतौ भावावरणहेतुत्वात् तमःस्वभावौ। आवरणं हि तमोधर्मः। रजो हि कालस्वरूपसामान्यम्, चलत्वात् (गतिशीलत्वात्)। प्रवर्तकत्वं रजोधर्मः। केचित्पुनर्वर्तमानशक्त्या सतामेव भावानामाविर्भावो भवति, अतीतानागतशक्तिभ्यां सतामेव तेषां तिरोभावो भवतीति शक्तिभेदादत्र कालभेद उपजायत इति संगिरन्ते—"यथा त्रयः सत्त्वरजस्तमोलक्षणगुणा नित्यत्वाद् युगपदवस्थाना अप्यङ्गाङ्गिभावोपगमेन यथायथं स्ववृत्त्युल्लासे विचित्रपरिणामाद् भावानुपरचयन्ति, तथेमे कालभेदाः स्वशक्तिमाहात्म्याद् भावभेदेषु क्रमोपरचनचतुराः"[४] इति। अवस्थाविशेषस्यैवातीतादिसंज्ञा इति कैयटः[५]। अनागत एव वर्तमानतामुपैति। वर्तमान एवातीतत्वं लभते। किन्त्व-

१. न्यायमञ्जर्याम्, पूर्वभागे पृ० १३७

२. लघुमञ्जूषायाम्, पृ० ८४९ (चौखम्बा संस्कृत ग्रन्थमाला)

३. मानमेयोदये, पृ० १९० (मद्रास संस्करण)

४. हेलाराजीये:, वाक्यपदीयप्रकीर्णप्रकाशे, कालसमुद्देशे, ५२

५. महाभाष्यप्रदीपे, ५।२।४९

तीतस्य पुनर्वर्तमानता नास्ति। जगद्विपरिवर्तेऽपि न तदेवावर्तते, अपि तु तत्सदृशम्। केचित्त्वतीतस्यापि वर्तमानतां स्वीकुर्वन्ति, "नाभावो विद्यते सतः" इति न्यायात्। यत् तिरोभूतं पुनस्तदेवावर्तते। कैयटः सत्तापदेनोपचारसत्तामपि मन्यते। बुद्धिसत्तासमाविष्टोऽर्थो विधिनिषेधजननादिभिः संबध्यते—वृक्षोऽस्ति, वृक्षो नास्ति, वृक्षो जायत इति। अत्यन्ताऽसतोऽपि बहिः शशविषाणादीनर्थान् बुद्ध्या विषयीकृत्य शशविषाणादिप्रयोगः, तस्मात् बुद्ध्याऽऽरूढोपचरितसत्ताशब्दप्रयोगाश्रयत्वादव्यभिचारः। सैव हि बुद्धिसत्ता प्रयोक्तृप्रतिपत्तॄणां बहीरूपतयाऽवभासते। यदि तु वृक्षादीनां बाह्यसत्तासमाविष्टं वस्तु वाच्यं स्यात्, तदा 'वृक्षः' इत्यतः सत्तावगमादस्तीत्यस्य गतार्थत्वात् प्रयोगो न स्यात्। नास्तीत्यस्य च सत्ताविरोधात् प्रयोगाऽप्रसङ्गः। 'अङ्कुरो जायते' इति च प्रयोगो न स्यात्, सतो जन्मविरोधात्। उपचारसत्तायां त्वेते दोषा नावतरन्ति। बुद्धिसत्तासमाविष्टस्य बहिः सत्त्वासत्त्वजननप्रदिपादनायास्तिना अस्ति, जायत इति प्रयोगात्। परन्तु कैयटस्य मते या मुख्या सत्ता सा भूतभविष्यत्सत्तेति व्यपदेष्टुं न शक्यते। सदित्यस्य लडन्तस्य वर्तमानकालविषयत्वात्, भूतभविष्यतोः सत्तेति संबन्धाप्रयोगात्। नापि 'भूता सत्ता', 'भविष्यन्ती सत्ता' इति सामानाधिकरण्येन संबन्धोपपत्तिः। अथाऽऽश्रयस्य भूतभविष्यत्वाद् भूता सत्ता, भविष्यन्ती सत्तेत्युच्यते, तथाप्यसौ वर्तमाना न भवतीति तत्र प्रत्ययाभावः। तेन 'गावोऽस्य आसन्', 'गावोऽस्य भवितारः' इत्यत्रार्थे 'गोमान्' इति प्रयोगो न भवति[१]। महाभाष्यकारस्त्विन्द्रियसंबन्धेनापि भूतादिव्यपदेशत्रयं द्योतयति। स अतीव सरलया रीत्यैनं सूक्ष्मविषयमित्थं प्रतिपादयति—"इह हि किञ्चिदिन्द्रियकर्म, किञ्चिद् बुद्धिकर्म। इन्द्रियकर्म समासादनम्, बुद्धिकर्म व्यवसायः। एवं हि कश्चित् पाटलिपुत्रं जिगमिषुराह—योऽयमध्वा गन्तव्य आपाटलिपुत्रादेतस्मिन् 'कूपो भविष्यति'। अनद्यतने 'कूपो भविता' इति। समासाद्य 'कूपोऽस्ति' इति। समासाद्यातिक्रम्य 'कूपोऽभूत्' इति। समासाद्यातिक्रम्योषित्वा 'कूप आसीत्' इति। समासाद्यातिक्रम्योषित्वा विस्मृत्य 'कूपो बभूव' इति। तद् यदेन्द्रियकर्म तदेता विभक्तयः, यदा हि बुद्धिकर्म तदा वर्तमाना भविष्यति" [३।२।१२३] इति। भर्तृहरिणाऽप्युक्तम्—

सतामिन्द्रियसंबन्धात् सैव सत्ता विशिष्यते।
भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः॥

---

१. महाभाष्यप्रदीपे, ५।२।९४

अस्तित्वं वस्तुमात्रस्य बुद्ध्या तु परिगृह्यते।
यः समासादनाद् भेदः स तत्र न विवक्षितः ॥[1]

द्रष्टृभेदेनापि कालभेदव्यवहारो लोके दृश्यते। त्रैकाल्यं खल्वपि लोके लक्ष्यते—"गच्छ हन्यते कंसः। गच्छ घानिष्यते कंसः। किं गतेन, हतः कंस इति" [महाभाष्ये, ३।१।८७] इति।

कालभेदेषु वर्तमानस्य विचारो विस्तरेणोपलभ्यते दर्शनग्रन्थेषु, विशेषतः कात्यायनस्य वार्त्तिकेषु महाभाष्ये वात्स्यायनभाष्ये च। तत्र केचिद्वदन्ति यद् भूतभविष्यत्प्रतियोगी वर्तमानकाल इह गृह्यते। परन्तु नात्र भूतभविष्यन्तौ कालौ स्तः, नित्यप्रवृत्तस्य भूतभविष्यत्त्वाभावात्। अतो वर्तमानकालोऽपि न विद्यत इति। तन्न युक्तम्। यतो हि यत्रारम्भोऽनपवृक्तस्तत्र वर्तमानकालो भवत्येव। अनपवृक्तता मुख्यकालस्यावाप्तिपर्यन्तं ग्राह्या, न त्ववान्तरस्य। तेन 'देवदत्तोऽधीते' इत्यत्राध्ययनक्रियायाः स्नानव्यायामादिक्रियाभिर्व्यवधानेऽपि वर्तमानताऽस्त्येव। तदुक्तं महाभाष्ये—"भुङ्क्ते देवदत्त इति, तेनैतत् तुल्यम्। सोऽपि ह्यवश्यं भुञ्जानो हसति वा जल्पति वा पानीयं वा पिबति। यद्यत्र युक्ता वर्तमानकालता दृश्यते, इहापि दृश्यताम्" [३।२।१२३] इति। [2]अथ वृन्तात् प्रच्युतस्य फलस्य भूमौ प्रत्यासीदतो यदूर्ध्वं स पतितोऽध्वा, तत्संयुक्तः कालः पतितकालः। योऽधस्तात् स पतितव्योऽध्वा, तत्संयुक्तः कालः पतितव्यकालः। नेदानीं तृतीयोऽध्वा विद्यते, यत्र पततीति वर्तमानः कालो गृह्येत। तस्माद्वर्तमानः कालो न विद्यत इति चेन्न, अतीतानागतयोर्ज्ञानार्थं वर्तमानकालस्यावश्यकत्वात्, क्रियाद्रव्ययोः संबन्धग्रहणे सहायकत्वात्। नातीतानागतयोरितरेतरापेक्षा सिद्धिः[3]। किञ्च, पतनादयः क्रिया वर्तमानेष्वपयान्त्युपयान्ति च। अस्तिक्रिया तु सर्ववर्तमानव्यापिनी। तदेवमस्तिक्रियाविशिष्टस्य वर्तमानस्याभावे सर्वाग्रहणम्, प्रत्यक्षानुपपत्तेः। स च वर्तमानः काल उभयथा गृह्यते। क्वचिदर्थसद्भावव्यङ्ग्यः, यथा अस्ति द्रव्यमिति। क्वचित् क्रियासन्तानव्यङ्ग्यः, यथा पचतीति। "वर्तमाने लट्" [३।२।१२३]

१. वाक्यपदीये, तृतीयकाण्डे, कालसमुद्देशे ११२-११३
२. वात्स्यायनन्यायभाष्यम्, २।१।४०
३. न्यायसूत्रम्, २।१।४२

इति सूत्रे महाभाष्य उभयमपि पक्षमेवं निरूपितम्—"अपर आह—नास्ति वर्तमानः काल इति। अपि चात्र श्लोकानुदाहरन्ति—

न वर्तते चक्रमिषुर्न पात्यते न स्यन्दन्ते सरितः सागराय।
कूटस्थोऽयं लोको न विचेष्टिताऽस्ति यो ह्येवं पश्यति सोऽप्यनन्धः॥

मीमांसको मन्यमानो युवा मेधाविसंमतः।
काकं स्मेहानुपृच्छति किं ते पतितलक्षणम्॥
अनागते न पतसि अतिक्रान्ते च काक न।
यदि सम्प्रति पतसि सर्वो लोकः पतत्ययम्॥
हिमवानपि गच्छति॥ (इति व्यवहारः स्यादिति शेषः)
[1]अनागतमतिक्रान्तं वर्तमानमिति त्रयम्।
सर्वत्र च गतिर्नास्ति गच्छतीति किमुच्यते॥

सिद्धान्तमाह—

क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद्विचेष्टितम्।
तत्समीक्ष्य प्रयुञ्जीत गच्छतीत्यविचारयन्॥

अस्ति वर्तमानः कालः। आदित्यगतिवन्नोपलभ्यते। अपि चात्र श्लोकमुदाहरन्ति—

विसस्य बाला इव दह्यमाना न लक्ष्यते विकृतिः सन्निपाते।
अस्तीति तां वेदयन्ते त्रिभावाः सूक्ष्मो हि भावोऽनुमितेन गम्यः॥" इति।

अत्र नागेशभट्टः—"वर्तमानत्वं प्रारब्धाऽपरिसमाप्तत्वम्। न त्वेकत्र क्षणे तत्त्वं संभवति। तस्मादारब्धत्वमतीतक्षणमादाय, असमाप्तत्वं तु भविष्यत्क्षणमादायेत्येव समर्थनीयम्। क्षणा एव च क्रियाधारा इति। न च तत्तत्कालसंबन्ध एव वर्तमानत्वमिति वाच्यम्, एवं हि परं प्रति 'पश्य मृगो धावति' इति शब्दप्रयोगानुपपत्तेः। नहि स्वज्ञानप्रभृति परज्ञानपर्यन्तमेकः क्षणोऽस्ति। समूहरूपत्वे त्ववयवान्तरावच्छेदेन स्वानुभूतां वर्तमानतामवयवान्तरावच्छेदेन परं बोधयितुं तदुपपत्तेः" [प्रदीपोद्द्योते, १।३।१] इत्याह। अन्ये तु केवलवर्तमानक्षणस्यैव सत्तामङ्गीकुर्वन्ति। एक एव क्षण उपलभ्यते, नातीतो नानागतः। "वार्तमानिक एव समयरूपः सद्रूपः[2]"। "ये तु भूतभाविनः क्षणास्ते परिणामान्विता व्याख्येयाः। तेनैकेन क्षणेन कृत्स्नो लोकः परिणाममनुभवति। तस्माद्वर्तमान एवैकः क्षणः, न पूर्वोत्तरक्षणाः सन्ति[3]"। वस्तुतः

१. अयं श्लोको नागार्जुनस्य माध्यमिककारिकायामप्युपलभ्यते।
२. अभिधानराजेन्द्रे तृतीयभागे पृ० ४९१
३. योगसूत्रव्यासभाष्ये, ३।५२

फलकामना नाम मानसो व्यापारो भौतिकक्रियाप्रवृत्तौ हेतुः, तत्र विप्रसृतावयवक्रियाकलापो बुद्धौ संक्रान्ताकार एकत्वेन निश्चीयते। क्रमेणानुभूतानामपि संकलना भवत्येव, अनुभववासनायाः प्रत्यासन्नत्वात्। अनुभवपूर्वकत्वं हि स्मरणस्य नियतम्। अत एकबुद्धिरूपतयाऽध्यवसनाद्बाह्यमेकं वर्तमानं व्यवह्रियते। वर्तमानसमीपे भूतं भविष्यच्च वर्तमानतामुपयातः। 'गोमान् आसीत्' इत्यादिषु वर्तमानभूतभविष्यत्सत्तैकत्र गम्यते। 'अग्निष्टोमयाज्यस्य पुत्रो जनिता', 'भावि कृत्यमासीत्', 'पुत्रो जनिष्यमाण आसीत्' इत्यादिलौकिकप्रयोगेषु भूतकालोऽपि भविष्यत्कालेनाभिसंबध्यमानो भविष्यत्कालः संपद्यते। अतः कालभेदानामुपाधित्वमप्यन्योन्यसंक्रमितमिव। यथार्थतः काल एक एव, भेदस्त्ववस्थाद्रष्ट्रादिसापेक्ष इति पूर्वमेव निवेदितम्।

एतावत् पर्यन्तं केवलभारतीयदार्शनिकानामेव मतानि संक्षेपतः संकलितानि। किन्तु नहि भारत एव जगत्। नापि विचारपरम्परा अत्रैव। 'समानधामानः' विश्वस्वरूपचिन्तनपरायणा दार्शनिका आसन्, सन्ति चातिविपुलायां पृथिव्यां सर्वत्र। न हि देशभेदाद् ज्ञानं भिद्यते। पाश्चात्त्यदर्शनस्येतिहासेऽपि कालस्वरूपविचारो विस्तरेण दृश्यते। तत्रत्यप्रतिनिधिभूतान् कांश्चित् दार्शनिकानवलम्ब्य तत्र प्रतिपादितं कालस्वरूपं दिङ्मात्रेण प्रदर्श्यते, येन प्राच्यपाश्चात्त्यपद्धतीनां तुलनात्मकसमीक्षया सत्यजिज्ञासायां किञ्चित् साहाय्यं स्यात्; यद्यपि कालस्य लक्षणे व्यक्तिगतविचारवैचित्र्यसंभवेऽपि संकलनात्मकरूपेण प्राच्यपाश्चात्त्यदार्शनिकेषु नातिभिन्नतेति शीघ्रमेवाग्रे स्फुटीभविष्यति।

दार्शनिकशिरोमणेः प्लेटो (४२७ खीष्टाब्दपूर्व) महोदयस्य मतानुसारेणेश्वरात् कालः समजायत। ईश्वरो यथासंभवं बुद्धिसंपन्नं जगन्निर्मातुमकामयत। किन्तु तस्य नित्यत्वमसंभवमित्यवगम्य नित्यतायाः सदृशतमं किञ्चिद् वस्तु निर्मातुमिच्छया नित्यताया एव प्रतिरूपां संचारिणीमेकां निर्मितिं चकार। सैव कालः। स च आदित्यगत्या नितरां संबद्धः। नित्यता अविच्छिन्ने विश्राम्यति, तस्याः प्रतिरूपं त्वनवरतं क्रमरूपेण प्रभवति। [1]प्लेटोमहोदयः पुनर्भाषते यत्—"अहोरात्रमासायनादीन्यादित्यग्रहादीनां निर्माणात् पूर्वं नासन्। अतः स (ईश्वरः) तानि यथाकल्पितमकल्पयत्। अहोरात्रमासादिकाः कालस्य भेदाः। 'आसीत्', 'भविष्यत्' चेत्युभौ कालस्याङ्गभूतौ। तौ नित्यस्य धर्माविति त्वविचारिताभिधानम्।

---

१. द्रष्टव्यः प्लेटोनिर्मितः 'टाइमेन्स एण्ड क्रिटिआस' नामको ग्रन्थः, प० इ० तायलरमहोदयेनानूदितः, पृ० ३४

वयं वदामः—आसीत्, अस्ति, भविष्यति च। परन्तु वस्तुतः 'अस्ति' इत्येव ( वर्तमान एव ) तस्य धर्मः, 'आसीत्', 'भविष्यति' च गतिमयत्वात् काले प्रभवमानं प्रत्युच्येते" इति।

सर्वतन्त्रस्वतन्त्रस्य 'अरस्तू' महोदयस्य[1] ( ३८४-३२२ खीष्टाब्दपूर्वं ) मते—"पूर्वापरसंबन्धविशिष्टः क्रियात्मकः क्रमः कालः" इत्युच्यते। अत्र क्रमपदेन क्रमवान् लक्ष्यते।

धार्मिकतत्त्वचिन्तकः [2]प्लोटिनसमहोदयः (२०४-२६६ ई०) मन्यते यत्—"आत्मनोऽजस्रप्रवाहितशक्तेः कालः समभवत्, वस्तुषु तस्यानन्ततां नित्यपूर्णतां चाभिव्यक्तुम्। एकपद एवेदं कार्यमसंभवमिति संलक्ष्य कालः क्रमेण प्रवर्तमानासु क्रियासु पदं चकार। आत्मनि परिनिष्ठितमात्मनो जीवितमेव कालः। किञ्च, नित्यत्वेन सह बुद्धिजीविनो जन्तोर्जीवने पूर्णेनाऽखण्डितरूपेण सर्वथाऽनपायिरूपेण च विराजते" इति।

पाश्चात्यदर्शनेतिहासस्य मध्ययुगे ( ४७६ ई०—१४५३ ई० पर्यन्तम् ) न काचित् कालस्वरूपविषयिणी नूतना गवेषणोपलभ्यते। प्रायः 'अरस्तू' इत्यादिभिः प्राचीनैरुपकल्पितं काललक्षणमेव मध्ययुगेऽपि प्रचलितमासीत्।

अद्वैतवादी [3]स्पिनोजा (१६३२-१६७७ ई०)—"कालः काल्पनिक उपस्थितिमात्रं सर्वथा तात्त्विकमहत्त्वविरहितः" इति मन्यते।

अणुवादी [4]लिबनिजः ( १६४६-१७१६ ई० ) आचष्टे यत्—"कालः संभाव्यघटनानां संभाव्यदशानां पूर्वापरयुगपदादिसंबद्धः प्रकारविशेषः। स मन्यते यत् सर्वे संभाव्यलोकाः काल एव संभवन्ति, यद्यपि दृश्यसंसारस्य कालिकसंबन्धविशेषा वस्तुतोऽनिश्चिताः" इति।

प्रसिद्धयथार्थवादी राजनीतिकदार्शनिको [5]लॉकमहोदयः ( १६३८-१७०४ ई० ) लिखति यत्—"कालस्य प्रज्ञानं तु न मुख्यतया क्रियाश्रितम्, अपि तु चित्तसंक्रान्तविकल्पानां क्रमिकप्रवाहेण, क्रमेषु चैकविकल्पानन्तरं यद् द्वितीयविकल्पस्य प्रज्ञानं भवति तयोरन्तरस्य च परिज्ञानेन संजायते। अस्मन्मते एकस्य प्रज्ञानस्य यावदनुभवश्चित्ते तावत् कालः क्षण इत्यु-

१. द्रष्टव्यम्—इन्साइक्लोपीडिया आफ रिलीजन एण्ड एथिक्स, भा० १२, पृ० ३४४

२. द्रष्टव्यः—"डिक्शनरी आफ फ़िलॉसफी एण्ड साइकोलॉजी" नामको ग्रन्थः, श्रीबल्डविनविरचितः, पृ० ७००

३. द्रष्टव्यः—"डिक्शनरी आफ फिलॉसफी एण्ड साइकोलॉजी" नामको ग्रन्थः, श्रीबल्डविनविरचितः, पृ० ७००

४. द्रष्टव्यम्—'इन्साइक्लोपीडिया आफ रिलीजन एण्ड एथिक्स', भा० १२, पृ० ३४४

५. द्रष्टव्यानि—११-१४ निबन्धानि, श्रीबल्डविनविरचितः कोशश्च, पृ० ७००

च्यते" इति। अत्रेदं स्मर्तव्यं यद् लॉकमहोदयस्य मते चित्तं सर्वथा परम्परागतसंस्कारशून्यं शून्यगृहमिवं कयाचिदपि रेखयाऽचिह्नितं शुभ्रपत्रमिव लोकयात्राया प्रारम्भे तिष्ठति। सर्वाणि प्रज्ञानानि बाह्यत एवास्मिन् प्रविशन्ति। किन्तु चित्तं ग्राह्यकं क्रियाशीलं च भवति।

विचारकप्रवरस्य [1]काण्टस्य (१७२४–१८०४) मते—"कालोऽनिवार्यतः प्रतीककल्पोऽस्माकं सर्वेषां संवेदनानां मूलेऽवतिष्ठते। सर्वे दृश्यपदार्थाः सामान्यतः कालावच्छिन्नरूपेण भासन्ते। ते कालाद् बाह्या असंबद्धाश्चेति चिन्तितुं न पारयामः, किन्तु तेभ्यः स्वतन्त्रः काल इति विचारस्त्वस्माकं मनस्युदेत्येव सम्यक्। अत एव काल एकः पूर्वभावः। अस्मिन्नेव सर्वेषां दृश्यवस्तूनां सत्ता संभवति। विचारपरम्परायां पदार्थानामसद्भावः प्रतिभासेताऽपि, परन्तु पदार्थसंभावनायाः सार्वभौमहेतोः कालस्यास्तित्वं तथा प्रत्याख्यातुं न शक्यम्" इति। काण्टः पुनर्ब्रूते यत् कालः केवलमस्माकमिन्द्रियजन्यज्ञानानां विषयिगतदशा। चित्ताद् विषयिणो वा स्वतन्त्राऽस्य स्थितिर्न संभवति। अस्माकमन्तःसंवेदनात् (चित्तपरिस्पन्दात्) व्यतिरिक्तं कालनामकं किञ्चिद् वस्तु नास्ति। यदि चित्तस्येन्द्रियग्राहकयोग्यता नश्येत् कालस्य बोधोऽपि विनश्येत्। नाप्ययं वस्तुषु समवायसंबन्धेन तिष्ठति, अपि तु तस्मिन् चित्ते नितान्तं निवसति यत् तमवगच्छति। तथाप्यस्माकमिन्द्रियजन्यज्ञानानां कालावच्छिन्नत्वादस्य विषयगतत्वमप्यापाततो युक्तमिति। काण्टस्य मते कालः स्वयं न परिणमते, किन्तु केवलं कालावच्छिन्नानि वस्तूनि परिवर्तनमावहन्ति।

इत्थमैतिहासिकपद्धतिमाश्रित्य संसारप्रसिद्धानां कतिपयदार्शनिकानां कालमीमांसा सूचिता। इदं स्पष्टं यद् दार्शनिकानां विचारभेदनिबन्धनः कालस्वरूपभेदोऽसमञ्जसतां गाहते। अत्र च बहुविधा विप्रतिपत्तयः संभवन्ति। तथापि सामान्यतया पञ्च विकल्पा निष्कर्षे निष्पद्यन्ते। तत्र—

प्रथमः—कालो द्रव्यम्। अस्मिन् पक्षे नैयायिकाः, जैनाः, अन्ये च कालस्य विषयगतत्वाभिधायिनः सन्ति।

द्वितीयः—कालः परिवर्तनानुमेय आदित्यगत्या भेदव्यवहारवान्। प्लेटो, अरस्तू, पतञ्जलिः (महाभाष्यकारः) प्रशस्तपादादयश्चास्य मतस्य पोषकाः।

तृतीयः—कालश्चित्तविकल्पो विषयिगतः। योगवाशिष्ठकर्तुः काण्टस्य चेदं दर्शनम्, योगदर्शनं चास्य पक्षस्य समर्थकम्।

१. द्रष्टव्यः— श्रीकाण्टविरचितः "क्रीटिक्यु आफ प्योर रीजन" नामको ग्रन्थः, श्रीमेकलेजोह्नमहाशयेनानूदितः, पृ० २८-३५।

चतुर्थः—कालः शक्तिविशेषः। वेदाः, शैवागमाः, निओ-प्लेटोनिकसाहित्यं चास्य मतस्योद्भावकानि।

पञ्चमः—कालस्य बाह्यं बौद्धिकं वाऽस्तित्वं नास्ति। बौद्धाः, अद्वैतवादिनः, स्पिनोजाप्रभृतयोऽस्य मतस्योद्घोषयितारः।

कालस्य द्रव्यत्वाभिधाने नैयायिकानां सदोषा द्रव्यपरिभाषैव कारणम्। कालो विषयाश्रितो भवितुमर्हति, परमेतेन तस्य द्रव्यत्वं न सिध्यति। पृथक्त्वसंयोगत्वादिगुणाधारत्वेन तस्य द्रव्यत्वमित्यप्यसुन्दरम्, पृथक्त्वादीनामनियमितत्वात्। ये तु—"परिवर्तनलक्ष्यः कालः सूर्यगत्या भिद्यते" इति वदन्ति तेऽपि वस्तुतः कालस्य स्वरूपं न, अपि तु तस्य ज्ञानप्रकारं निर्दिशन्ति। "कालश्चित्तविकल्पः" इति पक्षश्चांशिकरूपेणैव साधुः। कालस्य चित्तविपरिणामसंवेदनत्वस्वीकारे तस्य सार्वभौमता नश्यति। तस्य विकल्पस्वरूपत्वं व्यक्तिगतदृष्ट्या संभवेदपि, किन्त्वजस्रगतिशीलानां ग्रहाणामन्येषामपि चेतनकल्पानाम्, अवचेतनानाम्, अचेतनानां च प्रकृतिपिण्डानामुदयास्ते नायं सिद्धान्तः सम्यक् प्रभवति। किं चायं पक्षोऽपि कालबोधस्य यथा व्याख्यां कुरुते न तथा कालस्वरूपस्य। कालस्य शक्तिरूपत्वमपि शङ्कास्पदम्। प्रकृतिः शक्तिस्वरूपा। अतः सर्वेऽपि विकाराः शक्तिमयाः। यत् किञ्चिदपि वस्तु पिण्डीभूतं शक्तिप्रवाह एव। प्रवहमाणा विद्युत्कणा अणवश्चान्ततः शक्तिसमूहा एव। अतः कालोऽपि शक्तिः स्यात्। किन्तु कालशक्तावणुशक्तेः किं वैलक्षण्यमिति न स्फुटम्। अर्थात् कालस्य शक्तित्वपक्षे कालस्य व्यावर्तकधर्मस्तस्य स्वरूपे न भासते। येऽत्र कालस्य सत्तां न मन्यन्ते, ते प्रथमं जगतः सत्तामेव न मन्यन्ते। अतोऽलमत्र तेषां समीक्षया। वस्तुतः कालस्य दार्शनिकविवेचनमपूर्णमिति नूतनतमाभिर्वैज्ञानिकोपपत्तिभिः स्फुटं प्रतीयते।

तत्र मनोवैज्ञानिकाः स्वपद्धतिभिः कालस्य रहस्योद्घाटने प्रवृत्ताः सन्ति, एवं वैज्ञानिका अपि। मनोवैज्ञानिकाः प्रधानतया कालस्य मूलं नान्विष्यन्ति, अपि तु कालस्य संवेदनं कथं जायते, तस्य प्रत्यक्षं कथं संभवति, तस्य चिरक्षिप्रादिकभेदा अस्माकं मानसिकदशाभिः सह कथं संबद्धा इत्यादीनां प्रश्नानां समाधानं कुर्वन्ति। ते कालस्य संबन्धं प्रधानतयाऽस्माकं स्मृतिज्ञानेन संभावनात्मकज्ञानेन च सह स्थापयन्ति।

कालस्य विशदं विश्लेषणमाधुनिकभौतिकविज्ञाने निपुणं संजायते। अद्यतनवैज्ञानिकानामग्रेसर आईन्स्टाइनमहोदयो युगप्रवर्तकमेकं सिद्धान्तं स्थापयति। स च सिद्धान्तः 'सापेक्षवाद' इति नाम्ना न केवलं विज्ञाने, न केवलं दर्शने, अपि तु कलासाहित्यादिकेष्वपि

प्रतिपच्चन्द्र इवाभिनवं प्रकाशं विकिरन्ननुदिनं वृद्धिमापद्यते। ग्रहाणामत्यन्ततीव्रगतीनां संकलनेनात्यन्तसूक्ष्मगणितधिया निर्धारित एष सिद्धान्तः। गणितशास्त्रेषु नितान्तं निष्णात एवास्य सम्यग् विवेचने समर्थः। अतो नाहं प्रभवाम्यस्योपपत्तिमत्र विधातुम्। अस्माकं त्वत्र नास्ति तस्य गणितेन प्रयोजनम् (यद्यप्यावश्यकम्), अपि तु निष्कर्षेण। प्रसिद्धवर्तमान-दार्शनिको [1]ह्वाइटहेडमहोदय उद्घोषयति यत्—"सापेक्षतासिद्धान्तोऽस्माकमनुभवस्य सहजतम-साधारणीकरणस्य फलम्। गणितबलेनैवास्य सिद्धिरिति न वाच्यम्" इति। अस्तु, सापेक्षता-सिद्धान्तस्यैष निष्कर्षो यत् दिक्कालौ न निरपेक्षौ। तयोर्न स्वतन्त्रसत्ता। दिग्वर्तिदूरादिपरिमाणज्ञानं कालपरिमाणज्ञानं विनाऽसंभवमेव। कस्मैचित् प्रेक्षकाय नियतदिग्विस्तारो नियतकाल एव प्रकाशगत्याऽऽक्रान्तो दृश्यते। अतस्तस्य कृते तन्नियतदिग्विस्तारपरिमाणं तन्नियतकाल-परिमाणं च समाने। यदि कालपरिमाणं 'सेकेण्ड' इत्यस्ति, तदा तद् दिग्विस्तारपरिमाणं ३००००० 'किलोमीटर'[2] भविष्यति। एतेनेदमायाति यत् प्रकाशगतेर्निश्चितत्वात्, प्रत्येककालपरिमाणं दिग्विस्तारपरिमाणेन मापयितुं शक्यम्। अत एव सापेक्षतावादिनः कालं 'दिशश्चतुर्थः प्रकारविशेषः' इति मन्यन्ते। केचित् द्वे घटने भवतः। अनेकत्र स्थितानां पर-स्परं गतिशीलत्वेन संबद्धानां प्रेक्षकसमूहानां तयोर्दिग्विस्तारभेदस्य कालभेदस्य च बोधो भिन्नभिन्नरूपेणोत्पद्यते। परन्तु यदि द्वयोः कालगतान्तरस्य परिमाणं दिग्भागरूपेण स्यात्, एवं घटनयोर्यदन्तरं तस्य ग्रहणं विस्ताररूपेण यदि स्यात्, तदा विस्तारस्य वर्गः कालगतान्तरस्य दिग्विस्तारगतान्तरस्य च वर्गयोर्यदन्तरं तेन तुल्यो भविष्यति। तथा च सर्वेषां प्रेक्षकगणाना-मन्तरस्य याथार्थ्यं समानरूपेणैव भविष्यति। यथा सूर्यं स्थिरीकृत्य पृथिव्या एव भ्रमणकल्पनायां लाघवं भवति, तथैवान्तरमाश्रित्य कालस्य दिग्विस्ताररूपेण गणना सौकर्य्यातिशयाय कल्पते। एवं दिक्कालयोः सापेक्षता। बहुभिश्च गणितशास्त्रीयसूक्ष्मविवेचनैरेष एव निष्कर्षः संपाद्यते। प्लांकनामकविज्ञानाचार्यस्य 'क्वांटम' सिद्धान्तोऽप्युपर्युक्तमतं द्रढयति। "स्वप्ने एकक्षणगतोऽनुभवो जाग्रदवस्थायां दिवसमप्यपेक्षत इतीदमपि तथ्यं कालस्य सापेक्षत्वमभिव्यनक्ति" इति ह्याधुनिक-चिन्तकाः[3]। सुविख्यातगणितज्ञदार्शनिको मीन्कोवस्कीमहोदयः साधिकारं ब्रवीति यत् सम्प्रति दिग् दिग्रूपेण, कालः कालरूपेण च न किञ्चिदर्थं जनयतः, केवलं द्वयोः संमिश्रणमेवावतिष्ठते[4]।

---

१. द्रष्टव्यः—'दी प्रिंसिपुल्स आफ नेच्युरल नॉलेज" नामको ग्रन्थः, पृ० VII

२. १ किलोमीटर = २/३ क्रोशमितः प्रायेण।

३. द्रष्टव्यम्—माननीयडा०संपूर्णानन्दकृतः 'चिद्विलास' नामको ग्रन्थः, पृ० १५, ७४

४. "टाइम एण्ड इट्स मिस्ट्रीज, सिरीज १, भा० २, पृ० ६७ इत्यत्रोद्धृतम्।

## कालतत्त्वम्

अयं सापेक्षवादः कतिपयदार्शनिकेषु विक्षोभं जनयति। यतोऽयं कार्यकारणभावस्यानियमितत्वं सूचयति, भाग्यवादस्य ( डिटरमिनीज्म ) भाग्यं बलाद् हरति, विश्वं सान्तमिति संकेतयति, दार्शनिकानां कालस्वरूपं तु काल इव कवलयत्येव। विक्षोभस्तु सदाऽनादरणीय एव, दार्शनिकजने वा भवतु प्राकृतजने वा भवतु। भौतिकविज्ञानं यदि स्वप्रणाल्या सत्यं साक्षात्कर्तुं यतते, श्लाघ्यमेवैतत्। यद्येतत् कालस्य सापेक्षत्वं निवेदयति भवतु नामैतस्यापि साहाय्यं तत्त्वबोधे।

प्राचीनभारतीयदर्शने दिक्कालौ प्रायेण स्वतन्त्रौ। कालः क्रियामात्रोपाधिनिबन्धनः, दिक् तु मूर्तमात्रोपाधिनिबन्धना। कालो नियतोपाध्युन्नायकः, दिक् त्वनियतोपाध्युन्नायिका। तथापि तत्रापि यत्र तत्र सापेक्षत्वस्य च्छाया दृश्यते। दिक्कालौ परस्परसंबद्धाविति तु तयोः सदा सहैव विवेचनात् स्पष्टम्। रघुनाथशिरोमणिस्तु दिक्कालयोरीश्वरेऽन्तर्भावं करोतीति पूर्वमेवोक्तम्। शिवादित्योऽपि दिक्कालयोर्भेदं न मन्यते—"दिक्कालयोश्चैकत्वेनैव व्यवहारोपपत्तावनेकत्वकल्पनायां प्रमाणाभावात्"[१] इति। चन्द्रकान्ततर्कालङ्कारोऽपि समुदीरयति यत्—"कणादस्य मते दिक्, कालः, आकाशश्चैकमेव द्रव्यम्। तेषां पृथगभिधानं तु कार्यभेदेन बाह्यावस्थाभेदेन च संभवति"[२]। तथापि सापेक्षवादस्य साङ्गोपाङ्गविवेचनमाधुनिकवैज्ञानिकैरेव क्रियते, अतस्त एव कीर्तिमन्तः।

सापेक्षवाद एव कालस्वरूपस्यान्तिमं निर्णयं करोतीति न मन्तव्यम्। मानवः प्रकृतेरङ्गभूतः। अङ्गोऽङ्गिनं सर्वात्मना ज्ञास्यतीति कथनं तर्कशक्तेः परम् ( स ब्रह्म एवेति त्वन्या कथा )। अङ्गिनः सम्यग् ज्ञानस्याभावे तस्य कस्यचिदङ्गस्यापि ज्ञानमपूर्णमेव तिष्ठति। सापेक्षवादोऽपि नास्त्यस्यापवादः। संभवतः कालः सापेक्षवादस्यापि कालः स्यात्। "विज्ञानस्येतिहासः प्रयोगप्रारम्भे उल्लासमयैः किन्त्वन्ते समुपेक्षितैर्वादैराकीर्णो वर्तते"[३] इत्याह श्रीह्वाइटहैडमहाशयः।

---

१. मितभाषिणी ( सप्तपदार्थीत्यस्य टीका ) द्रष्टव्या, पृ० २३ (कलकत्ता संस्कृत ग्रन्थमाला ).

२. द्रष्टव्या—तर्कालङ्कारभाष्यपरीक्षा, पृ० ३३१-३४

३. द्रष्टव्यः—श्रीह्वाइटहैडमहाशयरचितः "दी प्रिंसिपुल आफ रिलेटिविटी" नामको ग्रन्थः, पृ० १

रोबमहोदयः सापेक्षसिद्धान्तप्रतिपादकस्य स्वकीयग्रन्थस्यान्ते लिखति—

"यद्यपि दिशो विश्लेषणं कालसापेक्षत्वेन स्यादपि, तथापि दिक्कालयोर्यथार्थस्वरूपं सदावदद्यापि रहस्यमयमेव; यद्यपि सर्वे परिणामाः काले संभवन्ति, तथापि कश्चिदपि तर्कयुक्तः कालस्वरूपप्रतिपादकः सिद्धान्तः स्वतः सदाऽवश्यमपरिणामित्वं व्यनक्ति"[1]।

[2]डाक्टरभगवानदासमहोदयोऽपि मन्यते यत् सापेक्षवादोऽन्ततो गत्वा वेदान्तसिद्धान्ते पर्यवस्यति।

तथापि सम्प्रतीदं निश्चितं यत् सापेक्षवादस्य रहस्यं सम्यगज्ञात्वा न कोऽपि कालस्य स्वरूपं नूतनतमरूपेणोपस्थापयितुं शक्नोति। इदमपि स्पष्टं यत् कालस्याध्ययनं दर्शनशास्त्रापेक्षया विज्ञानक्षेत्र एव सुष्ठुतरं संपत्स्यते। प्रातिभज्ञानेन स्यात् कस्यचित् कदाचिदस्य प्रज्ञानम्, किन्तु प्रातिभज्ञानस्य विश्वजनीनताऽद्यावध्यनिश्चिता, सुचरितपूतानां महर्षिप्रवराणामपि विज्ञाने भेददर्शनात्; "सुगतो यदि धर्मज्ञः कपिलो नेति का प्रमा" इति प्राचीनोक्तिः प्रसिद्धैव। दर्शनदृष्ट्या कालस्य कथाऽद्वैतवाद एव समाप्यते। तत्रैव कालादपि परस्योपलब्धिः। परन्तु मदीयनम्रसंमतावद्वैतवादः सर्वेषां विकल्पानां समाधानं कुर्यादपि, तथापि प्रकृते रहस्योद्घाटने नातिसाहाय्यं वितरति। समतलस्थितानामस्माकं समक्षमेकस्मिन् सर्वोत्तमे सर्वोच्चे शिखरे किमपि भव्यं मन्दिरमहर्निशं प्रकाशते। किन्तु तदीयमार्गस्थितोद्भूतरहस्यस्य यथोचितं ज्ञानं नास्ति। ऊर्ध्वमवलोकनेनाधःस्थितानामपि तस्य दीप्तिर्भासते, तथापि मध्यमन्धकारपरिच्छिन्नमेवावतिष्ठते। मध्येऽवलोकनप्रणाली सर्वथा विस्मृताऽस्माभिः। विज्ञानं दिशि दिशि प्रकाशं विकिरति, मध्यमपि द्योतयति, मार्गस्य रहस्यमपि च बोधयति। विनैतत् परिज्ञानं मन्दिरस्यापि महत्ता न सुष्ठु गम्या। अतो विज्ञानमेव शरणम्। ह्यो विज्ञानं कालस्य गतिं कलयन्नासीत्, अद्य कालस्य कलां दिशि दिशि पश्यति, श्वः कालस्यात्मानमप्यात्मसात् करिष्यति। नहि केवलं तेन विज्ञातेन सर्वमिदं विज्ञातं भवति, अपि तु सर्वेणानेन विज्ञातेन तदपि विज्ञातं भवति।

---

१. द्रष्टव्यः—श्री अलफ्रैड ०रोबमहाशयरचित.—"थ्योरी आफ टाइम एण्ड स्पेश" नामको ग्रन्थः, पृ० ३७१

२. डा० भगवानदासविरचित.—"दी साइंस आफ सेल्फ" नामको ग्रन्थो द्रष्टव्यः, पृ० ८१ पादटिप्पणी।

# संजयस्य विक्षेपवादः स्याद्वादश्च

श्रीमहेन्द्रकुमारशास्त्री, हिन्दूविश्वविद्यालयः, वाराणसी ।

महापण्डितेन राहुलसांकृत्यायनेन तत्पूर्ववर्तिना डा०हर्मनजैकोबीमहाशयेन च सप्तभङ्गस्य स्याद्वादमतस्य च प्रादुर्भूतिः संजयवेलट्ठिपुत्रस्य मतमुपजीवतीति साधितम् । तथा हि—

"स्याद्वादः साम्प्रतिकजैनदर्शनस्याधारस्तम्भः, स च संजयवेलट्ठिपुत्रस्याङ्ग-चतुष्टयोपेतोऽनेकान्तवाद एव सप्ताङ्गत्वेनात्र स्थापित इति प्रतीयते । संजयेन तत्त्वानि (परलोकदेवतादीनि) अधिकृत्य प्रकारचतुष्टयेन तेषां निश्चितं स्वरूपं प्रतिषेधितम्— १. अस्तीति नैव वक्तुं शक्यते, २. नास्तीत्यपि न, ३. अस्ति च नास्ति चेत्यपि न, ४. न चास्ति न च नास्तीत्यपि नैव वक्तुं शक्यत इति । जैनानां सप्तप्रकारेण स्याद्वादेन तुलनीय एष सिद्धान्तः । तेषां सप्त प्रकाराणि चेमानि—१. स्यादस्ति, २. स्यान्नास्ति, ३. स्यादस्ति च नास्ति च, ५. स्याद् अवक्तव्यः, ५. स्यादस्ति च अवक्तव्यश्च, ६. स्यान्नास्ति च अवक्तव्यश्च, ७. स्यादस्ति च नास्ति च अवक्त-व्यश्चेति । उभयोरेनयोर्मतयोः परीक्षणेन ज्ञायते जिनानुयायिभिः संजयस्याद्यानि त्रीणि वाक्यानि ( प्रश्नोत्तररूपाणि ) पृथक्कृत्य स्याद्वादस्य षड् भङ्गयो निर्मिताः, तस्य चतुर्थेन वाक्येन च 'स्यादस्ति च नास्ति च अवक्तव्यश्च' इति सप्तमं भङ्गं विरचय्य स्वीया सप्तभङ्गी प्रतिष्ठापितेति ।...एवं कस्यापि सिद्धान्तस्याऽप्रतिष्ठापनरूपः संजयस्य वादस्तदनुयायिनां विलोपे संजाते जैनैरङ्गीकृतः, तस्य चतुर्भङ्गीन्यायश्च सप्तभङ्गीनये परिणतिमापेदे" [ दर्शनदिग्दर्शन, पृ० ४९६ ] इति ।

अत्र राहुलमहोदयेन सप्तभङ्गीमतस्य स्याद्वादस्य च रहस्यमविज्ञाय केवलं शब्दसाम्य-श्रित्य नूतनः कश्चिन्मत आविष्कृतः । स च परीक्षणीयः प्रेक्षावताम् । [1]संजयवेलट्ठिपुत्रस्य दो राहुलमहोदयेन स्वयमित्थं वर्णितः—"यदि भवता पृच्छ्यते—किमस्ति परलोक इति ?

---

१. अस्य मतस्य विस्तृतं वर्णनं दीघनिकाये सामञ्ञफलसुत्ते विद्यते । एष विक्षेपवादं स्वीकरोति स्म । अस्य मतस्य 'अमराविक्षेपवाद' इति नाम्ना प्रख्यातिरासीत् ।

परलोकोऽस्तीति यद्यहं जानामि चेत्तर्हि कथयाम्यस्ति परलोक इति। एवमपि नाहं कथयामि, तथेत्यपि न, अन्यथाऽपीत्यपि न। नास्ति परलोक इत्यपि नाहं कथयामि। परलोकनिषेधो नास्तीत्यपि नैवाहं कथयामि। परलोको नास्ति, परलोकनिषेधो नास्ति, परलोकोऽस्ति च नास्ति च, परलोकस्यास्तित्वमपि नास्ति निषेधोऽपि च नास्तीति" [दर्शनदिग्दर्शन, पृ० ४६१] इति।

संजयस्य परलोक-देवता-कर्मफल-मुक्तिविषयको राद्धान्तः सामग्र्येण तस्याज्ञानस्यानिश्चयवादस्य च निदर्शको वर्तते। "यद्यहं जानामि चेत्तर्हि कथयामि" एष वाक्यविशेषो नैव संशयवादिनः, अपि तु प्रगाढमनिश्चयवादं प्रख्यापयति। राहुलमहोदयमतेन संजयस्य वादो मानवस्य सहजां बुद्धिं नैव भ्रमयति, नैव च किमपि निश्चित्य भ्रान्तधारणाः पोषयति। स हि अज्ञानिक आसीत्। अत्रोच्यते—

भगवता बुद्धेन दश चतुर्दश वा वस्तुतत्त्वान्यव्याकृतानि भणितानि। दीघनिकाये (पोट्ठपादसुत्ते) तेषां संख्या दश वर्तते। तत्रत्ययोराद्ययोर्द्वयोः प्रश्नयोरुभयानुभयौ विकल्पावतिरिक्तौ कृत्वा माध्यमिकवृत्तौ (पृ०४४६) एषां संख्या चतुर्दश निश्चिता। एतेषामव्याकरणकारणं बुद्धेन भणितम्—"निरर्थकमेषां व्याकरणम्। नैव भिक्षुचर्यामुपकरोत्येतत्; नैव च निर्वेदाय, निरोधाय, शान्तये, परमज्ञानाय, निर्वाणाय वा कल्पते" इति। बुद्धमतेनैतेषां परिज्ञानं मुमुक्षुत्वे नैवावश्यकमासीदित्येवाभिप्रायोऽस्य ज्ञातव्यः, अर्थाद् बुद्धोऽपि संजयवदिमान् प्रश्नान् व्याकृत्य मानवस्य सहजां बुद्धिं नैव भ्रमयितुं वाञ्छति, न च भ्रान्तधारणाः परिपोषयिषति। अयं चात्र विशेषः—संजयो हि स्वकीयमज्ञानमनिश्चयं च स्पष्टेषु शब्देषु ब्रवीति—"यद्यहं जानामि चेत्तर्हि कथयामि" इति। बुद्धस्तु स्वीयमज्ञानमनुल्लिख्य तद्रहस्यज्ञानं शिष्याणां नैवोपकारकमित्येतावदेवोक्त्वा ततो विरमति। साम्प्रतमपि प्रश्नोऽयं तार्किकाणां पुरतस्तथैवोपस्थितो विद्यते बुद्धस्याऽव्याकृततायां संजयस्यानिश्चयवादे च कियदन्तरमिति, विशेषतश्चित्तस्य निर्वाणभूमौ। एतदेवान्तरं तयोः प्रतीयते यत् संजयो हि स्पष्टं स्वीयमज्ञानं स्वीकरोति, बुद्धश्चैतान् प्रश्नानव्याकृतकोटौ निक्षिपति।

संजयस्य बुद्धस्य च समये आत्मनः, लोकपरलोकयोः, मुक्तेश्च स्वरूपमुद्दिश्य सत्, असत्, उभयम्, अनुभयमवक्तव्यं चेति चत्वारः पक्षाः सर्वत्र प्रचलिता आसन्। यथा साम्प्रतिको राजनैतिकः प्रश्नः प्रभुसेवकयोः, शोष्यशोषकयोश्च द्वन्द्वमभिलक्ष्यैवाग्रे सरति, तथैव तदानीन्तना आत्माद्यतीन्द्रियपदार्थविषयकाः प्रश्नाश्चतुष्कोट्यन्तर्गता आसन्। वेदेषूपनिषत्सु

च सैषा चतुष्कोटिरनेकत्र व्यस्तरूपेण दरीदृश्यते—"असद्वा इदमग्र आसीत्, ततो वै सदजायत" [ तैत्ति० २।७ ], "सदेव सोम्येदमग्र आसीत्···" [ छान्दो० ६।२ ]; "न सन्न चासत्" [श्वेता० ४।१८], "यतो वाचो निवर्तन्ते" [तैत्ति० २।४], "यद्वाचाऽनभ्युदितम्" [केन० १।४] इत्यादौ। इमे प्रश्ना यदा सहस्राब्दीतः प्रचलिताः सन्ति, तदा राहुलमहोदयानां स्याद्वादं प्रति "संजयस्य चतुर्भङ्गीं विभज्य सप्तभङ्गी प्रणीता" इत्याक्षेपः कथं नाम संगतो भवेदिति तैरेव चिन्तनीयम्।

बुद्धसमकालिका आसन् पञ्च प्रथितास्तीर्थिकाः, येषु निर्ग्रन्थनाथपुत्रस्य वर्द्धमानमहावीरस्य सर्वज्ञ इति सर्वदर्शीति च रूपेण प्रख्यातिरासीत्। ते सर्वज्ञाः सर्वदर्शिनो वाऽऽसन्न वेत्यत्र नैव विचारणीयो विषयः, किन्तु तेऽवश्यं विशिष्टास्तत्त्वचिन्तका आसन्। संजयवत् कोऽपि प्रश्नस्तैरनिश्चयकोटौ विक्षेपकोटौ वा नैव स्थापितः, नैव च शिष्याणां सहजा जिज्ञासावृत्तिरनुपयोगिताभीत्यावर्तेषु पातिता। ते विश्वसन्ति स्म—यावद्धि संघेषु निवसन्त्यो बहुविधा व्यक्तयो वस्तुतत्त्वस्य यथार्थं स्वरूपं न निश्चिन्वन्ति तावत् तेषु बौद्धिकदृढताया मानसबलस्य संचारो नैव संभवी। ते सदैव स्वसमानशीलभिक्षुसंघानां पुरतः स्वकीयबौद्धिकदीनताहेतोर्हतप्रभा भविष्यन्ति, तस्य च प्रभावस्तेषां जीवने आचारपद्धतौ चावश्यं विकृतिमुत्पादयिष्यति। अत एव प्रत्येकं मानवः स्वकीयां सहजां जिज्ञासां मननशक्तिं च वस्तुनो यथार्थस्वरूपावगतये प्रयुञ्जीतेति ते वाञ्छन्ति स्म। आत्मनोऽस्तित्वस्वीकारे शाश्वतवादप्रसङ्गस्तेन चौपनिषत्कानामिव लोको नित्यतां विश्वसीत, आत्मा नास्तीति स्वीकार उच्छेदवादप्रसङ्गस्तेन च लोकश्चार्वाकमतमनुवर्तेतेति भिया बुद्धेनैष प्रश्नोऽव्याकरणीयकोटौ स्थापितो यथा, नैषा भीतिस्तान् बाधते स्म। तेऽभिलषन्ति स्म साम्प्रतिकानां तर्काणां संशयानां च समाधानं वस्तुस्थितिमभिलक्ष्यैव भवितव्यमिति। अतस्तैर्वस्तुस्वभावमवगम्य जगतः प्रत्येकं सद् अनन्तधर्मात्मकं प्रतिक्षणं परिणामि चेति बोधितम्। अस्माकीना ज्ञानदृष्टिस्तस्यैकमंशमवबुद्ध्यापि पूर्णतावबोधमिथ्याभिमानं पोषयति। अतोऽस्माभिः सावहितैर्भूत्वा वस्तुनो विराडनेकान्तात्मकस्वरूपतावगतये प्रयतनीयम्। अनेकान्तदृष्ट्या तत्त्वे विचारिते शाश्वतवादस्योच्छेदवादस्य वा भयं नैव विद्यते। पर्यायदृष्ट्या ह्यात्मा उच्छिन्नो भवन्नपि स्वकीययाऽनाद्यनन्तधारादृष्ट्याऽविच्छिन्नः, शाश्वतो वर्तते। अनया दृष्ट्या लोकस्य शाश्वताऽशाश्वतवादादिप्रश्ना अपि परीक्षणीयाः—

( १ ) किं शाश्वतोऽयं लोकः? ओम्, द्रव्याणां संख्यामनुरुद्ध्य लोकोऽयं शाश्वतः। अस्मिन् लोके यावन्तः सत्पदार्था अनादिकालतो वर्तन्ते तेष्वेकस्यापि सतो न्यूनता नैव संभवति,

नैव च तस्मिन्नूतनस्य कस्यचन सत्पदार्थस्य वृद्धिर्वा भवितुमर्हति, नापि च सोऽन्यस्मिन् सति पदार्थे विलीनो भवितुं योग्यः। कस्मिन्नपि काले लोकाङ्गभूतस्य कस्यापि द्रव्यस्य लोपः समाप्तिर्वा नैव भवति। निर्वाणावस्थायामप्यात्मनो निरास्रवा चित्सन्ततिः स्वकीयेन शुद्धेन स्वरूपेण सततं प्रवहति। दीपनिर्वाणवत्तस्याः समूलो नाशो नैव कदाचिद्भवति।

(२) किमयं लोकोऽशाश्वतः? आम्, द्रव्याणां प्रतिक्षणं परिमाणित्वाल्लोकोऽयमशाश्वतः। प्रत्येकं सत् प्रतिक्षणं स्वकीयमुत्पादविनाशध्रौव्यात्मकं परिणामस्वभावमनुरुद्ध्य सदृशं विसदृशं वा परिणमति। न कोऽपि पर्यायः क्षणद्वयमवतिष्ठते। अनेकक्षणस्थायिनः परिणामाः प्रतिक्षणभाविनामनेकेषां सदृशपरिणामानामेव परिणतयोऽवगन्तव्याः। एवं च सततं परिवर्तनशीलान् संयोगवियोगानभिलक्ष्य लोकोऽयमशाश्वतः, अनित्यः, प्रतिक्षणं परिवर्तितश्चावभाति।

(३) किं लोकः शाश्वताऽशाश्वतोभयरूपवान्? बाढम्, क्रमेणोपर्युक्तदृष्टिद्वयपद्धत्या विवेचने कृते लोकोऽयं शाश्वतोऽपि (द्रव्यदृष्ट्या) अशाश्वतोऽपि (पर्यायदृष्ट्या) च वर्तते। उभे इमे दृष्टी क्रमेण प्रयुक्ते स्थूलदृष्ट्या समीक्षिते च सत्यौ जगदुभयरूपमपि प्रतिभासयतः।

(४) किं लोकः शाश्वताऽशाश्वतोभयरूपरहितो वर्तते? तर्हि तस्य किं समग्रं स्वरूपम्? अत्रोच्यते—लोकस्य समग्रं स्वरूपं वचनानामगोचरः, अवक्तव्यो विद्यते। नैवैतादृशः कोऽपि शब्दो वर्तते य एकदा लोकस्य शाश्वताऽशाश्वतोभयविधं स्वरूपम्, तस्मिन् वर्तमानाननन्तान् धर्मांश्च युगपद्वक्तुं शक्नुयात्। अतः शब्दासामर्थ्याज्जगतः समग्रं स्वरूपमवक्तव्यः, अनुभयः, वचनातीतश्च वर्तते।

अनेन विवेचनेनेदं परिज्ञायते यद्वस्तूनां समग्रं स्वरूपं वचनानामगोचरोऽवक्तव्यश्च भवति। चतुर्थं समाधानं वस्तुतः समग्ररूपस्य युगपदवाच्यत्वदृष्टिमवलम्ब्य तिष्ठति। परन्तु स एव लोको द्रव्यदृष्ट्या शाश्वतः, पर्यायदृष्ट्या चाशाश्वतोऽभिधीयते। यथार्थतश्चतुर्थः, प्रथमः, द्वितीयश्चेति त्रय इमे प्रश्ना मौलिकाः। उभयरूपतास्वरूपस्तृतीयः प्रश्नः प्रथमद्वितीययोः संयोगरूप एवावगन्तव्यः। एवं च यदा संजयेन लोकस्य शाश्वताऽशाश्वतादिप्रश्नानां समाधानाय स्वकीयमज्ञानं प्रकटीकृतम्, बुद्धेन चाव्याकरणीया इमे प्रश्ना इत्यनुपयोगिताभीतिमुत्पाद्य शिष्या भ्रान्तिमापादिताः, तदा महावीरेण तेषां प्रश्नानां वस्तुस्थित्यनुकूलं यथार्थं समाधानं पुरस्कृतम्, शिष्याणां जिज्ञासाः शमयित्वा बौद्धिकदीनतादोषाद् रक्षितास्त इति।

## विक्षेपवादः

अयमत्र मतत्रयसंक्षेपः —

| प्रश्नाः | संजयसमाधानम् | बुद्धसमाधानम् | महावीरसमाधानम् |
|---|---|---|---|
| १—किं लोकः शाश्वतः ? | जानामि चेत् कथयामि (अनिश्चयः, अज्ञानम्)। | समाधानपरिज्ञानमनुपयुक्तम् ( अव्याकरणीम्, अकथनीयम्)। | द्रव्यदृष्ट्या लोकोऽयं शाश्वतः। अत्र कस्यापि सत्पदार्थस्य सर्वथा नाशो नैव संभवति, नैव च कस्माच्चिदसतो नूतनस्य सत उत्पादो भवति। |
| २—किं लोकोऽशाश्वतः ? | ,, | ,, | प्रतिक्षणभाविनां परिणामानां दृष्ट्या लोकोऽयमशाश्वतः। न कोऽपि पर्यायः क्षणद्वयमवतिष्ठते। |
| ३—किं लोकः शाश्वताशाश्वतोभयस्वरूपः ? | ,, | ,, | उभयदृष्ट्या विवेचिते क्रमेण लोकोऽयं शाश्वतः, अशाश्वतश्च भवति। |
| ४—किं लोक उभयरूपो नास्ति, अनुभयः सः ? | ,, | ,, | नास्त्येतादृशः कोऽपि शब्दो यो लोकस्य परिपूर्णं स्वरूपमेकदा सामग्र्येण वक्तुं सहेत, अतो वस्तुतः संपूर्णं स्वरूपमनुभयात्मकं वर्तते। अवक्तव्यः स इति भावः। |

इत्थं संजयेन बुद्धेन च ये प्रश्ना नैव समाहिताः, तेषां वास्तविकं युक्तिपूर्णं च समाधानं महावीरेण पुरस्कृतम्। एवं च स्याद्वादः संजयप्रदर्शितमज्ञानमनिश्चयवादं च समुच्छिनत्ति, सहैव तत्त्वविषयकं संशयं विपर्ययं च समूलमुन्मूलयति। एवं स्थिते राहुलसांकृत्यायनमहोदयेनानिश्चिततावादिनां मध्ये संजयेन सह निग्गण्ठनाथपुत्रस्य (महावीरस्य) स्थापितं नाम [ पृ० ४८४ ], संजयश्चानेकान्तवादी संमतः कथं नाम संगच्छेत ?

'स्यात्' शब्दस्य प्रयोगं दृष्ट्वा लोकाः साधारण्येन संशयः, अनिश्चयः, संभावना वा तदर्थं इति परिजानन्ति। नैतत् सम्यक्। 'स्यात्'-शब्दोऽत्र भाषाया विशिष्टायाः प्राचीनाया रीतेर्द्योतकः। अस्य शब्दस्य प्रयोगस्तत्र भवति यत्र हि न कोऽपि वादः स्थाप्यते। एकाधिकानां भेदानां विकल्पानां च सूचना यत्र प्रदीयते तत्र 'सिया' (स्यात्) पदस्य प्रयोगो भाषाया विशिष्टां शैलीं प्रदर्शयति स्म। यथा हि [1]मज्झिमनिकायस्य महाराहुलोवादसुत्तस्योद्धरणेन परिज्ञायते। अत्र आपोधातोरुभौ सुनिश्चितौ भेदौ 'सिया'-शब्देन सूच्येते, न तु तौ तत्रानिश्चितौ संशयितौ संभावनाग्रस्तौ वा। एवमेव 'स्यादस्ति' इति वाक्येन संबद्धः 'स्यात्'-शब्दः 'अस्ति' इत्यस्य सुनिश्चितां स्थितिं प्रमाणयति, अथ चास्तितो भिन्ना अन्येऽपि धर्मा वस्तुनि वर्तन्ते, ते च साम्प्रतं गौणा इति सापेक्षां स्थितिं च सूचयति। एवं च संजयप्रदर्शितानिश्चयवादतः सुनिश्चितस्यानेकान्तवादस्य प्रादुर्भावप्रदर्शनं प्रौढोक्तिमात्रमित्येवोक्त्वा विरम्यते ॥

---

१. "कतमा च राहुल आपोधातुः? आपोधातु सिया अज्झत्तिका सिया बाहिरा"
[ मज्झिमनिकाये ]

# सौरगतिविज्ञानम्

श्रीलक्ष्मीनारायणद्विवेदी, जी०श्री०श्रीधरसंस्कृतपाठशाला, तिर्वा, फर्रुखाबाद।

अस्ति किल पाश्चात्यजनप्रसारिता प्रवृत्तिरियं लोकव्यापिनी यत् सूर्यः स्थिरः, पृथ्वी च तदुपग्रह इति तं परितः क्राम्यतीति। साम्प्रतं तु बहूनां वैज्ञानिकानां दृष्टिकोणोऽन्यथापि जातः। तदनुविषया सूर्यो न स्थिरः, स एकदिशमजस्रं धावति; परे च तदुपग्रहाः पृथ्व्यादयस्तं परिक्राम्यन्तीति। तत्रेमे पाश्चात्याः पौरस्त्याश्च वैज्ञानिका ऐकमत्यमुपसीदन्तीति यद्यप्यस्ति, तथापि पाश्चात्यवैज्ञानिकाः सम्प्रति तादृशं विचारपथमवतीर्णाः, यत्ते स्वयं स्वविज्ञानस्य चरमसिद्धान्ततां नानुभवन्ति।

अनूच्यमानेनानेन सन्दर्भेण सूर्यस्य प्रगतिः पृथिव्याश्चाप्रगतिरिति साधयिष्यते। तदनुसारिणी चान्यग्रहगतिरिति विवेचकैरवगन्तव्यम्। सन्दर्भेऽस्मिन् तर्कमूला युक्तयः प्रथममादृताः, परतश्च भारतीयविज्ञानप्रमाणान्युपदीकरिष्यन्ते।

हिन्दीभाषया मयैकस्तर्कनिबन्धो मूलतर्कसंग्रहग्रन्थविवेचनात्मकस्तर्करत्नावलीनाम्ना रत्नप्रभाख्यव्याख्ययोपेतः संपादितः, सोऽयं तावदद्याऽप्रकाशितात्मा वर्तते। तत्परिशिष्टांशाद्द्रव्यसाङ्कर्यविवेचनप्रकरणान्तर्भूतोऽयम् 'सौरगतिविज्ञानम्' इति नामकः सन्दर्भः।

### अथ पृथ्वीलोकविमर्शः

तत्र तावत् पृथ्वीलोकविमर्शः प्रसङ्गत उपक्रम्यते। सोऽयं पृथ्वीलोकः—अचला, अनन्ता, गौः, क्षितिः, पृथ्वीत्यादिनामभिः स्मर्यते। एतन्नामालोचनमुखेन तावत्तर्कयुक्तिभिः पृथिव्याः स्थिरत्वादिगुणधर्मविचारः प्रस्तूयते।

भूगर्भेऽस्त्यग्निविशेषः। उत्पादनं वर्धनं विपरिणामनं क्षपणं चास्य कार्यविशेषः। यथा हि शरीरान्तःस्थोऽग्निरेव शरीरतदवयवरसरक्तादिधातूनां तच्छक्तेश्चोत्पत्तिचित्युपचितिप्रचित्यपचितीनां जनकः, तथैव भूमिष्ठोऽप्यग्निस्तत्संबन्धिजडचेतनानामुत्पत्तिचित्युपचितिप्रचित्यपचितीनां जनकः। नायमग्निः सूर्यवदतितीक्ष्णो महाप्रकाशश्च, परमेश्वरेणास्याग्नेर्भूलोकसंबन्ध्यपेक्षितकार्यपूर्तिमात्रक्षमस्यैव भूगर्भीकरणात्। न केवलमयं भूवलयकुक्षीकृत एव, अपि तु पृथिव्याः प्रतिकणं द्व्यणुकत्र्यणुकचतुरणुकेषु सर्वत्रास्य व्यापारो वरिवर्त्ति। अधिभूमि चास्याग्नेराविर्भावः सौराग्नेरेवेति तेनास्याऽविचिकित्सनीयो महान् संबन्धः।

आकाशीयजलीयपरमाणुद्व्यणुकादिमहामण्डलगतविद्युता सह पृथ्वीसंसृष्टजलतत्त्वान्तःस्वसंभूत-विद्युत्संबन्धं चायमग्निः स्थापयति ।

पृथिव्यां रूपादिचतुष्टयं पाकजमिति न्यायः। तत्र पाको नाम विजातीयतेजसः पृथिव्या संयोगविशेषः। सोऽयमग्निर्विजातीयतेजोव्यपदेशः। रूपादिचतुष्टयं पृथिव्यां पाकजम्, पाकाज्जायमानम् (आविर्भवद्विपरिणमद्वा)। तत्पार्थिवरूपादिविवरणं चास्याग्नेः कार्यम्।

अयं भूगर्भस्थोऽग्निरेव भूमिगततेजोधारावाहिनीभिर्नाडिकाभिरदम्याः स्वज्वाला ज्वाला-मुखशैलविवरेभ्यो बहिः प्रक्षिपति।

भौमिकमेनमग्निमधिदैवतभावेन स्वर्गादिलोकान्तरप्रापकमामनन्ति श्रुतयः। तदेतस्याग्ने-र्यागविषयकं प्रणायकत्वमाचार्यवर्याद् यमाद्विज्ञातवान् महर्षिपुत्रः श्रीनचिकेताः। एतद्विषये बृहदारण्यकश्रुतिः प्रणिगदति—तद्यावत्येव वाक् तावती पृथिवी, तावानयमग्निः" [बृह० १।५।११] इति। तथा च नैरुक्तोत्तरषट्के—"अग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामः। अग्निः कस्मात्? अग्रणीर्भवति, अग्रं यज्ञेषु प्रणीयते" [नि० ७।१४] इति।

पृथ्वीतत्त्वप्रधानोऽयं पृथ्वीलोकः। पृथिव्या गुणौ गुरुत्वस्थितिस्थापकसंस्कारौ। ताविमौ पृथिवीलोकं नियन्त्रयतः।

यदि च पृथ्वीतत्त्वापेक्षया तेजस्तत्त्वमपि पृथ्वीलोकमतिरिच्येत तदाऽवनिगतो जलभागः समुद्रादिः प्रणष्टः स्यात्, उत्पत्तिचितिप्रचित्युपचितिक्रियाः सर्वथा निरुद्धाः स्युः, वृक्षादिप्राणि-वर्गोऽचलादिरप्राणिवर्गश्च भस्मावशेषः स्यात्, पृथ्वीलोकः प्रलीयेत, कठोरतमप्रचण्डपरिदाहका-ङ्गारमयतां वा प्रपद्येत, जायेत चात्र तादृशं किमपि सुतीक्ष्णं महदाग्नेयं संघर्षणं येनाग्नितत्त्वं पृथ्व्या गुरुत्वगुणमाक्रम्य तस्य तात्कालिकस्थितिस्थापकसंस्कारस्य च रूपान्तरं प्रकल्प्य भूमण्डले प्रबलतरां भ्रमणात्मिकां क्षेपात्मिकां च गतिम्, सूर्यस्येव प्रचण्डमुज्ज्वलं प्रकाशं च संजनयेत्; तेन चेदं भूगोलं विशीर्यमाणावयवमलातचक्रवद् भ्रमिं लूकावच्च प्रगतिं प्राप्नुयात्, कालान्तरेण च भस्मसात् सद् वायुना परम्परया परमाणुरूपतां प्राप्य नभोमण्डले विलीयेत। अतः सुस्पष्टं भवति यत्पार्थिवोऽग्निरीश्वरेच्छया तथाविधप्रबलीभूत एव नास्ति यो भूवलयस्य प्रगतिशीलतां जनयेत्।

पृथिवीतत्त्वस्याचलत्वसाधकानुमानप्रकार ईदृक्—

पृथिवी न प्रगतिमती। गुरुत्वस्थितिस्थापकोभयगुणवत्त्वात्। यत् प्रगतिमन्न तद् गुरुत्व-स्थितिस्थापकेत्युभयगुणवत्, यथा वायुतेजसी। न चेयं तथा। तस्मान्न तथेति।

अथ भूवलयस्याप्यचलत्वप्रतिपादकानुमानवाक्यं प्रदर्श्यते—

भूमण्डलं न प्रगतिमत्। पृथ्व्याश्रयकगुरुत्वस्थितिस्थापकेत्युभयगुणनिवार्यमाणगतिकत्वात्। यत्प्रगतिमन्न तत्पृथिव्याश्रयकगुरुत्वस्थितिस्थापकेत्युभयगुणनिवार्यमाणगतिकम्, यथा सौरमण्डलम्। न चेदं तथा। तस्मान्न तथेति।

एतद्वैयधिकरण्येन सूर्यादिपिण्डानि प्रगतिशीलानीति तेजोविमर्शे स्फुटीभविष्यति।

गौरिति च पृथ्वीनाम। गमनकर्त्रीत्यर्थः। गच्छतीति गौः। 'गमेर्डोस्' इत्युणादिडोस्प्रत्ययः। निरुक्ते 'ग्मा' इत्यपि गोसमानार्थकं नाम। तदस्या गतिं तावन्निरूपयामः—

अस्ति हि भूगर्भेऽग्निः, गतिशीलता चाग्नेः सहजः स्वभावः। अग्निगत्या च पृथिव्यापि प्रेर्यमाणया गतिमत्या भाव्यम्। अग्निश्चालकोऽस्ति। तेन स्वाश्रयः कथं न चालितः स्यात्? सूक्ष्मेणाप्याग्नेयविस्फोटचूर्णप्रजातविस्फोटाग्निना सुबद्धमूलः पर्वतप्रान्तोऽपि स्वस्थानाच्चाल्यते। प्रसिद्धश्च साम्प्रतमणुविस्फोटप्रभावः।

इदमुक्तं यद् भूमावुत्पत्तिचितिप्रचित्युपचित्यपचितिक्रियाः सततं भवन्ति। तत्र—

वृक्षादिसमस्तप्राणिवर्गस्य खनिजधातुपाषाणादेश्चोद्गम उत्पत्तिः। उत्पन्नस्य राशीभावश्चितिः। राशिवृद्धिरुपचितिः। उपचितस्य घनत्वं पुष्टता दृढता च प्रचितिः। क्षयोऽपचितिः।

इमाः क्रिया भूगर्भतेजोविशेषजन्याः। इमाः क्रिया न गतिरूपा इति तु न। अत उक्तक्रियाणां गतिरूपत्वात् पृथिव्याः 'गौः' इति नामाऽन्वर्थम्।

अत्र निघण्टुटीकाकारः श्रीदेवराजयज्वाऽऽह—"गौः 'गम्लृ गतौ' अस्मात् 'गमेर्डोस्' [ उ०२।६३ ] इति कर्तरि कारकेऽधिकरणे वा डोः प्रत्ययः। अत्र भाष्यम्—'गौरिति पृथिव्या नामधेयम्, यद् दूरं गता भवति…नैरन्तर्येणात्माकाशादिवत्। दूरेऽप्युपलब्धेर्गतिक्रियाव्यवहारः' इत्यादि" [१।१] इति।

अत्र स्कन्दस्वामी विशेषतो विविनक्ति। तस्यायं सुस्पष्टाशयो यत् पृथ्वीतत्त्वं सर्वलोकगतम्। अत्र लोकशब्देन ग्रहनक्षत्रतारादयोऽवगन्तव्याः। समस्तेऽपि नभोमण्डले परमाणुपुञ्जरूपेण पृथ्वीतत्त्वं परिभ्रमति। अतः सर्वत्र गतिमत्त्वात् "दूरं गता भवतीति गौः" इति व्युत्पत्तिः सारार्थगर्भा। उपचयश्च पृथुशब्दार्थः। उपचयनं गतिविशेषः। तदुपचयनार्थकपृथुत्वगुणविशिष्टा पृथ्वी गौरित्यर्थः।

क्षितिः = क्षियन्ति निवसन्त्यस्यां सा क्षितिः, निवासेऽर्थे क्षिधातोर्बाहुलकादधिकरणे क्तिन्। क्षयन्त्यपचयं गच्छन्ति भूतानि यत्र, क्षीयतेऽपचीयते वेति च क्षितिः। एवं व्युत्पत्तिविशेषेणोत्पत्तिचितिप्रचित्युपचित्यपचितिरूपगतिविशेषार्थकक्रियाणामवगमः स्फुटः।

अनन्ता = यतश्च समस्तेऽपि नभसि वातनीतः परमाणुव्यूह ओतप्रोतः। सर्वलोकेषु पार्थिवभाग इति न पृथिव्या अन्तः। वर्तुलत्वाच्चास्या अन्तो लब्धुं न शक्यः। को बिन्दुवृत्तस्य कन्दुकस्य वा शून्यवृत्तस्येवोपर्य्यधः समन्ततो वाऽवधिः स्यात्? तत्सर्वगत्वात्सृष्ट्यानन्त्याच्चानन्ता पृथ्वी गौः।

भारतीयं नाम विज्ञानं सर्वत्र पदार्थेषु विज्ञानानुसन्धायि, डित्थडवित्थादिष्वपि तत्तत्स्वधर्मवदर्थकत्वान्वयव्यतिरेकेणार्थविशेषोपलब्धिर्वैज्ञानिकी। भाषान्तरीया—"अर्थ, सन, मून, एयर" इत्यादयः शब्दाः किं वा विज्ञानविशेषमनुसन्दधते कं वा धात्वर्थमभ्यूहन्ते ?

अथ केचन सहस्तक्षेपमिदं वक्तुं साहसयन्ति यद् भारतीयः खगोलभूगोलगणिताचार्य आर्यभटः सूर्यं स्थिरं भुवं च चलामसाधयदिति। तेषां सन्तोषशीतलनिश्वासादानायैतत्सन्दर्भानुपदमार्यभटीयप्रमाणसाक्षिताऽक्षिसात्करिष्यते प्रेक्षावताम्।

अथ प्रस्तुतं भूमण्डलं जम्बूद्वीपो नाम, क्षारसागरावृतत्वं तल्लिङ्गं पुराणप्रतिपादितम्। इतरद्वीपानां सुरोदध्याद्यावृतत्वमुत्तरोत्तरप्रमाणाधिक्यं च। पाद्मे तेषां परःसहस्रयोजनान्तर्यवैदूर्यं चोपदर्शितमिति सर्वथा नोऽपरिचिताऽन्यविधा तेषां भूः। तदुच्यते—सप्तद्वीपा वसुमतीति। भारतीयग्रन्थावहेलया पाश्चात्यापविज्ञानपराग्धाराऽपवाहिता 'अमेरिकाम्' पातालमित्यभिमन्यमाना न भ्रान्तमात्रा, अपि तु संभ्रान्ता एव; यतः 'अमेरिका'-देशोऽस्य द्वीपस्यैकखण्डमात्रमित्यलं प्रसङ्गान्तरेण।

## अथ जलतत्त्वविमर्शः

सौरगतिविवेचनप्रसङ्गागतत्वेन जलतत्त्वं परामृश्यते। आकाशमात्रे परमाणुरूपं जलं व्याप्तम्। सर्वत्र चास्मिन्ननन्ताकाशे जलीयाणुद्व्यणुकादीनां प्रसारः। सृष्टिप्रकरणे इदमेवेङ्गयति भगवती श्रुतिः समुद्र इति नाम्ना—"ततः समुद्रो अर्णवः" [१०।१९०।१] इति।

ईश्वरेच्छावशात्पृथिव्यादिलोकेष्वयमेव जलीयपरमाणुव्यूहः कार्यरूपं जलमुत्पादयति, यतो नदीसमुद्रादिरूपमम्मयं भवति दृग्गोचरं नः। तेजस्तत्त्वं हि जलतत्त्वं प्रेरयति। तेजः-

• वारिणि नैसर्गिकी गतिर्नास्ति, तद्धि जलं जडमित्यभिप्रेतम्। नापि पृथिव्यां गतिः। वायुरपि वह्निसहकृत एव गतिशीलो न स्वतः। संस्कृतकोषादिप्रमाणैर्वायुरग्निसखः, वायुसखश्चाग्निरिति स्पष्टतयोक्तः। समीरोऽग्निसखः, अग्निश्च सखा वायोरिति परस्परं सख्यम्। सनातनोऽयं सहचरभावः। "मरुत्प्रयुक्ताश्च मरुत्सखाभम्" [ रघु २।१० ] इति हि महाकविः कालिदासः।

## अथ वायुविमर्शः

स्पर्शानुमेयो वायुः, रूपरहितत्वात्। सति चास्मिन् गतिशालिनि स्पर्शानुभवो नान्यथा। यद्यप्ययं सदागतिः, नास्य कदापि गतिविरामः। परं तु निरोधावस्थायां सर्वसाधारणगोचरो नास्य गतिबोधः। तादवस्थ्ये न कश्चित् क्षणमपि जीवितुं प्रभुः। ज्योतीरूपा हि जीवनशक्तिः। न वातावरोधे ज्योतिस्तिष्ठति, न च जीवनम्। जीवनं ज्योतिर्मूलम्। तदनन्यदेतत्। प्रत्यक्षमग्निशिखारूपं ज्योतिः, प्रत्यक्षज्योतिःकारणीभूतमनुद्भूतरूपमपि ज्योतिः। तद्वातावरोधे प्रत्यक्षं ज्योतिर्न तिष्ठति। परोक्षं तु समाधिस्थायतप्राणयोगिनो जीवनज्योतिरिव वातावरोधेऽप्यविनश्वरं मूलज्योतिस्तिष्ठत्येव। तदेतन्मूलं परोक्षज्योतिरेव वायौ गतिजनकम्। एतेनैव वायोर्वायुत्वम्। एतज्ज्योतिरेव वातसहभूतं जलशोषणं करोति। एतेनैव वायुर्जलशोषणकृदिति लोकाभिमानः। ज्योतिषश्चास्य कारणं ब्रह्म। एतज्ज्योतिरेव हि विश्वस्मिन् विश्वजनकं च। एतदग्नौ, इदं वायौ, इदं सूर्ये, चन्द्रे, तारासु च। तदाहुः—

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः। [श्वे०उ०४।२] इति,
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः॥ [ईशा०उ०५] इति च।

अथ सर्वत्राकाशमण्डले घनीभूतो वायुः। नास्ति बालाग्रमपि स्थानमनवकाशं वायुनानलेन च। लोकाविज्ञातलिङ्गे अपि सदा सक्रिये इमे द्रव्ये, अन्यत्र परमाणुरूपात्। अविज्ञातलिङ्गता चैनयोः सूक्ष्मतमत्वात्। इन्द्रियगोचरत्वं नाम ज्ञायमानलिङ्गत्वम्। तस्माद् बुद्धिमात्रगम्यत्वमेतल्लिङ्गस्य। तदसौ घनीभूतः सुस्थिरजलवत्सुस्थिरस्तरङ्गितजलवच्च तरङ्गितः, अवाग्गतिजलवच्च तिर्यग्गतिः। तेजसा समीर्यमाणेऽस्मिन् वायौ भङ्गाश्चावर्ताश्च प्रगतयश्चोपजायन्ते। उच्यते यत्राग्निर्ज्वलति तत्र वाय्वाकर्षणं भवति। वस्तुतो नैतदाकर्षणम्, किन्तर्हि ? परिक्षोभणम्, परिमन्थनम्। अग्निः प्रदक्षिणं नर्तयति वातम्, पुरश्च तिर्यक् च प्रेरयति, ऊर्ध्वं च नयति, अधोऽपि गमयति। अग्निशिखोपरि प्रदक्षिणं नृत्यति

वायुः। एतत्तदावर्तः। अग्निशिखा हि स्वयमप्यनवरतं प्रदक्षिणं भ्राम्यति। तदग्निशिखा-प्रदक्षिणनृत्यमनुनृत्यति वायुः, अनुयाति चाग्निशिखाम्। सिद्धयति चैतत्—अग्निः सदा प्रदक्षिणभ्रमिरूर्ध्वगः, वायुश्च सदा तदनुगस्तदाघातप्रेरणया तिर्यग्गतिश्च। अजानँश्च कवयः प्रदक्षिणभ्रमिमग्नेः। तथा हि—

तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ।
प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ॥ [ रघु० ४।२५]।

प्रदक्षिणार्चिरग्निर्हि स्वसंनिहितवातं प्रदक्षिणं नर्तयति, अप्रतिहतां गतिं चोपजनयति। सैषा गतिर्मन्दा च तीक्ष्णा च तारतम्येनापरिमितभेदा च। ज्योतींषि हि सुतीक्ष्णतमगतीनि प्रदक्षिणावर्तभ्रमिमन्ति च भवन्ति, स्वभावत ऊर्ध्वगतीन्यपि विजातीयतेजःसंघर्षणाघाताद्यदृष्टकारणवशात्तिर्यञ्चि च संभवन्ति। एवं स्वभावत ऊर्ध्वशिखान्यपि तिर्यगावाच्छिखान्यपि संभवन्ति, एतत् कृत्रिमम्। वस्तुतस्तु—"वह्नेर्नाधः शिखा याति कदाचिदेव" इत्ययं सिद्धान्तः। इदमग्निवाय्वोः शिवताण्डवं सनातनम्।

तेजःप्रेरितवातसंचालितबाष्पवेगेन बाष्पयानादिसंचालकाऽञ्जनमहायन्त्राणि क्षिप्रां गतिं चक्रभ्रामिकां भ्रमिगतिं च प्राप्नुवन्ति। सारांशोऽयम्—वायुरपि तेजसैवानुप्रेरितो गतिं लभते, न तु स्वतः।

आघातजापि वायौ भवति गतिः। सा क्षणिकैव। व्यजनादिकृतो वात आघातजः। यथा दण्डाद्यभिघातेन जलं तरङ्गितं भवति, तथा व्यजनाद्यभिघातोऽपि वाततरङ्गजनकः। तेजःप्रेरित एव वायुः क्रियाजनको भवति। न चेयं कापि नवीना कपोलकल्पना। सनातनोऽयं भारतीयविज्ञानसिद्धान्तः। तथा हि—मुखतः स्वरवर्णसमुत्पत्तिं वर्णयन् वैयाकरणमूर्धन्यमणिराचार्यवर्यः श्रीपाणिनिमुनिः शिक्षायामेनं सिद्धान्तमित्थं प्रमाणीकरोति—

आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्॥ [पा० शि० ६-७] इति।

अत्रानुमानवाक्यं निर्दिश्यते—

समीरणः सदा गतिमान्। ईश्वरयदृच्छासमीरिततेजसा सदा प्रेर्यमाणत्वात्, वाडवप्रेर्यमाणसमुद्रजलौघवत्। यन्नैवं तन्नैवम्, यथा मृत्पाषाणादि। न चायं तथा। तेजः-

प्रेर्यमाणत्वाभावान्न तथेति। अन्यच्च—समीरणस्तेजःप्रेर्यतावान्। अग्निसखत्वात्। यन्नाग्निसखं तन्न तेजःप्रेर्यम्, यथा मृत्पाषाणादि। न चायं तथा। तस्मान्न तथेति।

## अथ तेजोविमर्शः

एवं पृथ्वीजलयोर्गतिं वायोश्च स्वतो गतिमत्तां निरस्य सौरगतिं समर्थयितुं तेजोविमर्श आरभ्यते—

तेजस्तत्त्वमत्यन्तसूक्ष्मम्। अनन्ते व्योम्नि स्थूलायां सूक्ष्मायां च पृथ्व्यां जले वायौ चास्योत्कृष्ट आत्मीयः प्रभावः। पृथिव्यब्वायुगगनैरस्य घनिष्ठा संकीर्णता संसृष्टिश्च। द्रव्यमात्रेण तेजःसंसर्गः। व्यक्ताव्यक्तस्वरूपेण तेजसः सत्तयाऽजस्रं सृष्टिस्थितिप्रलयात्मकं कार्यं प्रवर्तमानमास्ते।

वायुस्तावदग्नियोनिः—"तस्माद्वा एतस्मादात्मन आकाशः संभूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी" [ तै०उ० २।१।१ ] इति श्रुतेः। अत्र संभवो व्यक्तिः। एतेषु पूर्वपूर्वमुत्तरोत्तरस्याविभावहेतुरित्यर्थः। न तु समवायिकारणम्।

एवं चाकाशे प्रशान्तात्मा वायुरोतप्रोत आसीत्, पृथिव्यप्तेजांसि च तथा। स वायुरीश्वरेच्छावशात्तेजःप्रेरित एव क्षोभं प्राप्याग्निं व्याञ्जिजत्। अग्निव्यञ्जनात्प्राग् वातगर्भस्थाग्निना वाततत्त्व उन्मथनक्रिया स्वाभाविकी समभूदेव। यतोऽनिवार्यं तदुन्मथनम्। अग्न्युत्पत्तेः प्राग्वायौ महान् प्रक्षोभोऽवश्यं भूतः स्यात्। पश्चात् सन्तापमयेनाग्निनोत्पन्नमात्रेणाकाशमण्डलव्याप्तजलीयपरमाणूनां समाकर्षणमारब्धम्। फलतः जलीयपरमाणुमहाव्यूहेषु परस्परसंहतिद्वारा जलं व्याकृतम्। एतद्व्याकृतजलतत्त्वानुविद्धाग्नेः प्रकाशः समुद्भूतः। प्रकाशो हि गतिसंघर्षणसंभवः। महाप्रकाशसंपन्ने व्याकृते गगनव्यापिनि वैदिकसमुद्रापरवाच्ये जलतत्त्वे नभोमण्डलपरिव्याप्तपार्थिवपरमाणुमहाव्यूहः समाकृष्टो घनीभावं गतः पृथ्वीनाम तत्त्वं व्याकृतम्। अतः पृथिवीजलमारुतैस्तेजस्तत्त्वस्यात्यन्तसंकीर्णतासंसृष्टी स्वाभाविक्यावेव।

जलाद् वैद्युतः, पृथ्व्याश्च भौमोऽग्निर्नाम तेजो व्यक्तमस्मत्प्रत्यक्षतामेत्येव। आधुनिकवैज्ञानिकजगत आधारशिलाऽऽकाशमण्डलव्याप्तमिदमेव वाय्वग्निजलपृथ्वीमयमस्ति। आकाशतत्त्वशून्यं क्वापि बालाग्रसूक्ष्ममपि स्थानं नास्ति। एवं सूक्ष्माधिकरूपेण सर्वत्र लोकेषु ( सूर्यचन्द्रनक्षत्रतारादिषु लक्ष्येषु ज्योतिर्लोकेषु, अलक्ष्येषु ज्योतिर्लोकेषु च ) सर्वतत्त्वानि वर्तमानानि सन्ति। सर्वत्र हि तेजस्तत्त्वं प्राधान्येन कार्याण्यावहति। यत्र कीदृश्यपि गतिरस्ति, तत्र तज्जनकमिदं तेज एव। यत्र वा तेजस्तत्त्वान्तराण्याक्रम्य विशेषतः

प्रबलं भवति, तत्र वायोरदम्य उत्कृष्टो महावेग उत्पन्न आस्ते। तत्र तत्त्वान्तरैरग्निवाय्वोः प्रबलं सततसंघर्षणमुपजायते। इदं सततसंघर्षणं तीव्रतापस्य महाप्रकाशस्य च प्रधानो हेतुः। इदमेव प्रगतेरुत्पादनं परिवर्धनं च संपादयति। इमाः सर्वाः क्रियाः सहजा युगपच्च जायन्ते। तथा हि—पाषाणखण्डयोर्मिथः संघट्टनसंघर्षणाभ्यां प्रकाशदाहात्मकोऽग्निः सद्य एवोत्पद्यते। पृथ्वीतत्त्वाक्रान्तः सोऽयमग्निः। अतः स्वयं निजां गतिं तु प्रकटयति, परं पाषाणखण्डयोर्गतिं जनयितुमसमर्थ एव भवति। अथ च भवानग्न्युत्तेजकपदार्थाग्निचूर्णादिगर्भमयोगोलकसदृशं किमपि वस्तु प्रमाणीकरोति। तस्मिन् हि जातमात्र एवाग्निः प्रकाशदाहौ, भ्रमिक्षिप्त्यात्मिके गती च संजनयति। यावच्चाग्न्युत्तेजकतत्त्वशक्तिर्न प्रशाम्यति तावत्कस्यापि सामर्थ्यं नास्ति, योऽग्नेः प्रकाशदाहौ भ्रमिक्षिप्त्यात्मिके गती च निरोद्धुं प्रभवेत्। यतस्तेन सह वायुः सक्रियो भवति। तदानीं तत्प्रतिद्वन्द्विशक्तयः प्रत्युत्थिताश्चेत् परास्ता भवन्ति।

सामान्यदीपकेषूत्प्रकाशप्रदीपेष्वपि भ्रमणात्मिका क्षेपात्मिका च गतिर्भवति, किन्तु तदग्निशिखा आश्रयाधीनास्तिष्ठन्ति। तेष्वपि ज्वालोपष्टम्भकमावरणं दत्त्वा यदा वातसन्धुक्षणं विधीयते, तदा तासां ज्वालानां गतिः सध्वाना तीक्ष्णा च जायते, प्रकाशश्च तासां युगपत्तीव्रतामासादयति। संस्तब्धो वातस्तेषु प्रदीपेष्वग्निज्वालां निगृह्णाति नियमयति च। यदि स वायुः किमप्यसंस्तब्धोऽनियन्त्रणं प्राप्नोति, तदा ज्वालाऽप्यनियन्त्रिता सवेगं पलायितुं चेष्टते। अथैतेन भवानवगन्तुमर्हति येन कारणेन सूर्यो महाप्रकाशोऽस्ति, यतो वा स्थिरो न भवितुमर्हति। तत्र भ्रमिक्षितिप्रकाशदहनक्रियाणां निरोधो वा संभवत्येव कथम्?

तेजस्तत्त्वस्य सौरपिण्डस्य च गतिप्रमापका हेतवोऽनुपदमनुमानेन निदर्श्यन्ते। तद्यथा—तेजः सांसिद्धिकप्रगतिमत्, गुरुत्वगुणानाश्रयत्वे सत्युद्भूतानुद्भूतात्मकसुतीक्ष्णतमदहनात्मकस्वभाववेगाख्यसंस्कारेत्युभयगुणवत्त्वात्। यन्न गुरुत्वगुणानाश्रयत्वे सत्युद्भूतानुद्भूतात्मकसुतीक्ष्णतमदहनात्मकस्वभाववेगाख्यसंस्कारेत्युभयगुणवत् तन्न सांसिद्धिकप्रगतिमत्, यथा पृथिव्यादि। न चेदं तथा। तस्मान्न तथेति। एतत्तेजस्तत्त्वप्रगतिसाधकं व्यतिरेकमात्रेणानुमानस्वरूपम्।

प्रतप्तपार्थिवपिण्डादावतिव्याप्तिवारणाय सत्यन्तम्। अदाहकस्पर्शाश्रये विद्युदादिप्रकाशेऽव्याप्तिवारणायानुद्भूतात्मकसुतीक्ष्णतमदहनात्मकेति। सूर्यपिण्डेऽव्याप्तिवारणाय उद्भूतेति। वायावतिव्याप्तिनिरासायोद्भूतानुद्भूतात्मकसुतीक्ष्णतमदहनात्मकस्वभावेति विशेषणम्।

अथ सौरपिण्डस्य प्रगतिमत्त्वसाधकमनुमानम्—सौरमण्डलं विभ्रमिप्रक्षिप्त्यात्मकतीक्ष्णतमप्रगतिमत्। स्वाश्रयकतेजसा बलवदुदीर्यमाणत्वात्, नालीकोन्मुक्तगोलकवत्। यो

यस्तीदृणतमप्रज्वलत्तेजस आश्रयः, स स तेन बलवत्प्रेर्यमाणः सन् विभ्रमिप्रक्षिप्त्यात्मक-प्रगतिमान् । यन्नैवं तन्नैवम् , यथा मृत्पाषाणादि ।

इत्येवं सूर्यगत्यां तर्कसिद्धायां नामार्थानुसन्धानेनापि तद्गतिः परीक्ष्यते । उक्तं हि संस्कृत-साहित्ये प्रायशोऽन्वर्था भवन्ति संज्ञाः, याभिर्धर्मिनिष्ठधर्माणां तदितिहासादीनां च विज्ञानं स्फुरति । तत्र सूर्यस्य तावत्—सूर्यः, सविता, गौः, पतङ्गः, खगः, तरणिः, रविरिति प्रसङ्गापतितानि नामानि विमर्शनीयानि—

सूर्यः = 'सृ गतौ', 'षू प्रेरणे' इति वा धातोः, सरत्याकाशे गच्छतीति, सुवति कर्मणि लोकं प्रवर्तयतीत्यर्थे वा—"राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः" [ ३।१।११४ ] इति सूत्रेण क्यप् । तदेतदाकाशे सूर्यस्य संसरणं भवलये ज्योतिःशास्त्रसंमतमिति प्रमाणविमर्शे वक्ष्यते ।

सविता = सूयतेः सुवतेर्वा कर्तरि तृच् । सर्वोत्पादकत्वात् प्रेरकत्वाच्च तथा । स्वयं प्रगति-मान् सन् रश्म्यात्मना भूतान्यनुप्रविश्य कर्मसु प्रचोदयति ।

गौः = गच्छति वा गीयते स्तूयते वा । गमेर्गायतेर्वा डोस् ।

पतङ्गः = पतन् धावन् गच्छतीति ।

खगः = खे आकाशे गच्छतीति ।

तरणिः = तरत्याकाशे गच्छतीति ।

रविः = रौति शब्दायते । शब्दश्च तेजोवायुसंघर्षणगतिजन्यः ।

## अथात्र प्रमाणान्तरविमर्शः

तत्र वेदेषु सूर्यः—

निरुक्ते दैवतकाण्डे 'इदं विष्णुर्विचक्रमे' इति मन्त्रे दुर्गाचार्यः—"पार्थिवोऽग्नि-र्भूत्वा पृथिव्यां यत्किञ्चिदस्ति तद्विक्रमते, तदधितिष्ठति, अन्तरिक्षे विद्युदात्मना, दिवि सूर्यात्मना" [१२।१६] इत्याह । "यमो रश्मिभिरादित्यस्तत्र नः सर्वस्य पाता वा, पालयिता वा, पुराणानु-कामयेत [नि० १२।२६] इति च निरुक्ते, अपि च—"अज एकपादजनः" [नि०१२।२६]. इति च । अत्र अजनः = गमन इति । अजेर्गत्यर्थेऽजन इति । किञ्च—"उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम्" [ऋ०१।५०।१] इति । अस्यार्थः—उ विस्मये । जातवेदसं जातं वेदो वसु हिरण्यादिरूपं यस्मात् तम् , त्यं तं देवं दीव्यन्तं प्रकाशपुञ्जेन दीप्यमानम् । सूर्यं सरणशीलं विश्वाय दृशे दर्शनाय व्यक्तये । केतवः रश्मय ऊर्ध्वाधः सर्वतः प्रसारिणः । उद्वहन्ति उन्नयन्ति । अपि च—"आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।

हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥" [ऋ० १।३५।२] अत्र-मन्त्रे भुवनानि पश्यन् सविता यातीति स्फुटा गतिरित्यलं प्रमाणमन्त्रदिग्दर्शनेन ।

अथाग्निनामभिस्तेजसो गतिर्निर्दिश्यते—

अग्निः =व्यक्तिम्रक्षणकान्तिगत्यर्थेभ्यञ्जूधातोर्निङ् । व्यक्तिर्व्यञ्जनम् = प्रकाशनम्, स्वस्य द्रव्यान्तरस्य च प्रकाशनया प्रत्यक्षीभावयोग्यत्वापादनं च । तच्च प्रकाशगत्यनन्यथा-भावसाध्यम् । गतिः स्वस्मिन् प्रकाशश्च । तदसौ गतिप्रकाशाभ्यामज्यते व्यक्तीभावमापद्यते व्यनक्ति च द्रव्यान्तरमित्यग्निः । कान्तिगती तत्र स्पष्टार्थे ।

वह्निः='वह प्रापणे' इत्यतो निः । वहति स्वसंनिकर्षं द्रव्यान्तरसंनिकर्षं वा प्राप-यति नयति पदार्थान्तरं द्रव्यान्तरं वा गत्याश्रयतामापादयति तद्वह्निः । एष एव क्षिपति पार्थि-वानि, बाष्पत्वाद्यापादनयाऽऽपः, आकर्षति प्रेरयति च वातम्, हरति लोकलोकान्तराणि जीवात्मनः, प्रवर्तयति चेश्वरात्मा भवन् मनः । यदाह साक्षाद् भगवती श्रुतिः—"अग्ने नय सुपथा राये अस्मान्" [१।१८६।१] इति, "अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे । देवाँ आ सादयादिह ॥" [ऋ० ८।४५।३] इति, "अग्न आ याहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥" [साम० १।१।१] इति, "अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥" [ऋ०१।१।१] इति च ।

तदियं हि तेजोदेवता परमात्मयदृच्छावशवर्तिनी अतीन्द्रियाणीन्द्रियगोचरताम्, असन्ति सत्ताम्, अचेतनानि चैतन्यम्, चेतनानि ज्ञानम्, ज्ञानवन्ति विज्ञानम्, विज्ञान-वन्ति च सत्त्वान्यानन्दमनुभावयति जगद्योनिः ।

अप्पित्तम् =अपां जलानां पित्तवदुद्दीपकत्वात्तथा । जलीयवैद्युताग्निबोधकमेतत् । विद्युद्धि स्वयं सुतीव्रतमप्रगतिमती द्रव्यान्तराणि प्रगमयति प्रवाहेण तृणं वारिधारावेग इव । न चैतन्न विदन्ति साम्प्रतिकभौतिकवैज्ञानिकाः ।

हुतवहः=हुतं वैधं वहति देवान् । यदुक्तम्—

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ [३।७६] इति मनुना ।

तदेतदनुवदति महाकविः श्रीकालिदासः—"वहति विधिहुतं या हविः" [१।१] इत्यादिनाऽभिज्ञानशाकुन्तले ।

आदित्यमण्डलं नाम प्रबलतमाग्निगोलकम् । तदेतद् भ्रमिमात्राश्रयो न तु प्रगतिमदिति तु पाश्चात्यानां वैज्ञानिकाभिमानिनां विपर्यय एव । अत्र हि भ्रमिक्षिप्त्युभयविधा गतिः । अनिरुद्धनियतप्रवेगेण भगोलकेन्द्रे संचरति, ग्रहनक्षत्रतारादिलोकान्तराण्यपार्थिवानि च यथोचितं गत्याश्रयीकरोति । भमण्डलं दक्षिणावर्तं ग्रहादींश्च वामावर्तमीश्वरेच्छया विवर्तयति यत् तदेतत्तेज एव नेतरत् । प्रवहवातनियन्त्रणेऽमी रव्यादयः स्वगत्या प्राग्गामिनोऽपि प्रदक्षिणविवर्तिभचक्रीयवेगवत्तमगत्यायत्ततयाऽहरहः प्रत्यग्गामिनः, भौमादयस्तु कदाचिद्वक्रगत्या प्रदक्षिणत्वात्प्रत्यग्गतिमपि लभन्ते ।

भचक्रप्रगतिविषये जलयन्त्रोपमयाऽऽह श्रीमान् खगोलविदग्रणीः सिद्धान्तशेखरकारः—

ध्रुवद्वयीमध्यगतारकाश्रितं चलद् भचक्रं जलयन्त्रवत्सदा ।
विधि ससर्जानलपौष्णमध्यगैर्ग्रहैः सहोपर्युपरि व्यवस्थितैः ॥ इति ।

तदुक्तमार्यभटीये कालक्रियापादे—

कक्ष्याप्रतिमण्डलगा भ्रमन्ति सर्वे ग्रहाः स्वचारेण ।
मन्दोच्चादनुलोमं प्रतिलोमं चैव शीघ्रोच्चात् ॥१७॥ इति ।

## अथाऽऽर्यभटमतविमर्शः

अथ पृथ्व्याश्चलत्वपद्याः केचित् सहस्तक्षेपमिति वक्तुं साहसिका यदार्यभटः सूर्यं स्थिरं पृथ्वीं च चलामसीसधत् । तादृशसंभ्रान्तजनसम्भ्रमापनोदाय मयाऽऽर्यभटीयभूगोलाध्यायमूलग्रन्थतद्भाष्यप्रमाणोपन्यासविनोद उपस्क्रियते । तथा हि—

उत्सर्पिणी युगार्धं पश्चादपसर्पिणी युगार्धं च ।
मध्ये युगस्य सुषमादावन्ते दुष्षमेन्दूच्चात् ॥ [का० क्रि० ६]

अत्र भाष्ये—"सदैव प्रवहान्तर्गर्भभूतावहवायुस्कन्धमध्यगतैव भूः । तस्माद् वायुस्कन्धस्य भगोलस्य च प्रकृत्यैकत्रैव घनमध्यम् । तस्यैवंभूतो विकारोऽस्ति, अथवा गोलमध्यापेक्षया भगोलमध्यस्य । एवं परस्परसन्निकर्षविप्रकर्षात्सर्वेषामप्यवयवानां संयोगवियोगौ स्तः । तस्मात्तयोः कतरस्यचिच्चलनम् । एवं भगोलस्य वा वायुगोलस्य वा । तत्र भगोलस्यैव युज्यते, धरित्र्या ब्रह्माण्डकटाहमध्यवर्तित्वोक्तेः, आवहस्य च विश्वम्भरया विशेष्यमाणत्वात् । "विश्वम्भरा पवनमावहमाहुरेके" इत्यत्राऽऽवहशब्दार्थनिरूपणेऽपि तन्मध्यगतत्वं सिद्धं विश्वम्भरायाः । अवागावहतीत्यावह उच्यते । अवाग्दिशोऽवधिश्च विश्वम्भरैव । अतो विश्वम्भरा स्वेनैव वायुना तेन समन्ततो वस्तूनि सर्वाण्यवाङ्मुखमावहति । अत आवहवायुः, विश्वम्भरावायुरिति च संज्ञाद्वयमुपपद्यते । तदूर्ध्वंगतः

प्रवहस्तु समन्ततः एव वस्तूनि वहति। सर्वाणि वस्तूनि भ्रामयन्नेव वहतीति प्रवहस्कन्धगतानां वस्तूनां भ्रमः। कदाचिदपि न विश्रान्तिरिति तद्वहनस्य प्रकर्षात्प्रवहशब्दवाच्यत्वम्।...ततः सदापि वायुस्कन्धमध्यगतैव भूरिति वायुस्कन्धात् तदपेक्षया भुवश्च न चलनं युक्तम्, भगोलस्य तु वायुस्कन्धापेक्षयाऽन्यादृशं चलनं प्रसिद्धमप्यस्त्येव" इति।

अपि च—

षष्ट्या सूर्याब्दानां प्रपूरयन्ति ग्रहा भपरिणाहम्।
दिव्येन नभःपरिधिं समं भ्रमन्तः स्वकक्ष्यासु॥
मण्डलमल्पमधस्तात्कालेनाल्पेन पूरयति चन्द्रः।
उपरिष्टात् सर्वेषां महच्च महता शनैश्चारी॥
अल्पे हि मण्डलेऽल्पा महति महान्तश्च राशयो ज्ञेयाः।
अंशाः कलास्तथैवं विभागतुल्याः स्वकक्ष्यासु॥
भानामधः शनैश्चरसुरगुरुभौमार्कशुक्रबुधचन्द्राः।
तेषामधश्च भूमिर्मेधीभूता खमध्यस्था॥ इति।

[ का० क्रि० १२–१५ ]

अन्यच्चाऽत्रैव भाष्ये—"यथा सिद्धान्तशेखरे—

ध्रुवद्वयीमध्यगतारकाश्रितं चलद्भचक्रं जलयन्त्रवत्सदा।
विधिः ससर्जानलपौष्णमध्यगैर्ग्रहैः सहोपर्युपरि व्यवस्थितैः॥ इति।

... ... ... ... ...

नभस्ययस्कान्तमहामणीनां मध्ये स्थितो लोहगुडो यथास्ते।
आधारशून्योऽपि तथैव सर्वाधारो धरित्र्या ध्रुव एष गोलः॥
उष्णत्वमर्कशिखिनोः शिशिरत्वमिन्दौ
काठिन्यमश्मनि नभस्वति चञ्चलत्वम्।
नैसर्गिकी च पयसि द्रवता तथैव
निर्हेतुरेवमवनेः स्थितिरन्तरिक्षे॥"

इति श्रीपतिं प्रमाणयन् भाष्यकारः पृथ्व्याः स्थिरत्वं पूर्वप्रमाणैर्भचक्रस्य च चलत्वं प्रादर्शयत्।

अथ ग्रहचारं प्रदर्शयन्नाह तत्रभवानार्यभटः—

कक्ष्याप्रतिमण्डलगा भ्रमन्ति सर्वे ग्रहाः स्वचारेण ।
मन्दोच्चादनुलोमं प्रतिलोमं चैव शीघ्रोच्चात् ॥
... ... ... ... ...
प्रतिमण्डलभूविवरं व्यासार्धं स्वोच्चनीचवृत्तस्य ।
वृत्तपरिधौ ग्रहास्ते मध्यमचारं भ्रमन्त्येव ॥
यः शीघ्रगतिः स्वोच्चात् प्रतिलोमगतिः स्ववृत्तकक्ष्यायाम् ।
अनुलोमगतिर्वृत्ते मन्दगतिर्यो ग्रहो भ्रमति ॥ इति ।

[का० क्रि० १७, १९–२०]

अत्र स्फुटमैकस्वर्येण पृथिव्याः स्थिरता भचक्रस्य सूर्यादिग्रहाणां च संचरणशीलता श्रीमताऽऽर्यभटेन प्रतिपादिता ।

अपरं च सूर्यसिद्धान्ते—

भावाभावाय लोकानां कल्पनेयं प्रदर्शिता ।
स्वमार्गगाः प्रयान्त्येते दूरमन्योन्यमाश्रिताः ॥ [अ०यु० २४] इति ।

### अथ पुराणसंमता सूर्यगतिः

योजनानां सहस्रे द्वे द्वे शते द्वे च योजने ।
एकेन निमिषार्धेन क्रममाण ! नमोऽस्तु ते ॥ [भविष्योत्तर०]

एतदनुसारमेकविपलेन २२०२ योजनानि ( १७६१६ मील × २½ = ४४०४० प्रति सेकंड) ७९२७२०० यो० प्रतिकलाम् । १९८१८००० यो० = प्रतिहोराम् । ४७५६३२००० प्रत्येकाहम् । १७३८०५६८००० यो० = प्रति सौराब्दम् ( अर्थात् १३६०४४५४४०००० मील = ३६५ दिन ) भगवान् भास्करश्चलति । तदेवं सिद्धं पृथ्व्याः स्थिरत्वं सूर्यस्य च चलत्वमिति ॥

# स्कन्धावारस्तदङ्गानि च

डा० वासुदेवशरणोऽग्रवालः, हिन्दूविश्वविद्यालयः, वाराणसी।

हर्षचरिते कादम्बर्यां च स्कन्धावारस्य तदङ्गानां च राजकुलधवलगृहादीनामतीव वैशद्येन वर्णनमुपलभ्यते। अस्य वर्णनस्य याथातथ्येन स्वरूपावगमाय पारिभाषिकशब्दानां वास्तुसंबन्धिनां तदानीन्तनानामर्थावगमोऽतिवेलमपेक्ष्यते। अत्र च पूर्ववर्तिनः परवर्तिनश्च ग्रन्था एव नः शरणम्। 'सुषमायाः' विगतेषु केषुचिदङ्केष्वस्माभिः—"अत्र ते कीर्तयिष्यामि वर्षं भारत भारतम्" इति शीर्षके निबन्धे प्राचीनभौगोलिकस्थलानाधुनिकनामभिः परिचाययितुं प्रयतितम्। अधुना राजभवनसंबन्धिपारिभाषिकशब्दान् महाकविना सरस्वतीवरदपुत्रेण बाणेन स्वग्रन्थयोर्ग्रथितान् विशदयितुं प्रयत्यते।

राजभवनस्य विशालं स्वरूपं स्कन्धावार ( छावनी )-पदेनाभिव्यज्यते। स्कन्धावाराभ्यन्तरं राजकुलस्य, तदभ्यन्तरं च धवलगृहस्य स्थितिः। अखिलः सैन्यसंनिवेशो हस्त्यश्वरथसेनासामन्तसमवेतः स्कन्धावारपदेनोच्यते स्म। स्कन्धावारान्तर्गतो राजप्रासादो राजकुलाभिधान आसीत्। सुविशाले यस्मिन् बहून्यङ्गणान्यलिन्दानि चासन्। राजप्रासादे राज्ञां राजकलत्राणां च निवासस्थानं धवलगृहाभिधानमासीत्।

## स्कन्धावारः

हर्षचरितस्य द्वितीये पञ्चमे चोच्छ्‌वासे स्कन्धावार-राजकुल-धवलगृहाणां वर्णनमुपलभ्यते। अजिरवत्याः ( राप्ती ) तटे मणितारानामकं ग्रामं निकषा स्थापिते स्कन्धावारे महाकविना बाणेन हर्षस्य प्रथमः परिचयः समभूत्। स्कन्धावारस्य संनिवेशः सुविस्तीर्णां भूमिं व्याप्य स्थितः। निखिलस्य सैन्यशिबिरस्य स्थितिस्तेन सूच्यते स्म। संनिवेशदृष्ट्या स्कन्धावारो बाह्यसंनिवेशः, राजकुलमिति द्वयोर्भागयोर्विभक्त आसीत्। बाह्यसंनिवेशे सर्वप्रथममेकतो गजशाला, अपरतश्च मन्दुरा ( अश्वानामुष्ट्राणां च वासस्थानम् ) भवति स्म। ततः सुविस्तृते बहिःप्राङ्गणे राजकार्यार्थं राजधानीमागतानां राज्ञां विशिष्टव्यक्तीनां च शिबिराणि स्थापितानि। एवं राजकुलसमक्षमेकं नगरमेव शिबिराकारेण न्यवसत्। अस्मिन् विपणिहट्टादयोऽप्यासन्। हर्षचरितस्य पञ्चमे उच्छ्‌वासे श्रीहर्षदेवः प्रभाकरवर्धनस्य रुग्णतावार्तां श्रुत्वा स्कन्धावारं प्रति-

निवृत्तः सर्वप्रथमं विपणिमेव प्रविवेश—"स्कन्धावारं समाससाद। प्रविशन्नेव च विपणिवर्त्मनि यमपट्टिकं ददर्श" इति। विपणिवर्त्म स्कन्धावारस्याङ्गं मन्यते स्म। दिल्लीनगर्या लोहितदुर्गस्य ( लाल किला ) समक्षं परिदृश्यमानं सुविस्तृतं क्षेत्रं 'उर्दू बाजार' ( सैन्यविपणिः ) इति नाम्ना प्रथितमासीत्। इदं विपणिवर्त्मन एव मध्यकालीनं स्वरूपं मन्तव्यम्। अस्मिन्नेव सुविस्तृते प्राङ्गणे सम्राजं सभाजयितुमागमिषूणां नृपसामन्तानां पटमण्डपा विस्तार्यन्ते स्म। हर्षस्य स्कन्धावारे दशविधानि शिबिराणि विस्तीर्णान्यासन्। तेषु नानादेशागतानां नृपतीनाम्, संपराये पराजितानां शत्रुमहासामन्तानाम्, देशान्तरादागतानां दूतमण्डलानाम्, समुद्रपारीणदेश-निवासिनां म्लेच्छानाम्—येषु हि संभवतः शक-हूण-यवन-पारसीकजातीया जना आसन्, जनताया विशिष्टानां प्रतिनिधीनाम्, सम्राजं सभाजयितुमागतानां धार्मिकाणामाचार्याणां साधुसंन्यासिनां च पृथक् पृथक् शिबिराण्यासन्। राजकुलाद् बहिरन्यदपि निरावरणं प्राङ्गणमजिरपदेन व्यवह्रियते स्म।

## राजकुलम्

स्कन्धावाराभ्यन्तरं प्रायशः सर्वोत्तमे सुरक्षिते स्थाने राजकुलं निर्मीयते स्म। राजकुलं प्रायो राजभवनपदेन व्यवह्रियते। तस्य पूर्वदेहली राजद्वारमभिधीयते। स्कन्धावारे गमनागमने अप्रतिवारिते प्रश्नानन्तरिते चास्ताम्, किन्तु राजकुले प्रवेशो नियन्त्रित आसीत्। राजद्वारस्य देहलीं बाह्यप्रतीहाराः प्रतिपालयन्ति स्म। राजद्वाराभ्यन्तरं मार्गस्योभयोः पार्श्वयोर्वर्तमाने शाले द्वार-प्रकोष्ठमलिन्दमिति वा नाम्ना व्यवाह्रियेते स्म। श्रीहर्षसहोदराया राज्यश्रियो विवाहावसरे स्वर्णकारा अलिन्दमास्थाय हाटकघटनामकार्षुः। अलिं ददातीत्यनयाऽलिन्दशब्दस्य व्युत्पत्त्या राजकुले प्रविष्टानामत्र जलपानताम्बूलदानादिविधिना सत्कारो भवति स्मेति सूच्यते। [1]अलिशब्देन स्वल्पः शरावो गृह्यते। अलिन्द एव बहिर्द्वारप्रकोष्ठ इत्युच्यते। अलिन्द इति गुप्तकालीनायास्ततो नाति-

---

१. हिन्दीभाषायाः पश्चिमोपभाषास्वलिशब्दोऽस्मिन्नेवार्थे साम्प्रतमप्युपयुज्यते। संस्कृतस्यालिञ्जरशब्देऽपि स एवार्थोऽवलोक्यते। अलिं जरयतीत्यलिञ्जरो महाकुम्भः [ अमरः २।९।३१ ]। ईदृशा महाकुम्भा नालन्दाप्रभृतिप्राचीनस्थानेषु खननविधिनोपलब्धाः। अलिञ्जरनिर्माणसमये कुम्भकारस्य सर्वा मृत्तिका तन्निर्माण एवोपयुक्ता भवति स्म। नासीत्तस्य सामर्थ्यं लघुकर्करिकाऽलिप्रभृतिनिर्माण इत्यलिंजर-शब्दस्य सार्थक्यं तत्र दृश्यते।

प्राचीनाया वा भाषायाः शब्द आसीत्। इतः पूर्वं द्वारस्यैष भागः [1]"प्रघणः', इति 'प्रघाणः' इति वा शब्देन परिचीयते स्म।

राजकुलस्यान्तर्बहून्यङ्गणान्यभवन्, यानि कक्ष्यापदेन कथ्यन्ते। राजप्रासादवर्णनप्रसङ्गे भारतीयराजप्रासादेषु कक्ष्येतिशब्द आङ्गलभाषायाः कोर्टशब्दस्य पर्याय एव। हर्षस्य राजकुले तिस्रः कक्ष्या आसन्। कादम्बर्यां तारापीडस्य राजप्रासादे चन्द्रापीडः कक्ष्यासप्तकमतिक्रम्य स्वपितरं तारापीडमाससाद। वाल्मीकिरामायणे दशरथस्य राजभवने पञ्च कक्ष्या आसन्, किन्तु राजकुमारस्य रामस्य कुमारभवने कक्ष्यात्रयमासीत् [अयो० ५।५]। हर्षस्य राजकुलस्य प्रथमकक्ष्यायामलिन्दयुक्तस्य राजद्वारस्य वामपार्श्वे सम्राजो राजकुञ्जरस्य कृते सुविस्तृत इभधिष्ण्यागार आसीत्। अस्मिन्नेव हर्षस्य दर्पशातनाम्नः स्वकीयगजस्यावस्थानमण्डपो निर्मितः। अस्य दक्षिणपार्श्वे राजवाजिनां भूपालवल्लभतुरङ्गनामधेयानां मन्दुराऽविद्यत। कालान्तरे नृपतीनां स्वकीयाः प्रिया हया केवलं वल्लभ इति नाम दधुः। सेनायाः साधारणगजानामश्वानां च कृते बहिः स्कन्धावारे व्यवस्था कृता। नृपतीनां स्वकीया महार्हा संमानिता गजा अश्वाश्च राजकुलाभ्यन्तरं प्रथमकक्ष्यायां संरक्ष्यन्ते स्मेति विशेषतोऽवधातव्यमिदमत्र। तेष्वारूढ एव सम्राट् श्रीहर्षो राजकुलस्य प्रथमां कक्ष्यां प्रविशति स्म।

राजकुलस्य द्वितीयायां कक्ष्यायां मध्ये महास्थानमण्डपमासीत्, यद्बाह्यास्थानमण्डपमित्यपि कथ्यते। एतदेव 'आस्थानम्', 'राजसभा', 'सभा' इति वा नाम्ना परिचीयते। मुगलराजप्रासादेष्वस्यैव 'दर्बार आम' इति नाम। अस्य संमुखमजिरं प्राङ्गणं वा भवति स्म। प्राङ्गणपर्यन्तं सम्राड् हर्षो गजारूढोऽश्वारूढो वाऽऽगच्छति स्म। आस्थानमण्डपप्रवेशाय सोपानसमीपं वाहनं परित्यज्यते, अजिरात् सोपानमारुह्याऽऽस्थानमण्डपमधिगम्यते च। स्वकीयसैन्यस्य युद्धाभ्यासप्रदर्शनानन्तरं श्रीहर्षो राजद्वाराभ्यन्तरं हस्तिनीमारुह्य प्रविवेश, सोपानसमीपमागत्यावततार, बाह्यास्थानमण्डपस्थापितमासनमाचक्राम च। चन्द्रापीडस्य दिग्विजयनिश्चय आस्थानमण्डप एवाक्रियत। कादम्बर्यामेतत् सभामण्डपपदेनाप्यभिहितम्। दिल्लीनगर्या लोहितदुर्गे 'दर्बार आम'-समक्षं परिदृश्यमानं निरावरणं प्राङ्गणमेव प्राचीनशब्देष्वजिरमिति। प्रभाकरवर्द्धनस्य नैकटिका भृत्याः प्रियाश्च राजानः सम्राजो रुग्णावस्थायामजिरे संमिलिता अशुचन्। सार्वजनीना सभा,

---

१. पाणिनीयाष्टाध्याय्याम्—'अगारैकदेशे प्रघणः प्रघाणश्च' [३।३।७९] इति सूत्रं दृश्यते। अन्यत्र काशिका—'द्वारप्रकोष्ठो बाह्य उच्यते" इति। बाणेनाप्यलिन्दस्यार्थे प्रघणशब्दः प्रयुक्तः सप्तमोच्छ्वासे। हर्षचरितटीकाकारः शङ्करः प्रघणशब्दस्य बहिर्द्वारैकदेश इत्यर्थं स्वीकरोति।

सर्वेभ्यो दर्शनम्, जनतया सह मन्त्रणं च सम्राजाऽस्मिन्नेव [1]बाह्यास्थानमण्डपेऽक्रियत। राज्यवर्द्धनस्य स्वर्गारोहणानन्तरं हर्षेण बाह्यास्थानमण्डप एव सेनापतिना सिंहनादेन गजाधिपतिना स्कन्दगुप्तेन च सह परामर्शः कृतः। तत्र च तदाऽन्ये बहवो राजानोऽप्युपस्थिता आसन्। सैनिकप्रयाणकृतनिश्चयश्च श्रीहर्षः स्वीयं महासन्धिविग्रहाधिकृतम् अवन्तिं निखिलभूमण्डलस्य विजययात्राघोषणामालेख्य मुक्तास्थानो विसर्जितराजलोकः स्नानारम्भाकाङ्क्षी सभामत्याक्षीत्।

राजकुले द्वावास्थानमण्डपावास्ताम्। एको बाह्य आस्थानमण्डपः (दर्बार आम) उपरि वर्णितः, एष राजकुलस्य द्वितीयायां कक्ष्यायामासीत्। अपरो राजकुलाभ्यन्तरं धवलगृह-समीपे तस्मिन्नेव वा भवति स्म, यो हि भुक्तास्थानमण्डपः (दर्बार खास) इत्यभिधीयते स्म। हर्षचरिते कादम्बर्यां चानयोर्भेदोऽतीव स्पष्टः। यतो हि भुक्तास्थानमण्डपे सम्राड् भोजनानन्तरं स्वकीयान्तरङ्गमित्रैः कुटुम्बेन च साकं तिष्ठति स्म, अतोऽस्य भुक्तास्थानमण्डप इति संज्ञा समजनि। भुक्तास्थानमण्डपस्यैव नामान्तरं प्रदोषास्थानमिति। हर्षेण यस्मिन् हि दिवसे दिग्विजय-निश्चयः कृतस्तदा तत्र प्रदोषास्थाने स नातिचिरं तस्थौ। अस्य संमुखमप्यजिरमेकमासीत्, यस्मिन् विश्रमाय मण्डपो निर्मितः। प्रथमदर्शनवेलायां बाणो दौवारिकेणोपदिष्टमानवर्त्मा कक्ष्यात्रयं समतिक्रम्य चतुर्थ्यां कक्ष्यायां निर्मितस्य भुक्तास्थानमण्डपस्य पुरस्तादजिरे विराजमानं सम्राजं श्रीहर्षं ददर्श। कादम्बरीवर्णिता चाण्डालकन्यका बाह्यास्थानमण्डपे स्थितस्य शूद्रक-नृपतेः सभायां शुकं गृहीत्वा समुपतस्थौ। तत्रत्यं वर्णनं बाह्यास्थानमण्डपस्यैव।

वैशम्पायननामानं शुकमङ्गीकृत्य विसर्जितराजलोकः क्षितिपतिरास्थानमण्डपादुत्तस्थौ। स्नानभोजनादिकं विधाय शूद्रकः स्वकीयामात्यमित्रसामन्तपरिवृतो भुक्तास्थानमण्डपे वैशम्पायन-मुखेन तत्कथां शुश्राव।

राजकुलस्य कक्ष्याद्वयपर्यन्तो भागो बाह्याभिधान आसीत्। अत्रत्या भृत्या बाह्यप्रतीहारा इत्युच्यन्ते। इतोऽभ्यन्तरे राजप्रासादे तिष्ठन्तः प्रतीहारा अन्तरप्रतीहारा इति, अभ्यन्तरपरिजना इति वा कथ्यन्ते।

राजकुलस्य तृतीयायां कक्ष्यायां बाणेन धवलगृहस्य विशदं वर्णनमकारि। धवलगृहं परितोऽन्ये तस्याऽऽवश्यका विभागा आसन्। ते च बाणवर्णिता इमे—

---

१. पृथ्वीचन्द्रचरिते [१४२१] बाह्यास्थानमण्डपस्तदानीन्तनभाषायां 'सर्वोसर' (संस्कृते, सर्वोपसरः) इति कथितः।

गृहोद्यानम्—अस्मिन् नानाविधानि कुसुमानि भवनपादपा लतामण्डपाश्चासन्। अत्रैव कमलवनम्, क्रीडापर्वतः (कादम्बर्यां वर्णितो दारुपर्वतकः), लतागृहाणि चासन्।

गृहदीर्घिका—गृहोद्याने धवलगृहस्यान्येषु विभागेषु च जलस्यैका कृत्रिमा कुल्या प्रवहति स्म। आयतत्वादस्या नाम दीर्घिकेति संजातम्। दीर्घिकाया मध्ये गन्धोदकपरिपूर्णां कमलहंसपरिवृतां क्रीडावापीं निर्माय विहारस्थलानि निर्मीयन्ते स्म। गृहदीर्घिकाया वर्णनं भारते वर्षे न केवलं श्रीहर्षस्य राजभवनेष्वेव, अपि तु षष्ठसप्तमशताब्दीयैषा राजप्रासादवास्तु-कलाऽन्यत्राप्युपलभ्यते। पारस्य (ईरान) देशे खुसरूपरवेजस्य (ई० ५६०-६२८) राजप्रासादेष्वपि[१] कृत्रिमैषा कुल्याऽऽसीत्।

व्यायामभूमिः—कादम्बर्यां शूद्रकवर्णनप्रसङ्ग उक्तम्—आस्थानमण्डपादुत्थाय स्नानात्पूर्वं व्यायामभूमिं प्रविवेश। प्राचीनैषा परिपाटी। अस्या उल्लेखो नरपतिदिनचर्या-प्रकरणेऽर्थशास्त्र उपलभ्यते। अष्टाध्यायीतो ज्ञायते—राजानं योधितवान् 'राजयुध्वा' (ज्येष्ठमल्लः) इत्युच्यत इति।

स्नानगृहं धारागृहं वा—अस्मिन् स्नातुं यन्त्रधारा (फव्वारा), स्नानद्रोणी चावर्तताम्। एतदेव क्षेमेन्द्रेण लोकप्रकाशे निमज्जनमण्डप इति, पृथ्वीचन्द्रचरिते च माजणहरा (मज्जनगृहम्) इत्युक्तः।

देवगृहम्—प्रासादाभ्यन्तरं सम्राजस्तत्परिवारस्य च देवार्चनदर्शनार्थं देवालये कुलदेवताया मूर्तिः प्रतिष्ठाप्यते स्म। लोकप्रकाशेऽस्यैव नाम देवार्चनमण्डप इति वर्तते।

तोयकर्मान्तम्—जलनिधापनस्थानम्।

महानसः—पाकशाला।

आहारमण्डपम्—भोजनस्थानम्।

---

१. हारूरसीदस्य (ई० ७८६-८०९) राजभवनेष्वपि साऽवर्ततेति वर्णनमुपलभ्यते। दिल्लीनगर्यां लोहितदुर्गे मुगलराजप्रासादेषु सा 'नहर बिहिस्त' इति नाम्ना परिचीयते। वस्तुतः प्राचीनराजकुलस्य गृहवास्तूनामेषा विशेषता मध्यकालेऽप्यनुवृत्ता। राजप्रासादं वर्णयता विद्यापतिना कीर्तिलतायां क्रीडाशैल-धारागृह-प्रमदवन-पुष्पवाटिकादीनां कृत्रिमनद्याश्चोल्लेखः कृतः। कृत्रिमनदी भवनदीर्घिकाया एव रूपान्तरम्। ट्यूडरनृपतेः 'हेनरी अष्टमस्य' 'हेम्पटन कोर्ट' इत्याख्ये राजप्रासादे 'लौंग वाटर' इति नाम्ना दीर्घिकाया एव परिचय उपलभ्यते। वस्तुतो भारतवर्षस्येतरदेशानां च राजप्रासादीयवास्तुकलाया दीर्घिकाऽऽवश्यकमङ्गमासीत्।

एतदतिरिक्तं कादम्बर्यां संगीतभवनस्य, आयुधशालायाः, बाणयोग्यावासस्य, अधिकरणमण्डपस्य च राजकुलाङ्गतया वर्णनमुपलभ्यते। हेमचन्द्रस्य ( १२ शताब्दी ) कुमारपालचरिते राजप्रासादवर्णने श्रमगृहस्योल्लेखो वर्तते, यत्र नृपतिर्मल्लविद्याधनुर्विद्ययोरभ्यासं विदधति स्म। एतत् कादम्बरीवर्णितव्यायामभूमेर्बाणयोग्यावासस्यैव रूपान्तरम्।

एभ्यः साधारणभवनेभ्योऽतिरिक्तं राजकुलस्यातीव महत्त्वाधायको भागो धवलगृहमिति शुद्धान्त इति वा नाम्ना प्रथते स्म।

## धवलगृहम्

यया देहल्या धवलगृहमारभ्यते तस्या नाम बाणेन गृहावग्रहणीति स्थापितम्। इतः प्रतीहाराणां रक्षाकर्म प्रवेशावरोधश्च सुदृढः संजायत इत्येवास्य नाम्नः सार्थक्यम्। अत्र नियुक्ताः प्रतीहारा अतीवानुभविनो विश्वासयोग्याश्च भवन्ति स्म। रामायणे [ अयो० १६।४५ ] एषा प्रविविक्तकक्ष्यानाम्नाऽभिहिता। अत्र युवराजो रामः सीतया सह निवसति स्म, अत्र च विशिष्टानुज्ञालब्धजना एव प्रवेशार्हा आसन्। अत्र नियुक्तः प्रतीहारो रामायणे वृद्धवेत्रपाणिः स्त्र्यध्यक्ष इत्युक्तः। बाणवर्णनमपि तं समर्थयति।

धवलगृहे द्वे भूमिके, ततोऽधिका वा भवन्ति स्म। सम्राट् तस्यान्तःपुरं चोपरितनायां भूमिकायां निवसति स्म। धवलगृहद्वारे प्रविष्टमात्र उभयोः पार्श्वयोरूर्ध्वंगमनाय सोपाने आस्ताम्। प्रभाकरवर्द्धनो रुग्णावस्थायां धवलगृहस्योपरितनायां भूमिकायामासीदिति बाणेन सूचितम्। सोपानारोहणावरोहणकर्मणि संजातेन खटखटाशब्देन प्रतीहारोऽतीव चुकोप, यतो हि तदातीव निःशब्दताऽऽदिष्टाऽऽसीत्। श्रीहर्षो नैकवारं पित्रा तत्रैव सममिलत्। धवलगृहाभ्यन्तरं मध्येऽङ्गणं चतुर्दिक्षु च शाला निर्मिता आसन्। अत एव तच्चतुःशालनाम्नाऽभिहितम्। गुप्तकालेऽस्यैव नाम संजवनमासीत्। प्रभाकरवर्द्धनस्य धवलगृहं वर्णयता बाणेन तत्र संजवनशब्दः प्रयुक्तः। रुग्णः प्रभाकरवर्द्धन उपर्यवर्तत, किन्तु तस्योद्विग्नो भृत्यवर्गो नीचैः संजवने चतुःशाले वा संभूय शोकमग्न आसीत्। संभाव्यते चतुःशाले निर्मिताः शाला वस्त्रागारकोष्ठागारग्रन्थागारार्थं प्राघुणिकानां विश्रान्त्यर्थं चासन्।

धवलगृहस्याङ्गणे चतुःशालीयशालानां पुरतो गमनागमनाय निरावरणो मार्ग आसीत्। मध्ये च स्तम्भाधारेष्वायताः सुवीथ्य आसन्। पथसुवीथ्योर्मध्ये त्रिगुणिता तिरस्करिणी वितानिताऽऽसीत्। प्रायः सुवीथीप्रवेशाय पक्षद्वाराणि भवन्ति स्म। सुवीथी, तत्र स्थितानां

स्कन्धावारस्तदङ्गानि च

नृपाङ्गनानां पारिवारिकी दृश्यावली, पक्षद्वाराणि, तिरस्करिणीत्यमीषां सर्वेषां चित्रणम् अजन्ता-भित्तिचित्रेषूपलभ्यते, येन हि धवलगृहरचनाशैली सुस्पष्टं ज्ञायते। सुवीथीनां मध्ये स्थिता भूमिर्निरावरणा वर्तते स्म, तत्र च शयनासनग्रहणाय चत्वरमेकं निर्मीयते स्म, यद्धि चतुश्शाल-वितर्दिकेति नाम्ना श्रूयते।

## धवलगृहस्योपरितना भूमिका

धवलगृहस्योपरितने तले पुरतो मध्ये प्रग्रीवकम्, एकतः सौधः, अपरतश्च वासभवनं वासगृहं वा निर्मीयते स्म। वासगृहस्यैकतमो भागः शयनगृहमिति। वासभवने भित्तिचित्राणि खचितान्यासन्। अत एवास्य स्थानस्य चित्रशालिकेति नामान्तरम्। देवी यशोवती वास-भवने सुष्वाप। हर्षस्य शयनगृहमपि तत्रैवाऽऽसीत्। सौधः केवलं राजयोषितामेव वासस्थान-मासीत्। तस्य निरावरणायामट्टालिकायामुपासीना निवारितस्तनमण्डलांशुका यशोवती चन्द्रिकाः सिषेवे। मध्यस्थितायाः शालायाः प्रग्रीवकमिति संज्ञा तस्य धवलगृहस्य ग्रीवास्थानत्वं संसूच-यति। कौटिलीयेऽर्थशास्त्रे कुमारीशालायां निर्मितस्य प्रग्रीवकस्योल्लेखो दृश्यते [ २।३१ ]। प्रभाकरवर्द्धने रुग्णे सति समागता बान्धवस्त्रिय उपरितने प्रच्छन्ने प्रग्रीवक एव निषण्णा आसन्।

संमुखीनप्रग्रीवक ( मुखशाला )-वदुपरितने तल एव पश्चाद्भागे चन्द्रशालिका निर्मीयते स्म। अत्र केवलं वलीकः स्तम्भाश्चावर्तन्त। अत्रैव स्थित्वा सयोषितो नृपतयश्चन्द्रिकाः सिषेविरे। ससत्त्वा यशोवती चन्द्रशालिकायां स्थिता स्तम्भेषु खचिताः शालभञ्जिकाः ( स्तम्भे-षूत्कीर्णाः स्त्रीमूर्तीः ) ददर्श।

चन्द्रशालाप्रग्रीवकयोः संयोजिका दक्षिणा वामा च सुविस्तृता वीथी प्रासादकुक्षिनाम्ना-ऽभिधीयते, यत्र वातायनानि निर्मीयन्ते। अत्र नृपतिः परिगणितैराप्तसुहृद्भिः सहान्तः-पुरगतसंगीतनृत्याद्युत्सवानन्दाननुभवति स्म।

## बाणवर्णनस्येतरैः संवादः

बाणवर्णितराजप्रासादानां वैशिष्ट्यमवबोद्धुं तत्पूर्ववर्तिना परवर्तिना च साहित्येन साहाय्यमधिगम्यते।

रामायणे दशरथीयराजकुलस्य रामचन्द्रभवनस्य च वर्णनं विद्यते। दशरथस्य राजकुलं पञ्चकक्ष्याकमासीत्। आस्वा तिस्रः कक्ष्या रामो रथमारुह्य जगाम, तदनु कक्ष्याद्वयं पदाति-रतिक्रान्तवान् [ अयो० १७।२० ]। प्रभाकरवर्द्धन इव दशरथोऽपि प्रासादस्योपरितने तले

न्यवसत्। दशरथं सेवितुं गतो रामः प्रासादमारुरोह [ अयो० ३।३१-३२ ]। एवमेव वसिष्ठोऽपि प्रासादमधिरुह्यैव दशरथं द्रष्टुमुपागमत् [ अयो० ५।२२ ]।

रामो युवराज आसीत्। तस्य भवनं दशरथस्य राजभवनात् पृथगासीत्। किन्तु तस्य संनिवेशः प्रायो राजभवनसदृश एवाऽऽसीत् [ अयो० ५।१५ ]। तस्मिन् कक्ष्यात्रयमवर्तत। रामचन्द्रस्य भवने वसिष्ठस्य रथ आतृतीयां कक्ष्यां प्रविवेश। धृतराष्ट्रस्य राजवेश्मनि कक्ष्यात्रयाभ्यन्तरं सभाकक्षमासीत् [ उद्योग० ८७।१२ ]। दुर्योधनस्य युवराजभवनेऽपि कक्ष्यात्रयमेवासीत् [ उद्योग० ८९।२ ]।

बाणवर्णनमत्र विशेषतोऽवधातव्यम्। कादम्बर्यां राजकुमारश्चन्द्रापीडो विद्याध्ययनं समाप्य परावृत्तो वासाय पृथग्भवनमधिगतवान् कुमारभवननामानम्। एवमेव कौमारावस्थायां कादम्बरी कुमारी-अन्तःपुरनामानं पृथग्भवनमुषितवती। चन्द्रापीडभवनस्य द्वौ मुख्यौ विभागावास्ताम्—एकः श्रीमण्डपाभिधानोऽपरश्च शयनीयगृहमिति। श्रीमण्डपो बाह्यो भागः, शयनीयगृहं चान्तरो भाग आसीत्। कादम्बर्यां कुमार्यन्तःपुरेऽपि श्रीमण्डप आसीत्।

'हैम्पटन कोर्ट'-नामके ट्यूडरकालीने प्रासादेऽपि युवराजाय पृथग्भवनं राजकुलस्यैकस्मिन् प्रविभागे कल्पितम्। अस्य त्रयो विभागा आसन्—"प्रेजेंस चैंबर, ड्राइंग रूप, बैड रूम" इति नामानः। अत्र 'प्रेजेंस चैम्बर' इति भारतीयश्रीमण्डपतुल्यः। एष हि समागतैर्जनैः सह वार्तालापादिविधानायाऽऽसीत्। अत्रैव श्रीमण्डपावस्थितशयने चन्द्रापीडस्य मुहूर्तोपवेशनं कादम्बर्यामुपवर्णितम्। 'बैड रूम' इत्यस्य शयनीयगृहेण साम्यं स्पष्टम्।

रामप्रासादीयकक्ष्यात्रयेषु प्रथमायां कक्ष्यायां सर्वप्रथमं द्वारस्थानम्, ततश्च राजवल्लभानामश्वगजानां स्थानमासीत्। तृतीया कक्ष्या सीतारामयोः स्वीयं वासगृहं प्रविविक्तकक्ष्या- [ अयो० १६।४७ ] नामकमासीत्। अत्र जठरः स्त्र्यध्यक्षनामकः प्रतीहारो वेत्रपाणिः प्रतिनियुक्तः। अनुरक्ता युवकाः शस्त्रपाणयस्तं ररक्षुः [ अयो० १६।१ ]। रामहर्षवर्धनयोर्भवनस्य साम्यं दर्शनार्हम्। युवराजहर्षस्य कुमारभवनं रामभवनमिव सम्राट्प्रभाकरवर्द्धनस्य प्रासादात् पृथगासीत्। मृगयाप्रतिनिवृत्तो हर्षः स्कन्धावारं प्रविश्य राजद्वारसमीपमागतवान्, तत्र द्वारपालैः प्रणामादिविधिना सत्कृतश्च। ततः स राजकुलं प्रविश्य तृतीयायां कक्ष्यायां धवलगृहस्योपरितने तले पित्रा प्रभाकरवर्द्धनेन संगतः। पुनर्धवलगृहादवतीर्य राजपुरुषेण सह स्वभवनं प्रपेदे। क्षपामुखे क्षितिपालसमीपमेव पुनरारुरोह। उषसि चावतीर्याश्वपालोपस्थापितं

विहाय तुरगं चरणाभ्यामेवाऽऽजगाम स्वमन्दिरम्। युवराजहर्षस्य भवनं राजद्वाराद् बहिरासीदित्यनेन सूच्यते।

रामायणे रावणराजभवनस्यापि विस्तृतं वर्णनमुपलभ्यते [सुन्दर० ६-७ अ०]। तत्र समस्तं राजकुलमालयपदेनाभिहितम्। तस्यालयस्य मध्यभागे रावणस्य भवनमासीत्, तत्र चासन् बहवः प्रासादाः। त्रयाणामेषां शब्दानां साम्यं बाणवर्णितराजकुल-धवलगृह-वासगृहैः कर्तुं शक्यते, ये हि क्रमशः पूर्वापेक्षयाऽऽन्तरतां भजन्ति स्म। रावणस्य स्वीया महाशालाऽपि सोपानसमन्विताऽऽसीत्। रावणस्य महानिवेशने (राजकुले) लतागृह-चित्रशाला-क्रीडागृह-दारुपर्वतक-कामगृह-दिवागृहाणि [सुन्दर० ६।३६-३७], आयुधशाला-चन्द्रशाले [सुन्दर० ७।२], निशागृहम् [सुन्दर० १२ १], आपानशाला, पुष्पगृहं चाऽऽसन्। अत्र वर्तमानान्यनेकानि वैशिष्ट्यानि बाणसमकालीनेषु राजभवनेष्वप्युपलभ्यन्ते। चन्द्रशालेति सुपरिचितः शब्दः। रामायणस्य चित्रशालागृहं हर्षचरितीयवासभवनस्य शयनगृहं भवितव्यम्, यत्र हि भित्तिचित्राणि खचितान्यासन्; यस्य च वास्तविकं नाम चित्रशालिकेत्यासीत्।

ईशवीयप्रथमशताब्दीभवो महाकविरश्वघोषः सौन्दरनन्दे महाकाव्ये नन्दस्य वेश्म वर्णयन् तद्विमानमित्युक्तवान्, लिखितवांश्च तस्य रचना देवविमानतुल्याऽऽसीदिति। नन्दस्य भवनेऽपि विशालाः कक्ष्या आसन्। यदा बुद्धो नन्दस्य गृहे भिक्षार्थमागतस्तदा स नन्दः स्वकीयया पत्न्या सुन्दर्या सह हर्म्यपृष्ठे समुपविष्ट आसीत्। श्रुत्वैव स ततोऽवतीर्य सत्वरं भवनस्य विशालाः कक्ष्या अतिक्रम्य द्वाराभिमुखं प्रतस्थे, किन्तु कक्ष्याणां विशालतया द्वारोपागमने विलम्बे संजाते स तद्विशालतामभ्यसूयत् [सौ० ५।८]। अश्वघोषवर्णनेन प्रासादस्य हर्म्यपृष्ठे गवाक्षपक्षाणि भवन्ति स्मेति संसूच्यते [सौ० ४।२८]। "विघटितकपाटप्रकटवातायनेषु महाप्रासादकुक्षिषु" इति कादम्बरीवर्णनेनापि धवलगृहस्योपरितने तले वातायनानि भवन्ति स्मेति ज्ञायते।

गुप्तकाले पञ्चमशताब्द्या मध्यभागे रचिते पादताडितकनामके ग्रन्थे वारवनितानां भवनान्यसंबाधकक्ष्याविभागानि वर्णितानि। तानि सुनिर्मितानि सुसिक्तानि सुषिरफूत्कृतानि चासन्। तत्र भवनवर्णनप्रसङ्गे वप्र-नेमि-साल-हर्म्य-शिखर-कपोतपाली-सिंहकर्ण-गोपानसी-वलभी-अट्टालक-अवलोकन-प्रतोली-विटङ्क-प्रासादादिशब्दानामुल्लेखो वर्तते। बाणेन स्थाण्वीश्वरं नगरं वर्णयता प्रासाद-प्रतोली-प्राकार-शिखरशब्दानि व्यवहृतानि। प्रभाकरवर्द्धनस्य धवलगृह इव पादताडितकवर्णनेऽपि वितर्दि-संजवन(चतुश्शाला)-वीथीशब्दान्युपलभ्यन्ते।

मृच्छकटिके वसन्तसेनाया अतिविशाले भव्ये भवनेऽष्टौ प्रकोष्ठा वर्ण्यन्ते। अत्र बाण-वर्णिता कक्ष्यैव प्रकोष्ठपदेनाभिधीयते।

भारतीयस्थापत्यस्य प्रासादनिर्माणपरम्परा स्वल्पैः परिवर्तनैः सह मध्यकालेऽप्यनुवृत्ता। हेमचन्द्रस्य द्व्याश्रयकाव्ये ( १२ शताब्दी ), विद्यापतेः कीर्तिलतायाम् ( १४०० ई० ), पृथ्वी-चन्द्रचरिते ( १४२१ ई० ), मुगलकालीनेषु प्रासादेष्वपि च वास्तुकलावैशिष्ट्यं परम्परागत-मवलोक्यते। कुमारपालचरिते आस्थानमण्डपः सभा [ ६।३६ ], मण्डपिका [ ६।२२-२६ ] वाभिहितः। धवलगृहसमीपस्थं गृहोद्यानमप्यत्र वर्णितम् [२।९१]। गृहोद्यानं बाह्यास्थानमण्डपा-दान्तरे विशाले भूभागे निर्मीयते स्म। हेमचन्द्रेण द्व्याश्रयकाव्ये [ ३।१-५।८७ ] प्रासादीय-गृहोद्यानस्य विस्तृतं वर्णनमाचरितम्। राजप्रासादीयोद्याने वर्तमानानां पुष्प-वृक्ष-लतागृह-मण्डपादीनां विस्तृता नामावली तेन संगृहीता। बाणकृतोद्यानवर्णनानामेकत्र संकलने सति हेमचन्द्रवर्णनेन तस्यातीव साम्यं संदृश्येत।

कीर्तिलतायां प्रासादवर्णनप्रसङ्गे प्राचीना परिपाटी बाहुल्येनाङ्गीकृता। यथा काञ्चन-कलश-प्रमदवन-पुष्पवाटिका-कृत्रिमनदी ( भवनदीर्घिका )-क्रीडाशैल ( क्रीडापर्वत )-धारागृह-यन्त्रव्यजन-शृङ्गारसंकेत (कामगृहम्, सुन्दर० का० ६।३७)-माधवीमण्डप-खट्वा-हिण्डोल-कुसुम-शय्या-चतुःसमपल्वल-चित्रशाली ( चित्रशालिका ) प्रभृतीनां वर्णनं तत्र दृश्यते। सहैव विद्यापतिना तदा नूतनप्रचलितायास्तुरुष्कवास्तुकलाया नूतनाः प्रचलिताः शब्दा अप्युल्लि-खिताः। खास दरबार ( भुक्तास्थानमण्डप )-दर सदर ( राजद्वार )-निमाजगृह ( देवगृह )-ख्वारगह ( आहारमण्डप )-षोरमगह ( सुखमन्दिर )प्रभृतयः शब्दाः। आमेरस्य प्रासादेषु तत्स्थानं सुखमन्दिरनाम्नाऽभिहितम्, यत्र जलस्य कुल्योद्यानस्य मध्यभागं सिञ्चति। प्राचीन-कालीना भवनदीर्घिका दिल्लीनगरीस्थो मुगलकालीनो रङ्गमहलश्चानया स्मार्यते, यत्र हि नहर-बिहिश्तनामिका कुल्या प्रवहति।

पृथ्वीचन्द्रचरिते (१४२१ ई०) प्रासादस्तत्संबद्धान्यनेकान्यङ्गानि च वर्णितानि। तद्यथा—"धवलगृह स्वर्गविमानसमान, अनेक गवाक्ष, वेदिका, चउकी, चित्रसाली, जाली, त्रिकलसां, तोरण, धवलगृह, भूमिगृह, भाण्डागार, कोष्ठागार, सत्रागार, गढ, मढ, मन्दिर, पड़वां, पटसाल, अघहटां, कडहटां, दंडकलस, आमलसार, आंचली, बन्दरवाल, पंचवर्णपताका दीषइँ। सर्वोसर, मंत्रोसर, मांजणहरां ( मज्जनगृह ) सप्तद्वारान्तर ( सप्तकक्ष्या ), प्रतोली, रायंगण ( राजाङ्गण ), घोड़ाहडि, अषाड़उ, गुणणी, रंगमंडप, सभामंडप, समूहिकरी, मनोहर एवं-

विध आवास" [ पृथ्वी०, पृ० १३१-१३२ ] । अस्यां सूचावनेकेषु शब्देषु बाणकालीना परम्परा-ऽनुगुण्णा समवलोक्यते । गवाक्ष-वेदिका-चित्रशाली-तोरण-धवलगृह-सभामण्डप-प्रतोलीशब्दाः प्राचीनाः । मज्जनगृह ( स्नानगृह )-सर्वोसर ( सर्वापसर, दीवाने आम )-मन्त्रोसर ( मन्त्रापसर, मन्त्रणागृह, दीवान खास )-रायंगण ( राजाङ्गण, अजिर ) प्रभृतयः शब्दा नवीनाः । एषामर्थास्तु प्राचीना एव, ये हि बाणसमयेऽप्यस्तित्वमापद्यमाना दृश्यन्ते ।

बाणस्य स्कन्धावारराजकुलादीनां वर्णनं विशदतयावबोद्धुं मध्यकालीनहिन्दूमुस्लिम-नृपतीनामवशिष्टा राजप्रासादा लोचनपथमवश्यं समानेतव्याः । बाहुल्येन राजकुलीया आवश्यकताः सर्वत्र सदा समाना एव । अतो भिन्नजातीयेषु राजप्रासादेषु वास्तुभेदभिन्नेष्वपि संनिवेशसाम्यं स्वाभाविकमेव ।

दिल्लीनगर्यां लोहितदुर्गे निर्मितान् अकबरकालीनान् शाहजहांकालीनांश्च प्रासादान् पश्यन्तु, ते बाणवर्णितराजप्रासादैर्बाहुल्येन समानतां भजन्ते । मुगलसम्राड्भिः स्वीयप्रासाद-निर्माणशैलीषु यद्यपि बह्वयो विशेषता नूतनाः समायोजितास्तथापि प्राचीनप्रासादनिर्माण-विधिरपि बाहुल्येन तत्राङ्गीकृत एव ।

अत्र तेषां साम्यं किञ्चिदुदाह्रियते—

| बाणवर्णितः प्रासादः | लोहितदुर्ग(लालकिला)स्थो मुगलप्रासादः | हैम्पटनकोर्टप्रासादः |
|---|---|---|
| १. राजकुलसमक्षं स्कन्धावारस्य विशालः संनिवेशो विपणिवर्त्म च । | रक्तदुर्गसमक्षं विस्तृतं उर्दू-बाजारसंज्ञकं विशालं क्षेत्रम् । | |
| २. परिखाप्राकारौ । | परिखा-प्राकारौ (खाई, किले की चारदीवारी) । | मोट एण्ड ब्रिज । |
| ३. राजद्वारम् । | दुर्गस्य मुख्यं द्वारम् (दरसदर = सदर दरवाजा) । | दी ग्रेट गेट हाउस । |
| ४. अलिन्दमथवा बाह्यद्वार-प्रकोष्ठः । | मुख्यद्वाराभ्यन्तरमुभयतो निर्मिताः शालाः, यत्राधुना पण्यवीथिका स्थापिता । | बेरक्स एण्ड पोर्टर'स लॉज इन दी इण्टरेंस । |

| | | |
|---|---|---|
| ५. प्रथमा कक्ष्या—राजकुञ्जरस्यावस्थानमण्डपः, राजवाजिनां मन्दुरा च। | निरावरणं विशालं क्षेत्रम्। | बेस कोर्ट। |
| ६. बाह्यास्थानमण्डपस्तत्समक्षमजिरश्च। | 'दीवाने आम'-संज्ञकं स्थानम्, तत्संमुखीनः प्राङ्गणश्च। | ग्रेट हॉल एण्ड ग्रेट हॉल कोर्ट। |
| ७. अजिरादास्थानमण्डपगमनाय सोपानम् (प्रासादसोपानम्) | 'दीवाने आम'-समक्षं स्थितं सोपानम्। | ग्राण्ड स्टेयर-केस [ किंग'स स्टेयर-केस ]। |
| ८. आस्थानमण्डपे स्थापितं राज्ञः सिंहासनम्। | 'दीवाने आम'-संज्ञकस्थाने सम्राडुपवेशाय विशिष्टं स्थानम्। | क्लोक कोर्ट। |
| ९. अभ्यन्तरकक्ष्या। | | |
| १०. धवलगृहम्। | अन्तरङ्गप्रासादः। | प्रिंसिपल फ्लोर। |
| ११. गृहोद्यानम्, क्रीडावापी, कमलवनम्। | नजरबागसंज्ञकमुद्यानम्, तत्र निर्मितो जलाशयः ( चतुःसमपल्वलस्तत्र स्थापिता चन्द्रकान्तशिला च )। | प्रिवी गार्डन, पोण्ड गार्डन। |
| १२. गृहदीर्घिका। | 'नहर बिहिस्त'-संज्ञिका कृत्रिमा कुल्या। | लोंग केनाल, 'लोंग वाटर'। |
| १३. स्नानगृहम्, यन्त्रधारा, स्नानद्रोणी, महानसः, आहारमण्डपश्च। | 'हम्माम, हौज, फव्वारा'-संज्ञकानि जलविहारसाधनानि। | बाथिंग क्लोजेट, किंग'स किचन, बंक्टेटिंग हाल, प्राइवेट डाइनिंग रूम। |
| १४. देवगृहम्। | 'मसजिद' अथवा 'नमाजगाह'-संज्ञकमुपासनास्थानम्, 'मोती मस्जिद' इति नाम्ना प्रथितम्। | रॉयल चेपिल। |
| १५. चतुश्शालः। | | सेलर्स ऑन दी ग्राउण्ड फ्लोर। |
| १६. वीथ्यः। | सुखमन्दिरम् 'खुर्रमगाह, रंगमहल'-संज्ञकम्। | गेलरीज। |

| | | |
|---|---|---|
| १७. मुक्तास्थानमण्डप: । | 'दरबार खास'-संज्ञकं स्थानम् । | आँडिएन्स चेम्बर । |
| १८. प्रग्रीवक:,गवाक्षवातायनपूरिता मुखशाला (अवलोकनम्) । | 'मुसम्ममबुर्ज'-नामकं स्थानम्, सुहागमन्दिरापरपर्यायम् । | क्वीन्स गेलरी, ग्रेट वाचिंग चेम्बर । |
| १९. दर्पणभवनमादर्शभवनं वा । | शीशमहलसंज्ञकं स्थानम् । | |
| २०. शयनगृहम्, वासगृहम् (चित्रशालिका),हस्तिदन्तीय: श्वेतपाषाणीयो वा मुक्ताशैल: । सदन्ततोरणवज्रमन्दिरम् । | नृपतीनां तदवरोधस्य च निवास-स्थानम्, 'ख्वाबगाह'-संज्ञकम् । | किंग'स ड्राइंग रूम,क्वीन्स ड्राइंग रूम, किंग'स बैड रूम, क्वीन्स बैड रूम । |
| २१. संगीतगृहम् । | | |
| २२. चन्द्रशाला । | | |
| २३. प्रासादकुक्षि: । | | प्रेजेंस चेम्बर्स । |
| २४. प्रतीहारगृहम् । | 'ख्वाजासरा'-इत्यस्य गृहम् । | लॉर्ड चेम्बरलेन्स कोर्ट, हे यर हि एण्ड हिज आफि-सियल्स हेड देयर लोजिंग्स |

एषा सूची बाणकालिकी भारतीयप्रासादरचनाशैलीधारा ततः पूर्वतनायां साहित्यसरिति। पश्चात्तनायां च समानरूपेण प्रवहतीति सूचयति । एष च स्वाभाविक ऐतिहासिक: क्रम: । बाणकृतवर्णनेषु कतिपयेषामभिप्राय: साम्प्रतमपि दुरवबोध: । उत्तरकालवर्तिगुर्जरप्रतीहार-पाल-परमार-चालुक्य-यादव-काकति-गङ्ग-विजयनगरवंशीयनृपतीनां समयेषु निर्मितराजप्रासादानां गभीरया गवेषणया मुस्लिमकालीनसाहित्यवास्तूनामध्ययनेन च सुविशाला सामग्री समुपलप्स्यत इत्याशास्यते, यत्साहाय्येन भारतीयराजप्रासादानां रचनाशैली विकासश्च सुस्पष्टतया निश्चेतुं शक्येत ।

लण्डननगरीयहैम्पटनकोर्टनामकं राजभवनं'कार्डिनल वूल्से'-नामकेन शिल्पिना १५१४ई० वर्षे निर्माय 'हेनरी अष्टम'-नामकाय नृपतयेऽर्पितम् । तेन च तन्निर्माणपूर्णाहुति: १५४० ई० वर्षे कृता । तत्र षोडशशताब्दीयाया आङ्गलवास्तुकलाया: प्रभाव आसीत् । सार्द्धशतवत्सरा-नन्तरं १६८० ई० वर्षे विलियमतृतीयसम्राज्ञी-एन-राजत्वकाले तस्य पुन: संस्कार: कृत: । सप्त-दशशताब्द्यामेव दिल्लीनगर्यां शाहजहांकालीना राजप्रासादा: प्राचीनभवनजीर्णोद्धारमुखेन तत्संस्कार-मुखेन वा निर्मिता: । एषु च हेम्पटनकोर्टप्रासादेषु च बाहुल्येन साम्यमवलोक्यते । निश्चयेन

बाणकालिकराजप्रासादैर्विदेशीयराजप्रासादानां न कोऽप्यैतिहासिकः संबन्धः, तथाप्युभयोः संनिवेशे दृश्यमानं साम्यं राजप्रासादीयवास्तुकला येषामभिप्रायाणां पूर्तये आविर्भूतास्ते वस्तुतो बाहुल्येन सार्वदेशिकाः सार्वकालिका इति च संसूचयति ।

नईदिल्लीस्थितराष्ट्रपतिभवनस्य संनिवेशोऽप्यत्र तुलनात्मकदृष्ट्याऽवलोकनार्हः—

स्कन्धावारबहिःस्थो भागः (सेण्ट्रल विस्ता); अधिकरणमण्डपम् (सेक्रेटरियट); राजद्वारम् ( मेन गेट ); बाह्यकक्ष्या (फोर कोर्ट); प्रासादसोपानम् (ग्राण्ड स्टेयरकेस); बाह्यास्थानमण्डपम् ( दरबार हाल ); प्रतीहारभवनम् ( मिलिटरी सेक्रेटरी'ज विंग ); भुक्तास्थानमण्डपम् ( ऑडिएन्स रूम ); आहारमण्डपम् ( बंक्वेटिंग रूम ); अन्तःपुरसंगीताय प्रासादकुक्षिः ( बाल रूम ); गृहोद्यानम् ( मुगल गार्डन्स ); कमलवनम् ( फ्लावर्स ); क्रीडावापी ( पौण्ड ); दीर्घिका ( फाउण्टेन एण्ड लौंग केनाल ) इति ।

---

# स्कन्धावार

अजिर

राजकुल

अजिर

राजद्वार

सकलोपाटेष्ट
साधु

शिबिर

सर्व देशों के जनपद जन

देशान्तरागत
दूतमंडल

समुद्रतटवासी
म्लेच्छ राजा

शिबिर

नाना देशज महीपाल

वारणेन्द्र
(गजशाला)

तुरंग
मंदुरा

क्रमेलक

# राजकुल



मंडप
अजिर
भुक्तास्थानमंडप
स्नानगृह
धारागृह
स्नानद्रोणी
महानस
आहार मंडप
तोयकर्मान्त
धवलगृह
(शुद्धान्त)
व्यायामभूमि
क्रीडापर्वत
लतागृह
गृह दीर्घिका
अभ्यन्तर
देवगृह
गृहोद्यान
कमलवन
गृहदीर्घिका
महास्थानमंडप
(बाह्यास्थानमंडप)
(आस्थान, सभा)
अजिर
प्रतीहारगृह
बाह्य कक्ष्या
इभधिष्ण्यागार
अवस्थानमंडप
राजकुंजर दर्पशात
अलिन्द
राजद्वार
अलिन्द
अजिर
भूपालवल्लभ
तुरंग

# धवलगृह




भूमितल ।

धवलगृह का

# ऊपरी तल



# आर्याणामुत्पत्तिस्थानं त्रिलोकरहस्यं च

श्रीजनमेजयशास्त्री, आदर्शउत्तरमाध्यमिकविद्यालयः, वाजिदपुर, पहितिया, गाजीपुर ।

आर्याणामितिहासः प्राचीनकालादारभ्याद्यावधिकस्तेषां वेदेषु पुराणेषु प्राचीनेष्वन्येषु ग्रन्थेष्वपि च परिपूरितं वर्तते । एतेषां प्राचीनग्रन्थानामध्ययनेन प्राचीनेतिहासस्यैव न, अपि तु विभिन्नज्ञानविज्ञानानामुपकरणानामपि साक्षात्कारो भवति । केचिद् यूरोपीया विद्वांसस्तेषां भारतीयाः शिष्याः प्रशिष्याश्चाप्यार्याणां प्राचीनेतिहासमपूर्णं कथयन्ति, कियन्तस्तु संदेहेऽस्मिन् सन्ति यदार्याणां किमपि यथार्थं प्राचीनं क्रमिकं जीवनवृत्तमुपलब्धमेव नास्तीति । इमे ऐतिहासिका आर्याणामुत्तरध्रुव-मध्यैशियाप्रभृतिस्थानेभ्य आगमनं स्वीकृत्य भारतीयेतिहासं निबिडे तमसि निक्षिपन्ति । अत्र न तेषामेव दोषः, संस्कृतज्ञा विद्वांसोऽप्यत्र किञ्चिदवहेलनं कृतवन्तः । अन्वेषणादेते दूरं पलायन्ते । अस्यैव परिणाममिदमभूद् यत् पाश्चात्त्या ऐतिहासिका विद्वांस इतः शून्यां शालां विलोक्य यत्किञ्चिदुचितमनुचितं वा कथनीयमासीत्तत् कथितवन्तः ।

वस्तुतस्तु इतिहास आर्याणामतिप्रियतरो विषय आसीत्, तथाऽस्याध्ययनं वैदिकयुगादेव दरीदृश्यते । यथा छान्दोग्योपनिषदि—"सहोवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम्, इतिहासपुराणं पञ्चमं वेदानां वेदम्" [ छान्दोग्य० ७।१।२ ] इति । बृहदारण्यकेऽस्य विवरणमेवमुपलभ्यते—"स यथा आर्द्रैधाग्नेरभ्याहितात्…इतिहासः पुराणं विद्या…एतानि सर्वाणि निःश्वसितानि" [ बृ० २।४।१० ] इति । अथर्वसंहितायामपि च—"ऋचः सामानि च्छन्दांसि पुराणं यजुषा सह" [ अथर्व० ११।७।२४ ] इति ।

इत्थमेव श्रीकृष्णद्वैपायनो व्यासः—"इतिहासः पञ्चमो वेदः" इति कथयित्वास्याध्ययनं लोमहर्षणं कारयति स्म, लोमहर्षणोऽप्यन्यान् शिष्यान् प्रशिष्यान् । अनेन प्रकारेणाऽऽसीदितिहास आर्याणां प्रियतरो विषयः । इतिहासस्य परिभाषां कुर्वन् प्राचीनः प्रसिद्धेतिहासकारः श्रीकृष्णद्वैपायनो व्यासः कथयति—

धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् ।
पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते ॥ इति ।

अनया परिभाषयेतिहासस्य कियती विशालता परिलक्ष्यते ? इतिहासः केवलं पूर्व-

वृत्तान्तानामाख्यायिकानां च संग्रहमात्रमेव न वर्तते, अपि तु स धर्मार्थकाममोक्षाणामुपदेशानां प्रवर्तकोऽपि विद्यते। इतिहासाध्ययनस्य प्रयोजनं वर्णयन्नयमेवास्माकमितिहासकारः कथयति—

इतिहासप्रदीपेन मोहावरणघातिना।
लोकगर्भगृहं कृत्स्नं यथावत्सम्प्रकाशितम्॥

[ म० भा० १।१।८३ ]

कौटिल्यः स्वकीयेऽर्थशास्त्र इतिहासस्य परिभाषामित्थं लिखति—

"पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेतिहासः" इति।

अनेन प्रकारेणेतिहासस्य बृहतीं परिभाषां दत्तवन्त आर्यलेखकाः। तेषामितिहासः केवलमाख्यायिकानां राजनीतिधर्माणां वा संग्रह एव न वर्तते, यथेतिहासस्य परिभाषा 'फ्रीमैन' इत्याख्येन पाश्चात्यविदुषा कृता—

"इतिहासो नाम अतीता राजनीतिः, अथवा सा राजनीतिर्याऽद्यत्वे वर्तते" इति।

प्रसादस्य विषयोऽयं वर्तते यदिदानीं भारतीयानां मध्येऽपि केचिदितिहासान्वेषका अस्मिन्नन्वेषणे स्वपदं नियोजयन्ति। यदीदृश ऐतिहासिकान्वेषणक्रमः किञ्चित्कालपर्यन्तं प्रचलेत्, तर्हि भारतस्य सर्वाङ्गपूर्णमितिहासमुपस्थापयितुं शक्ष्यामो वयम्।

अद्य य इतिहासो लघूनां शिशूनां संमुखमुपस्थाप्यते तस्मिन् रामायणादियुगानां घटना विकृतीक्रियन्ते। रामायणकालीनानां कथानां वर्णनाय वाल्मीकिरामायणस्तत्सदृशा अन्ये ग्रन्था वा प्रामाणिकाः सन्ति। यथा पुराणाद्यैतिहासिकग्रन्थेषु वाल्मीकिरामायणेऽपि च प्रतापिनो महाराजजनकस्योत्पत्तिः कथिता वर्तते। जनकाज्जनकवंशः प्रचलति। अस्मिन्नेव जनकवंशे सीरध्वज-कुशध्वजौ द्वौ भ्रातरावभवताम्, ययोः सीरध्वजस्य पुत्री सीताऽऽसीत्। सा रामचन्द्रस्य पाणिगृहीता भार्या बभूव। यद्यप्यस्य वंशस्य सर्वे राजानः 'जनक'-शब्देन व्यवह्रियन्ते, अत एव च बालकाः सीतायाः पितुर्नाम 'जनक' इत्येव जानन्ति; तथापि सीतायाः पितुर्वास्तविकं नाम सीरध्वज इति तु साम्प्रतिकविश्वविद्यालयाध्यायिनामप्यविदितं सद् अन्वेतमस्येवावृतं भवति। इत्थमेव भारतीयेतिहासस्य श्रीगणेशः कक्षायां यस्मिन् दिने भवति, तस्मिन्नेव दिने भारतवर्षस्य नामकारणं दुष्यन्तपुत्रो भरतः कथ्यते। वस्तुतो दौष्यन्तिभरतात्प्रागपि भारतस्य नाम भारतवर्ष आसीदेव। तथा हि स्वायम्भुवमनोः पुत्रः प्रियव्रतोऽभूत्, प्रियव्रतादग्नीध्रः, अग्नीध्रान्नाभिः, नाभे ऋषभः, ऋषभाद्भरतो जातः। अयमेव भरतोऽस्य देशस्य 'भारत' इति नाम कृतवान्।

यथा वायुपुराणे—

ऋषभाद्भरतो जज्ञे वीरः पुत्रशताग्रजः ।
सोऽभिषिच्याथ भरतः पुत्रं प्राव्राज्यमास्थितः ॥
हिमाह्वं दक्षिणं वर्षं भरताय न्यवेदयत् ।
तस्मात्तद्भारतं वर्षं तस्य नाम्ना विदुर्बुधाः ॥ इति ।

[ वायु० ३३ । ५१-५२ ]

एतादृशं वर्णनं मार्कण्डेयपुराणे [ ५३।४० ], विष्णुपुराणे [ २।१।३२ ], भागवते [ ५।४।८-९ ] चोपलभ्यते । एतादृशाः प्रश्नाः पदे पदे समुपतिष्ठन्ते, तेषां समाधानं प्राचीनेतिहासवेत्तॄणां सहयोगादेव भवेत् ।

इदमत्र विचारणीयं वर्तते यदार्यजनानां सभ्यता कियती प्राचीना ? तेषामुत्पत्तिस्तथा सभ्यताया विकासः कदा कुत्र कथमभूच्च ? मानवसृष्टिसृजनात्पूर्वं यदा पृथिवी प्रलयपयोधेरुद्भूता तदा कीदृशी व्यवस्थाऽऽसीदिति कुतूहलस्य विषयोऽयम् । तत्र प्रथमतः सृष्टिक्रमविचारस्तावत् प्रस्तूयते ।

### कमले प्रजापतेः (ब्रह्मणः) उत्पत्तिः

पुराणाद्यैतिहासिकेषु ग्रन्थेषु भगवतो विष्णोर्नाभिकमलाद् ब्रह्मण उत्पत्तिर्निगदिता वर्तते । नाभिकमलस्य रहस्यमजानन्तो जनास्तदर्थं बहुविधां कल्पनां तत्खण्डनमण्डनादिकं च विदधति । वस्तुतस्तु—

मानसस्येह या मूर्तिर्ब्रह्मत्वं समुपागता ।
तस्यासनविधानार्थं पृथिवी पद्ममुच्यते ॥
कर्णिका तस्य पद्मस्य मेरुर्गगनमुच्छ्रितः ।
तस्य मध्ये स्थितो लोकान् सृजते जगतः प्रभुः ॥

[ महा० शान्ति० मोक्ष० १८२।३७-३८ ]

अत्र जलाद् बहिरागता पृथिव्येव कमलपदेनाभिहिता, तथास्यां मेरुपर्वतः कर्णिकासदृशो वर्तते । यत्र तस्योपरितने भागे ब्रह्मण उत्पत्तिरभवत् । अनेनैव प्रकारेण वायुपुराणेऽपि पृथिव्येव पद्मरूपेणाभिधीयते । अस्य पद्मस्य मध्ये मेरुपर्वत एव कर्णिकास्वरूपो विराजते—

अव्यक्तात् पृथिवीपद्मं मेरुपर्वतकर्णिकम् ।
चतुष्पथं समुत्पन्नं व्यक्तं पञ्चगुणं महत् ॥

तन्निमित्तं समुत्पन्नं लोकपद्मं सनातनम् ।
कल्पशेषस्य तस्याऽऽदौ कालस्य गतिरीदृशी ॥
तस्मिन् पद्मे समुत्पन्नो देवदेवश्चतुर्मुखः ।
प्रजापतिपतिर्ब्रह्मा ईशानो जगतः प्रभुः ॥
तस्य बीजानि सर्गो हि पुष्करस्य यथार्थवत् ।
कृत्स्नः प्रजानिसर्गेण विस्तरेणेह कथ्यते ॥

[ वायु० ३४।३७, ४१-४३ ]

अनेनैव प्रकारेण निम्नाङ्किते वर्णने भगवतो विष्णोर्नाभितः समुत्पन्नं कमलमेव 'पृथ्वी' इति कथ्यते । तथाऽस्मिन् भूकमले वनानां द्रुमाणां चोत्पत्तिर्निगदिता—

यदब्जं वैष्णवं कार्यं ततस्तन्नाभितोऽभवत् ।
पद्माकारा समुत्पन्ना पृथिवी सवनद्रुमा ॥
तदस्य लोकपद्मस्य विस्तरेण प्रकाशितम् ।
वर्ण्यमानं विभागेन क्रमशः शृणुत द्विजाः ॥
महाद्वीपास्तु विख्याताश्चत्वारः पत्रसंस्थिताः ।
ततः कर्णिकसंस्थानो मेरुर्नाम महाबलः ॥

[ वायु० ३४।४४-४६ ]

अत्र षट्चत्वारिंशत्तमे श्लोके मेरुपर्वतस्य चतसृषु दिक्षु ये चत्वारो द्वीपाः (देशाः) सन्ति ते भूपद्मस्य चत्वारि पत्राणि वर्णितानि । अनेनैव प्रकारेण वायुपुराणस्यैवैकचत्वारिंशत्तमेऽध्यायेऽपि पृथिवी पद्मरूपेण वर्णिता—

सैषा चतुर्महाद्वीपा नानाद्वीपसमाकुला ।
पृथिवी कीर्तिता कृत्स्ना पद्माकारा मया द्विजाः ॥
तदेषा सान्तरद्वीपा सशैलवनकानना ।
पद्मेत्यभिहिता कृत्स्ना पृथिवी बहुविस्तरा ॥
सब्रह्मसदनं लोकं सदेवासुरमानुषम् ।
त्रिलोकमिति विख्यातं यत्सर्वैर्व्यवहार्यते ॥
चन्द्रादित्यावततं यत्तज्जगत् परिगीयते ।
गन्धवर्णरसोपेतं शब्दस्पर्शगुणान्वितम् ॥

तल्लोकपद्मं श्रुतिभिः पद्ममित्यभिधीयते ।
एष सर्वपुराणेषु क्रमः सुपरिनिश्चितः ॥
[ वायु० ४१।८५-८६ ]

अस्मिन् वर्णने सद्वीपं सगिरिकाननं ब्रह्मदेवमनुष्यादीनां निवासस्थलं यज्जगदिति नाम्ना प्रसिद्धमस्ति, यत्र च सूर्याचन्द्रमसौ प्रकाशेते, एतादृशी पृथ्वी पद्ममित्यभिहिताऽस्ति। एवमेव श्रीमद्भागवते पुराणेऽपि—

"मेरुर्द्वीपायामसमुन्नाहः कर्णिकाभूतः कुवलयकमलस्य मूर्धनि द्वात्रिंशत्सहस्रयोजनविततो मूले षोडशसहस्रं तावतान्तर्भूम्यां प्रविष्टः" [५।१६।७] इति वर्णनं दृश्यते ।

विष्णुपुराणेऽपि भूकमलस्यास्य भारतादिदेशाः पत्राणि कथितानि—

भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा ।
पत्राणि लोकपद्मस्य मर्यादाशैलबाह्यतः ॥ [विष्णु० २।२।४०]

मार्कण्डेयपुराणेऽपीदृशमेव वर्णनमुपलभ्यते—

"तदेवं पार्थिवं पद्मं चतुष्पत्रं मयोदितम्" इति ।
[मार्क० ५५।२०]

एतादृशानि वर्णनानि प्रायशो विभिन्नरूपेण प्रत्येकेषु प्राचीनैतिहासिकग्रन्थेषूपलब्धानि स्युः । एभिर्वर्णनैः स्पष्टमस्ति यत् प्रलयपयोधौ भगवतो विष्णोर्नाभितः, अर्थात् निम्नतलभागात् कमलसदृश्याः पृथिव्या उत्पत्तिर्बभूव, तथा तत्कमलमध्ये स्थिता कर्णिका (या लोके 'कमलगट्टा' इति कथ्यते) सुमेरुर्मेरुपर्वतो वासीदिति । तस्मिन् समये पृथिवी निवसितुं योग्या नासीत्, अत आदिपुरुषस्य (ब्रह्मणः) उत्पत्तिरस्मिन्नेव मेरुपर्वते बभूव ।

आर्याणां प्रथमनिवासस्थानान्येते मेरु-हिमालय-कैलास-गन्धमादन-मन्दराचलादयो गिरय एवासन् । तदत्र द्वीपगिर्यादिवर्णनपुरःसरं प्रथमं ब्रह्मलोकवर्णनं तावत् प्रस्तूयते ।

## ब्रह्मलोकः

• मेरुपर्वतः कुत्रासीत् ? अस्य वर्णनमिलावृते ( वर्तमानतिब्बते ) मिलति । जम्बूमहाद्वीपे ( एशियाद्वीपे ) नव वर्षाणां ( देशानां ) वर्णनं मेरुतो विभिन्नासु दिक्षु सर्वेषु पुराणेषूपलभ्यते ।

यथा विष्णुपुराणे—

भारतं प्रथमं वर्षं ततः किंपुरुषं स्मृतम् ।
हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विज ॥
रम्यकं चोत्तरं वर्षं तस्यैवानु हिरण्मयम् ।
उत्तराः कुरवश्चैव यथा वै भारतं तथा ॥
नवसाहस्रमेकैकमेतेषां द्विजसत्तम ।
इलावृतं च तन्मध्ये सौवर्णो मेरुरुच्छ्रितः ॥

[ विष्णु० २।२।१३-१५ ]

अत्र सप्त वर्षाणां नामानि—भारतवर्षः, किंपुरुषवर्षः, हरिवर्षः, रम्यकः, हिरण्मयः, उत्तरकुरुः, इलावृतः ( तिब्बत ) इति सन्ति । एतेष्विलावृतस्यैवाभ्यन्तरं मेरुपर्वतस्य वर्णनं लभ्यते । अस्यैव मेरोः पूर्वे पश्चिमे च भागे द्वावन्यावपि वर्षौ ( देशौ ) वर्णितौ स्तः— भद्राश्वः, केतुमालश्चेति । यथा—

भद्राश्वं पूर्वतो मेरोः केतुमालं च पश्चिमे ।
वर्षे द्वे तु मुनिश्रेष्ठ तयोर्मध्यमिलावृतः ॥

[ विष्णु० २।२।२४ ]

अनेन प्रकारेण 'इलावृतस्य', यस्याधुनिकं विगलितं रूपं 'तिब्बत' इति वर्तते, मध्यभागे मेरुपर्वतस्य स्थितिः प्राप्नोति । अस्माद्दक्षिणे भागे भारतो वर्तते । मेरोः समीपवर्तिनः के के पर्वताः सन्त्यस्यापि वर्णनं मार्कण्डेयपुराणे लभ्यते—

जठरो देवकूटश्च पूर्वस्यां दिशि पर्वतौ ।
आनीलनिषधौ प्राप्तौ परस्परनिरन्तरौ ॥
निषधः पारियात्रश्च मेरोः पार्श्वे तु पश्चिमे ।
यथा पूर्वौ तथा चैतावानीलनिषधायतौ ॥
कैलासो हिमवांश्चैव दक्षिणेन महाचलौ ।
पूर्वपश्चायतावेतावर्णवान्तर्व्यवस्थितौ ॥
शृङ्गवान् जारुधिश्चैव तथैवोत्तरपर्वतौ ।
यथैव दक्षिणे तद्वदन्तर्वा[र्णवा]न्तर्व्यवस्थितौ ॥

[ मार्क० ५४।२२-२५ ]

अस्माद् मेरोः पूर्वे जठरः, देवकूटः, आनीलश्च; तथा पश्चिमे पारियात्रः, निषधश्च वर्तन्ते। दक्षिणे कैलासः हिमवांश्च; तथोत्तरे शृङ्गवान्, जारुधिश्च पर्वताः सन्ति। इदं वर्णनं वायुपुराणेऽपि [ ३४ अ० ] दृश्यते। अनेनैव प्रकारेणैतेषां पर्वतानां चतसृषु दिक्षु चतस्रः संज्ञा भवन्ति। यथा दक्षिणे कैलासहिमवतोर्भागो गन्धमादनसंज्ञया विभूषितोऽस्ति—

पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः।
विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः॥

[ विष्णु० २।२।१८ ]

एतेषां गन्धमादनादिपर्वतानामुपरि नन्दनादिवनानां मानससरोवरादिसरसां च स्थितिर्वर्ण्यते। तद्यथा—

पूर्वे चैत्ररथं नाम दक्षिणे नन्दनं वनम्।
वैभ्राजं पश्चिमे शैले सावित्रं चोत्तराचले॥
अरुणोदं सरः पूर्वे मानसं दक्षिणे तथा।
शीतोदं पश्चिमे मेरोर्महाभद्रं तथोत्तरे॥

[ मार्क० ५५।२-३ ]

अत्र गन्धमादने पर्वते (हिमालयकैलासयोः) मानससरोवरस्य नन्दनवनस्य च स्थितिर्वर्णिता। विभावयन्तु विपश्चितः! इदं तदेवेन्द्रविहारस्थलं नन्दनं वनं नाम, यस्य सौन्दर्येण भारतीयः साहित्यश्चकासितो वर्तते। मानससरोवरेण (मानसरोवर झील) तु सर्वे जनाः परिचिताः सन्त्येव।

पर्वतानामनेन वर्णनेन स्पष्टमस्ति यदेतेषां मध्ये मेरुरेव मुख्योऽस्ति, यः सर्वेषां बृहत्तमः श्रेष्ठतमश्च वर्तते। अन्ये पर्वता अस्यैव शाखा उपशाखाः, परस्परं संमिलिताश्च सन्ति। अग्रे स्वर्गलोकवर्णने एतेषां पर्वतानां घनिष्ठता स्पष्टा भविष्यति। मेरुतो दक्षिणे यस्य हिमवतः पर्वतस्य वर्णनमुपलभ्यते, स एवाधुना मेरु-कैलास-गन्धमादन-मन्दराचलादीनां संमिश्रितया 'हिमालय' इत्येकया संज्ञया व्यवह्रियते। वर्तमानस्य हिमालयस्य सर्वोच्चः शिखर एव प्राचीनस्य मेरोः शिखर आसीत्। अद्याप्यस्यैवैका बृहती शाखा पामीर-नाम्ना प्रसिद्धा वर्तते। एवमनुमीयते यदिदं 'मेरु' इत्यस्य 'महामेरु' इत्यस्य वा विगलितं रूपमस्ति। अस्यैव हिमालयस्योच्चे शिखरे ( मेरुपर्वते ) ब्रह्मणः पुरी विरचिताऽऽसीत्—

चतुर्दशसहस्राणि योजनानां महापुरी।
मेरोरुपरि मैत्रेय ब्रह्मणः प्रथिता दिवि॥

तस्याः समन्ततश्चाष्टौ दिशासु विदिशासु च ।
इन्द्रादिलोकपालानां प्रख्याताः प्रवराः पुरः ॥

[ विष्णु० २।२।३१-३२ ]

दिवि अर्थाद् अन्तरिक्षे आकाशे वा ब्रह्मणः पुर्यासीत्, तथास्या निम्ने भागे चतुर्षु दिक्षु इन्द्रादिलोकपालानामष्टौ पुर्य आसन् ।

इत्थमेवास्य दिवि निवासिनो ब्रह्मणः परिचय ऋग्वेदे समुपलभ्यते—

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥

[ ऋग्० १०।१२१।१ ]

ऐतरेयब्राह्मणेऽपि—

"प्रजापतिरकामयत प्रजायेय भूयान् स्यामिति । स तपोऽतप्यत । स तपस्तप्त्वेमाँल्लोकानसृजत पृथिवीमन्तरिक्षं दिवम्" [ ऐ० ब्रा० ५।३२ ] इति ।

अन्यच्च—"नाभ्या आसीदन्तरिक्षम्" [ ऋग्० १०।९०।१४ ] इत्यादिभिर्वैदिकमन्त्रैः स्पष्टं भवति यत् पुरा ब्रह्मा एक एव पुरुष आसीत्, तथा स तपःप्रभावाद् द्युलोकम् ( ब्रह्मलोकम् ), अन्तरिक्षम् ( देवलोकम् ), भूलोकं (पृथिवीम्) चासृजत् , अर्थात् सृष्टेर्विकासं कृतवान् । एवमेव तैत्तिरीयकृष्णयजुःसंहितायाः षष्ठे काण्डे द्वितीये प्रपाठके तृतीयेऽनुवाके देवासुरसंग्रामस्य वर्णनं मिलति, येन त्रिलोक्यां दैत्यैः संपादितानां कार्याणां विवरणमधिगम्यते ।

पुरा वह्निः समुद्भूतः सेनानीरसुरा रणे ।
देवैः पराजिताश्चक्रुस्त्रिषु लोकेषु ते पुरः ॥
प्राकारेण तु हैमेन स्वर्गस्था वेष्टिता पुरी ।
रौप्येण चान्तरिक्षस्था लौहेन क्षितिगा तथा ।
एवं पुरत्रयं कामसंचारि स्वात्मरक्षकम् ।
अधिष्ठायासुरा देवैर्युयुधुः पूर्ववैरिणः ॥

अत्र स्वर्णैः स्वर्गस्य, रौप्यकैरन्तरिक्षस्य, लौहैश्च पृथिव्या वेष्टनस्य वर्णनमायाति । इत्थमस्यैव मेरोरुच्चखण्डं ब्रह्मलोकः, मध्यखण्डं स्वर्गलोको देवलोको वा, निम्नखण्डं च पृथिवीति नाम्ना प्रसिद्धा आसन् । अस्य मेरोरुपरितने भागे दिवि ( मेरोः शिखरे ) ब्रह्मणः पुरी ब्रह्म-

सभा वाऽऽसीत्। अत्रैव नारदादय ऋषय उषित्वा तपांसि कुर्वन्ति स्म, अत्रैव च तेषां निवासस्थानमासीत्। अत्रैव मेरुपर्वते वेदानां संकलनमभवत्, वेदोपोद्बलकानां चोत्तमशास्त्राणां रचना समजनि। तदुक्तं महाभारते शान्तिपर्वणि मोक्षधर्मे—

ये हि ते ऋषयः ख्याता सप्त चित्रशिखण्डिनः॥
तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम्।
वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ॥

[ महा० शान्ति० मोक्ष० ३३५।२७-२८ ]

अस्मादेव ब्रह्मलोकादागच्छन्नारद एकदा बदरिकाश्रमे नरनारायणौ ददर्श—

महामेरोर्गिरेः शृङ्गात् प्रच्युतो गन्धमादनम्॥
नारदः सुमहद्भूतं सर्वलोकानचीचरन्।
तं देशमगमद्राजन् बदर्याश्रममाशुगः॥

[ महा० शान्ति० मोक्ष० ३३४।१३-१४ ]

एकदाऽस्मिन्नेव मेरौ पर्वते ऋषीणां सभा संजाता, तत्रेदं निश्चितं यद् योऽस्यां सभायां नागमिष्यति, स ब्रह्महत्यां लप्स्यत इति। वैशम्पायनस्तस्यां न गतवान् ब्रह्महत्यां लब्धवांश्च [ विष्णु० ३।५।३-५ ]।

कथनस्यायमभिप्रायो यदयमेव मेरुशिखरो ब्रह्मलोक आसीत्, अत्र पुण्यकर्मशीलानामृषीणां समुदायो निवसति स्म। अत्र ऋषयः स्वतपसः प्रभावादथवा देवाः स्वकीयैर्यानैर्गन्तुं समर्था आसन्। अत्रैव ब्रह्मलोके सा शिलाऽवर्तत, यत्र सोमरस उपलभ्यते स्म। ब्रह्मा यदा यज्ञानुष्ठानमारभत तदा ब्रह्मपुर्यां तस्य बाहुल्येनोपलब्धत्वाद् यज्ञे तं सोमरसं मुख्यं स्थानं दत्तवान्। अस्य विवरणं वायुपुराणे भुवनविन्यासे प्रकरणे समुपलभ्यते। अस्मादेव ब्रह्मलोकात् ( मेरुशिखरात् ) गङ्गाया उत्पत्तिर्भवति, या स्वर्गे बिन्दुसरोवरपार्श्वे कैलासे आपतति। तत्रैव भगीरथस्तपश्चर्यया तत्रस्थं शिवमाराध्य गङ्गां पृथ्वीतले आनयति, अर्थाद् गङ्गा पर्वतं विहाय 'गढ़वाल'-समीपं पृथिव्यामापतति। घटनेयं प्रायः सर्वेषु पुराणेषु वाल्मीकिरामायणेऽपि चोपलभ्यते। इयं गङ्गेदानीमपि कैलासपर्वते मन्दाकिनी-आकाशगङ्गा-अम्बरनदीप्रभृतिनामभिर्विख्याताऽस्ति। इयमेव यदा पृथिव्यामायाति तदास्या नाम 'गङ्गा' इति संजायते। ( सावशेषम् )

# पारिजातहरणं महाकाव्यम्

श्रीकपिलदेवत्रिपाठी, सरस्वतीभवनम्, वाराणसी।

## कविपरिचयः

अस्य महाकाव्यस्य रचयिता पण्डित-उमापतिशर्मा द्विवेदः 'कविपतिः'। असौ देवरियाजनपदस्थपकड़ीनामकग्रामे पञ्चपञ्चाशदुत्तरैकोनविंशतिशततमे (१९५५) वैक्रमाब्दे जन्म लब्धवान्। अस्य पितुर्नाम पण्डितकान्तारामशर्मा द्विवेदः, मातुश्च श्रीमती मर्यादादेवीति। ज्येष्ठः पितृव्यश्चैतस्य कवेः पण्डितबच्चूरामशर्मा द्विवेदः सुदूरं प्रसिद्धनामा महान् विद्वानासीत्। तत एव बाल्यकाले किञ्चिदधीत्यायं वाराणसीस्थराजकीयसंस्कृतमहाविद्यालये पण्डितप्रवरयोः श्रीभवानीदत्तदीक्षितश्रीरामभवनोपाध्याययोरन्तेवसन् व्याकरणमधीतवान्। काश्यामेव नारायणकाव्य-शेखरद्वयजटा-सनातनधर्मोद्धारप्रभृतिमहानिबन्धकर्तॄणां सकलशास्त्राटवीसंचरण-पञ्चाननानां श्रीमतां नकछेदरामोपनाम्नामुमापतिशर्मद्विवेदानां निजकुलगुरूणां चरणौ सेवमानस्तद्-गृह एव निवसन् तद्भ्रातुः पण्डितरुद्रदत्तशर्मद्विवेदिनः पुत्रेण वर्तमानसुधीसुधानिधिपण्डित-काशीनाथशर्मद्विवेदेन साम्प्रतं 'रुक्मिणीहरणम्' महाकाव्यं सर्वोत्कृष्टं विरचयता समवयसा जातमैत्रीकस्तत्साहचर्येणैवोक्तमहामहिमभ्योऽप्ययं विशेषशिक्षामुपलब्धवान्। एकविंशत्युत्तरोन-विंशतिशततमे (१९२१) खिष्टाब्दे महात्मगान्धिप्रोत्साहितासहयोगान्दोलने पूर्वोक्तमित्रेण सह सप्रतिज्ञं त्यक्तराजकीयपरीक्षोऽसौ एकार्धवर्षं यावत् स्वातन्त्र्येणाधीयानो विभक्तदायादमसहायं वृद्धं पितरं निरीक्ष्य देवरियाजनपदस्थकुबेरनाथसंस्कृतविद्यालये तदध्यक्षेण श्रीजगदानन्द-ब्रह्मचारिवर्येण सप्रार्थनमानीय प्रधानाध्यापकपदे नियोजितः। पञ्चवर्षाणि यावत् तत्राध्यापित-वान्, विद्यालयं च तज्जनपदे प्राधान्यं नीतवान्। तदानीमेवास्य 'शिवास्तुतिः' अपि प्रकाशिताऽ-भूत्। यस्याः परिचये तदानीन्तन-'सुप्रभात'-नामकपत्रे—"स्तुतिरियं पण्डितराजजगन्नाथकृत-लक्ष्मीलहरीमनुकरोति। भगवत्याः पादादिकेशान्तवर्णनं विदधदस्याः कविरमन्दं हृदयानन्द-मातनोति" इत्युल्लिखितं तत्संपादकमहोदयेन। एतस्या एव प्रसद्य तात्कालिकेन संस्कृतपाठशाला-निरीक्षकमहोदयेन श्रीकाशीरामशर्मणा तद्विद्यालयस्य राजमान्यतापि प्रदापिता। किन्तु ततोऽपि कुतश्चिद्विरज्याध्यापकतां च परित्यज्यासौ तमकुहीनरेश्वरेण श्रीलेन्द्रजित्प्रतापबहादुर-

शाहिना सादरमाहूय राज्यप्रधानपण्डितपदे नियोजितस्तदीयराजमान्यसंस्कृतविद्यालये प्रधानाध्यापकतां चालङ्कृतवान्। एकविंशतिवर्षाणि यावद् आराज्यस्थिति स्थित्वा, उन्मूलिते भूमिपतित्वे राजनि चानपत्ये दिवंगते तत्स्थानमपि त्यक्त्वा साम्प्रतं स्वगृहमेवाधिवसति। पूर्वोक्तकुबेरनाथसंस्कृतविद्यालयस्य व्यवस्थापकसभाया आधिपत्यमधुनाऽप्यसौ भजते।

## महाकाव्यपरिचयः

उपयुक्तेष्वेव दिवसेषु स्ववाक्यपावनमात्रोद्देश्येन मन्दगत्याऽऽरब्धं महाकाव्यमिदं सम्पूर्णतां गतमधुना, वाराणसीतः शीघ्रमेव प्रकाशितं भविष्यति च। महाकाव्यमिदमेकविंशतिसर्गैः पूरितम्। मद्दृष्टौ तु काव्यबृहत्त्रय्याः परमद्यावधि केनाप्यनया शैल्या एतादृशं महाकाव्यं लिखितं न वर्तते। आमूलचूले परिवर्तितेऽस्मिन् समये प्राचीनपरिपाटीरक्षणमनेनैव महाकविना कृतमस्ति। मौलिकमिदं महाकाव्यं हरिवंशस्थितपारिजातहरणप्रकरणमाधारीकृत्य पुराणान्तरादिसंवादेन कथासन्दर्भशुद्धि विधाय कविना परिष्कृतमत्यधिकं रोचते। अस्मिन् महाकाव्ये पूर्वार्द्धोत्तरार्द्धरूपेण भागद्वयं वर्तते। तत्रास्माकं विचारेण पूर्वार्द्धापेक्षयोत्तरार्द्धमधिकं गभीरं पाण्डित्यपूर्णं गहनविषयवर्णनादिसमन्वितं च वर्तते। सम्पूर्णे च काव्ये प्रतिसर्गमुत्तरोत्तरं वैशिष्ट्यं वर्द्धते।

## पूर्वार्द्धपरिचयः

प्रथमसर्गे विस्तरेण द्वारिकावर्णनम्; द्वितीयसर्गे प्रभातवर्णनं रुक्मिण्या यागप्रस्तावश्च; तृतीयसर्गे द्वारिकातो रैवतकगिरौ भगवतः कृष्णस्य सपरिग्रहस्य यात्रावर्णनं रैवतकसमुद्रयोर्वर्णनं च; चतुर्थसर्गे विशेषतया यागवर्णनं यागेतिकर्तव्यतानिरूपणं नारदागमनं च; पञ्चमसर्गे भगवन्नारदयोः परस्परालापव्याजेन भगवत्स्तुतिः पारिजातपुष्पोपहरणं च; षष्ठसर्गे रुक्मिण्याः पुष्पप्राप्तिमूलकनारदकृतसौभाग्यवर्णनस्योत्तरे रुक्मिणीकृतसतीस्वभाववर्णनं सत्यभामाया मानप्रस्तावश्च; सप्तमसर्गे नारदस्य सत्यभामागृहगमनं तन्मानदशां निरीक्ष्य नारदकृतं किञ्चिदाश्वासनं भगवते च तद्दशां निर्दिश्य नारदप्रतियानम्; अष्टमसर्गे भगवता स्वयमागत्य सत्यभामाया मानदशानिरीक्षणं तन्मानकारणप्रश्नश्च; नवमसर्गे सत्यभामायाः कृष्णोपालम्भस्तन्मानभङ्गार्थं पारिजाताहरणाय कृष्णकृता प्रतिज्ञा च; दशमसर्गे भग्नमानया सत्यया सह नगशृङ्गाधिरोहणं शरद्वर्णनं प्रतिस्मरणेन नारदस्य पुनः प्रत्यागमनं नारदकृष्णयोरुक्तिप्रत्युक्तिपूर्वकं नारदस्य भगवत्संदेशमादाय पारिजातमिन्द्रं याचितुं

स्वर्गगमनम्; एकादशसर्गे किञ्चित्स्वर्गवर्णनपूर्वकं नारदेन्द्रयोः संवादः, अन्ते इन्द्रकृतं पारिजातदानप्रत्याख्यानं चेति।

## उत्तरार्द्धपरिचयः

द्वादशसर्गे नारदेन प्रत्यागम्येन्द्रमुखेरितप्रत्यादेशकथान्ते भगवतः कृष्णस्य सांशयप्रतिवचनम्, स्वर्गारोहणनिश्चये गरुडाह्वानम्; तदागमनवर्णनम्, तत्कृतं भगवन्महिमवर्णनं च; त्रयोदशसर्गे विशिष्य सन्ध्यावर्णनम्; चतुर्दशसर्गे उद्धवसात्यकिभ्यां सत्यभामया च समं गरुडारूढस्य भगवतः कृष्णस्य स्वर्गाधिरोहणम्, मार्गे यमलोकप्रभावकथनम्, अप्सरोलोकवर्णनम्, वैकर्तनलोकवर्णनम्, स्वर्गप्राप्तिश्च; पञ्चदशसर्गे स्वर्गप्रभाववर्णनपूर्वकं गरुडाय नन्दनगमनायादेशः, नन्दनवनवर्णनम्, पारिजातदर्शनम्, तदुद्धरणं च; षोडशसर्गे पारिजातहर्तुः शङ्खध्वनिना रक्षिभिश्च निवेदिते भगवदाक्रमणे गुरुणा सममिन्द्रस्य मन्त्रणा, बृहस्पतेरिन्द्राय किञ्चिन्नीतिनिर्देशनपूर्वकमिन्द्रस्य युद्धाय समुद्योजनम्, स्वस्य च परस्परसन्धये कश्यपं प्रति गमनम्, इन्द्रस्य च युद्धसमुद्योगः, त्रिदशसैन्यसज्जनं च। सप्तदशसर्गे इन्द्रकृष्णयोर्युद्धवर्णनम्, इन्द्रस्य ऐरावतस्य रैवतकगिरौ निपातः, सान्ध्यविधये युद्धविरामश्च। अष्टादशसर्गे सन्ध्योपासनप्रसङ्गेन विषमयुद्धस्य सत्परिणामाय कृष्णेन कृता शिवस्तुतिः, गुरुमुखात् कृष्णेन्द्रयोर्युद्धोद्योगं श्रुत्वा विषमविपाकशमनाय कश्यपर्षिकृता शिवस्तुतिरपि, तदाविर्भावप्रसङ्गेन नन्दीश्वरवर्णनम्, वरप्राप्तिश्च; एकोनविंशे सर्गे प्रभाते युद्धाय पुनरुद्यतयोः कृष्णेन्द्रयोः समागत्य बृहस्पतिना कश्यपस्यानुपदागमने निवेदिते युद्धविरामः, कश्यपागमनवर्णनम् कश्यपेन युद्धकारणे पृष्टे कृष्णेन्द्रयोः पृथक् पृथक् स्वस्वाभीष्टनिवेदनम्; विंशसर्गे मध्यस्थतया निजमतदानेन कश्यपद्वारोभयोः संबोधनम्, देवमातुरदितेः कुण्डलापहारिणो भौमासुरस्य निग्रहणायोभावादिश्य कश्यपकृतमातृमहिमवर्णनम्, तन्निग्रहायोद्युक्तस्य कृष्णस्य कश्यपकृता नारायणस्तुतिः, भगवतः प्रतियानम्, नरकासुरनिग्रहणम्, कुण्डलप्राप्तिः, देवमात्रेऽदितये तत्प्रतिदानम्, तत्पारितोषिकरूपेण कश्यपाऽदितिप्रस्तावपूर्वकं सर्वदेवसंमत्येन्द्रकृतं कृष्णाय पारिजातप्रत्यर्पणम्, उभयोः ससन्धिसंगमनं च। एकविंशसर्गे भगवतः स्वर्गाद् द्वारिकायां प्रत्यागमनम्, सत्यभामाङ्गणे पारिजातरोपणम्, वसन्तवर्णनम्, सत्यभामाकृष्णयोर्मिलनसंवादादि चेति।

उक्तमहाकाव्यस्यैवायं तावत्प्रथमः सर्गः सहृदयानां विदुषां मनोविनोदाय प्रकाश्यतेऽधस्तात्—

# पारिजातहरणं महाकाव्यम्

## उमापतिशर्मद्विवेदविरचितम्

### क्षेत्रनामा प्रथमः सर्गः

श्रियं समस्तामुपधाय मानवीमनन्यतन्त्रः सकलेश्वरो हरिः ।
विधाय निर्बाधतरं भुवस्तलं कुशस्थलीं सर्वसुखैरमीमिलत् ॥१॥
पुरीमभिद्योतितवार्धिवाससं विभासिरत्नोज्ज्वलभूषणामिमाम् ।
शिरस्समालम्बिघनालकामसावशादसाधारणनायिकामिव ॥२॥
विभूतिभिर्विष्णुपुरीयमात्मना त्रिलोकमप्येकतमाऽत्यशेत किम् ।
अजस्रमभ्रंकषकाशिभिर्गृहैः सुमेरुरस्याः समतामियाल्लघुः ॥३॥
व्यधादिमां नाम यदा स विश्वकृत् पयोधिमध्येऽखिलरत्नराशिभिः ।
स्खलत्कणानेव विचित्य तत्प्रभृत्यवाप रत्नाकरतां महोदधिः ॥४॥
हरीकृतानुत्तमवैभवा पुरी धुरीणलोकाध्युषिताऽप्यसौ सदा ।
प्रियापवर्गैश्च विदूषवती हरेः पुरीं हरेः क्वापि तृणाय मन्यते ॥५॥
इयं क्वचिन्मारकतीन्दुकान्तकैः कृता महानीलशिलामयी क्वचित् ।
दधाति भानूपलशालिताऽनिशं घनं दिनं पूर्णनिशां कुहूमपि ॥६॥
त्रिलोकचित्राकृतिचित्रिताशया पुरीयमभ्यर्णचराणवाऽनिशम् ।
सुपर्णकेतोर्जगदाश्रयीभवत्तनुं दधानाऽप्यतिशेत एव ताम् ॥७॥
इहत्यकुड्येष्वतिभासिषु स्फुटं फलत्प्रतिच्छायकुलाकुले जने ।
न जातु सत्यत्वमृषात्वयोः परं प्रमातुमीष्टे प्रतिभाऽपि काचन ॥८॥
जगत्कलाकौशलसारशालिनी मणिव्रजावासिततोरणस्रजाम् ।
इयं रुचीनां निचयैर्यथा श्रियाऽभ्युपैति नीराजनमन्तिके पुरी ॥९॥
पदान्तसंसर्पिसरित्पतिः सदा प्रतीन्दुभासद्रुतचन्द्रिरोपला ।
पदं प्रभूतद्युसरिद्धरिं तथाऽनुयात्यसौ देवधुनीधरं हरम् ॥१०॥

इयं क्वचित्पान्थगतागतैः स्फुरद्रजःपरिम्लानिमुपैतु नेत्यमूम् ।
तदा तदैन्दूपलनिर्गलज्जलच्छलात् सुधाभिर्विधुरेव लिम्पति ॥११॥
सदैव या वैद्युतयन्त्रवीजिता प्रवातमप्यात्मकृते न लिप्सते ।
तथाऽप्यदःसंभ्रमसंभृतात्मना विशेषिणा गन्धवहेन सेव्यते ॥१२॥
निजप्रभापास्तदिनक्षपाभिदा न भानुमीप्सत्यपि भासितुं क्वचित् ।
अपि त्विमान् भित्तिगभानवोपलान् करैरभिद्योतितुमाश्रयत्यसौ ॥१३॥
ज्वलन्ति यत्रौषधयो वने वनेऽजरामरत्वप्रदशक्तिशालिताः ।
गृहे गृहे ते मणयोऽप्यभीष्टदा जने जने मन्त्रमयो महोदयः ॥१४॥
प्रदीप्तजाम्बूनदजालमालिनी सुजातरूपैः कलशैरलङ्कृता ।
विभक्तराजाध्वरसाजिरा चिरं पुरी प्रतिष्ठेव भुवः स्वरूपिणी ॥१५॥
वितायमानाम्बुशरद्घनान्तरे प्रवृष्टमुक्ताकृतिबिन्दुलोलुपाः ।
यदीयधारागृहवारियन्त्रकं समाश्रयन्ते शिखिचातकादयः ॥१६॥
विदूरसम्पातिकणेषु दाडिमप्रबीजविभ्रान्तशुकैश्च सारसैः ।
विसावबोधैरभिधावमाश्रिता सदेह सन्नृत्यति वारियन्त्रिका ॥१७॥
प्रकामसंक्षोभतरङ्गिताशयौ रहस्यवार्तायितसारसस्वनौ ।
विकासिपङ्केरुहचेष्टिलोचनौ मधुव्रतालापविश्रृङ्खलौ चिरम् ॥१८॥
अहर्निशं साधुरसातिरेकिणौ प्रकम्पनैः सात्त्विकभावमास्थितौ ।
पदे पदे ऽस्यास्तु मिथो मनोहरौ सदा रमेते सरसीसगोत्रगौ ॥१९॥
परिस्फुरन्मीनमनोहरेक्षणाः क्षणे क्षणे स्रस्तदुकूलशैवलाः ।
चिरादिहोच्छ्रायिपयोधराः सदा न वापिकाः कस्य हरन्ति मानसम् ॥२०॥
विलङ्घयन्नम्बरमुच्छ्रितद्युतिर्विचित्रपुष्प्यत्तरुवीरुदुल्लसन् ।
विलासिनीसौरतसौरभोद्धरो लसत्यलं केलिशिलोच्चयः क्वचित् ॥२१॥
गृहे गृहेऽस्याः परिकल्पितस्थले विशेषबुद्ध्या विधिनैव वेशितः ।
सदाभिगुप्तो हिमहारिधारणो ज्वलन्नपीमां ज्वलनो न बाधते ॥२२॥
तडित्वती योधृचमत्कृतायुधैरमन्द्रमङ्गल्यकदुन्दुभिध्वनिः ।
धृतेन्द्रचापा वलभीविशेषकैर्घनायतेऽसौ सघनाश्मवेश्मभिः ॥२३॥

यदीयहट्टो घटमानमानवप्रघट्टकोद्घाटिमहारवो घनान् ।
निधीन् दधानः प्रतिवीथि सद्विधीनधो विधत्तेऽम्बुनिधीननेकशः ॥२४॥
पुरीह सूत्रादिविशेषवृत्तिमद्विधाविशेषैर्ननु शाब्दिका यथा ।
प्रकल्पयन्ति प्रकलाः पटादिकाननेकरूपानपि कारवोऽनिशम् ॥२५॥
अनेकयन्त्रव्यवसायशालिनी पुरी स्फुटस्फाटिकभूमिभूरियम् ।
नभस्तलाधस्तलबिम्बनैर्निजैर्दधात्यनन्तत्वमधस्तथोपरि ॥२६॥
सदन्तरा लापितवैदिकस्वनाः प्रदीप्तजाम्बूनदभोपवीतिनः ।
विभूतिमन्तः कमलाक्षलक्षिताः पुरोविमानाः क्षितिनिर्जरा इह ॥२७॥
निवारयद्भिः किल कालकामनां निवासयद्भिः पुनरात्मतन्त्रताम् ।
करैरिवान्दोलिभिरत्र सद्मसु ध्वजाम्बरैरम्बरमप्युदुह्यते ॥२८॥
गृहे गृहेऽस्याः प्रतिगर्जतामहो महाभटानां भुजतालजध्वनिः ।
प्रतिध्वनद्ग्रावगुहागुरूभवन् दिशो दशापूर्व्यं पराबुभूषति ॥२९॥
प्रशिक्षमाणा विविधायुधोद्यमान् क्वचित्तु मल्लेद्धभुजाभुजिक्रियाः ।
पुरीह शूराः स्पृहयालवो रणे त्रिलोकमेके प्रतियोद्धुमीशते ॥३०॥
क्वचित्सभा नैतिकमन्त्रणोद्धुराः क्वचिद्भटानां रणविभ्रमाः क्वचित् ।
कलाविलासाः प्रतिकाङ्क्षसंभवा निरस्तदैन्यानि दिनानि कुर्वते ॥३१॥
घनध्वनीन् न्यक्कुरुतेऽत्र यत्स्वनो महामनोवाहकवाहविभ्रमः ।
विलोक्यते राजपथेषु संकुलीभवन् भ्रमद्भूरिरथोपसंक्रमः ॥३२॥
हरिद्द्विपव्रातविगर्हिणी घटा नितान्तभङ्कुर्वदयोङ्घ्रिशृङ्खला ।
कटोत्कटामोदमिलच्छिलीमुखा गलन्मदैराविलयत्यलं भुवम् ॥३३॥
सदाधिरूढा नृपपूरुषैरिह प्रतिक्षणं हेषितबद्धसाहसाः ।
हसन्त उच्चैःश्रवसं हयाः शतं पुरोऽभिरक्षाभ्रमणं वितन्वते ॥३४॥
पदे पदेऽस्या ध्वजिनी निवेशिता शिताश्रयादःकुलसङ्कुला जगत् ।
प्रभुः परिप्लावयितुं स्वहुङ्कृतैर्मिथो ध्वनन्त्यत्र महार्णवायते ॥३५॥
क्वचित् क्वचिन्निन्दितनन्दना घनाः सदोद्भवत्पुष्पफलैर्लताद्रुमैः ।
समर्तुवृत्त्योल्लसिताः क्षणे क्षणेऽवनीषु यन्त्रोपवनी विशिष्यते ॥३६॥

विचिन्वते स्वां मृदमप्यसौ पुरी परां प्रसूते हरिसात्मनामहो ।
इमां तु यः सेवत एव सर्वतः स देवसौराज्यभुजं विगायति ॥३७॥
पुरीषु सप्तस्वपि मोक्षदायिनीष्वियं परा द्वारपवर्गसर्जने ।
सदैव घुष्यते सनातनैर्बुधैः प्रगीयते द्वारिकयतयाऽऽख्यया ॥३८॥
नहि क्रतुं कञ्चिदपेक्षते पुरी न वा परोपासनधर्मकर्मणी ।
स्वतन्त्रतालम्भितसर्वसौष्ठवा निपात्य पापान्निददाति निर्वृतिम् ॥३९॥
इमामिहानन्तविभूतिभागिनीं परत्र चाक्षय्यपदोपलम्भिनीम् ।
विचारयन् स्वामरतासु सद्घृणो मरुद्गणोऽत्रत्यनरत्वमीप्सति ॥४०॥
इयं हि दूरादपि कीर्तिता जनैः सदा सदैश्वर्य्यफलानि लम्भयेत् ।
क्रियादघौघोपहतिं विलोकिताऽनुमेविता मुक्तिमुपानयेदपि ॥४१॥
इयं हि तीर्थव्रतयागजन्मभिः प्रभूतपुण्यैर्यदि लभ्यते नरैः ।
अभूतभाग्योदयभागधेयतामहो अमीषां तु न यन्ति नाकिनः ॥४२॥
अलं त्रिलोकोत्तरशालिनीमिमामवर्णनीयां परिवर्ण्य सत्पुरीम् ।
विभुः स्वयं यां परिखीकृतार्णवां निजाधिवासाय भृशं व्यरूरुचत् ॥४३॥
इहैव भूयोवलये ज्वलद्रुचावमन्दभास्वन्मणिमण्डलाञ्चिते ।
विशेषशालाशतशालितेऽभितः सुरक्षिते रक्षिभिरुद्यतायुधैः ॥४४॥
प्रवृत्तसौख्ये युवरञ्जनैः क्वचित् क्वचित्प्रगीते लहरीभिरम्बुधेः ।
प्रनृत्तदिग्वारवधूजने पुनः श्रिते समित्या पटुयादवैरपि ॥४५॥
क्वचिच्च यागेषु हुताद्धुताशनात् परिस्फुरद्धूमचयैर्धुनध्वजे ।
क्वचित्प्रजानां व्यवहारनिर्णयाधिकारिजाग्रद्दरबारसज्जने ॥४६॥
सहस्रशोऽन्तःपुरवासिभिः परैरलङ्कृतेऽनुत्तमयौवतैरपि ।
तदीयसुस्नेहितकेशवासनाप्रवृत्तधूपैरधिवासिते द्विधा ॥४७॥
सुधाचयैर्मौक्तिकचूर्णसाधितैर्विलिप्तसौधे हिमसारसंस्कृतैः ।
सुषिच्यमानेऽपि विमानभासिते स्फुरत्सुमानां मकरन्दवारिभिः ॥४८॥
विकीर्णकर्पूरपरागिणि प्रिये मृगनाभिगन्धाधिकरागरञ्जिते ।
स्वतन्त्रतानृत्तशिखावले क्वचित् कपोतलीलोल्लसिताङ्गनाजने ॥४९॥

समुच्छ्रिताट्टालककुट्टिमाग्रभूप्रवृत्तलीलैर्ललनाजनैरलम् ।
सहस्रचन्द्रायितकान्तिकाशिते स्थिरश्रिणि प्रेयसि राजमन्दिरे ॥५०॥
महोन्नते च्छत्रपुषि प्रभौ क्षितेः प्रसेव्यमाने ननु चामरैरपि ।
गृहेऽत्र राज्ञीव वसन्नसंशयप्रसाररीतेरपि संग्रहीतरि ॥५१॥
दिदृक्षुजिज्ञास्वनुशास्तिपित्सुतद्विवित्सुसङ्कीर्णतमाध्वगोपुरे ।
समेतसामन्तसहस्रवाहिमृत्तरादियानैरधिसङ्कुलाजिरे ॥५२॥
शुभे सुधर्माह्वप्रभासभाजिते विभासिते रत्नवितर्दिकाशतैः ।
हरिः समन्तादुपमन्त्रयन् मिथः स्वमन्त्रिमुख्यैः सममुद्धवादिभिः ॥५३॥
कृतार्चनेष्वभ्यवहारपूर्वकं श्रयत्सु लोकेषु विरामसंविधाम् ।
रवौ नभोमध्यमुपेत्य यौवनश्रिया लल टन्तपतामुपासते ॥५४॥
दिशासु दीप्तासु मरीचिकावतीष्वमन्दभोच्छ्रायविमूर्च्छने रवेः ।
ज्वलत्सु माणिक्यमयालयेष्वलं विलम्ब्य विश्राम्यति सर्वतोऽनिले ॥५५॥
प्रशान्तवातस्थिरपल्लवावलीप्रलीनघर्मावयवेषु शाखिनाम् ।
निमीलिताक्षं मुनिवर्तनेष्विव प्रभोर्गुणाध्यानपरेषु पक्षिषु ॥५६॥
छायासु सन्त्रातुमिव स्वमुज्ज्वलद्रवेर्भयात् पत्स्वथ पादपावलेः ।
संवेपमानासु निपत्य मन्महे कृशासु कृच्छ्रात् स्थितिभागिनीष्वहो ॥५७॥
स्वस्थोपविष्टे गतवाहजश्रमे गोष्ठेषु रोमन्थपरे गवां गणे ।
दूर्वां तले दृष्टमिथःप्रियाजने लीलाभिपोष्ये मृगमण्डले स्थिते ॥५८॥
पतिप्रकर्षेक्षणहर्षनिश्चले प्रमोदमानेऽप्सु सरोजिनीवने ।
अमुष्य भानोः प्रबलप्रतापतो जगत्यपि स्वीकृतशान्तवर्तने ॥५९॥
उपेत्य चीर्णव्रतरुक्मिणीहितप्रवृत्तिसंदेशदिशा कयाचन ।
प्रियाग्रदास्येङ्गितमाप्य तत्क्षणं शुभक्षणः सञ्जगदे गदाग्रजः ॥६०॥

या रुक्मिणी भगवतः प्रथमा वधूस्ते
पुण्यव्रतस्य निजसंचरितस्य पूर्त्यै ।
याज्यान् सुरक्षितिसुरांश्च यियक्षतीयं
श्वः साकमेव भवता ननु रैवताद्रौ ॥६१॥

तामात्मनः प्रियतमां त्वदुपासनेष्टां
देवीमिमामनुगृहाण निजानुमत्या।
किञ्चिद्विधित्सितमहो त्वदनुग्रहस्य
यत् स्यात् परोक्षमनया न कदापि सत्या ॥६२॥

विहितवचसि तस्यामित्थमास्योपनृत्यत्-
स्मितकिरणविकीर्णां वाचमेकान्तकान्ताम्।
कथय कलयतात्सा कामनामद्यपूर्णां
सरति स जगदीशस्तामिति व्याजहार ॥६३॥

विद्वच्चन्द्रिरवृन्दवन्दितपदः साम्बेश्वरालम्बनं
कान्तारामबुधो यमभ्यजनयद् देव्या तु मर्य्यादया।
तेनोमापतिनामकेन कविनोन्नीतेऽत्र काव्ये नवे
क्षेत्राख्यो ननु पारिजातहरणे सर्गोऽभ्यगादादिमः ॥६४॥

इति श्रीमदुमापतिशर्मद्विवेदरचिते पारिजातहरणे महाकाव्ये क्षेत्रनामा प्रथमः सर्गः ॥

---

# विविधम्

## यजुषां शौक्ल्यकार्ष्ण्यविवेकः

श्रीयुधिष्ठिरो मीमांसकः, प्राच्यविद्याप्रतिष्ठानम्, दिल्ली ।

अस्ति वैदिकवाङ्मय ऋग्वेदानन्तरं यजुर्वेदस्य स्थानम् । महाभाष्यादिप्राचीनग्रन्थेषु यजुर्वेदस्यैकोत्तरशतं शाखाः श्रूयन्ते । तथा हि—"एकशतमध्वर्युशाखाः" इति । इमाश्चैकोत्तर-शतं शाखाः शुक्लकृष्णभेदाभ्यां द्विधा विभक्ताः । तत्र शुक्लयजुषः काण्वमाध्यन्दिनकात्यायनीया-दयः पञ्चदश शाखाः, कृष्णयजुषस्तु तैत्तिरीयमैत्रायणीकाठकादयः षडशीतिभेदाः । वाज-सनेययजुषां कृते शुक्लशब्दस्य सर्वतः प्राचीनः प्रयोगः शतपथब्राह्मणस्यान्त उपलभ्यते । कृष्णशब्दस्य तादृशः प्राचीनप्रयोगो नास्माभिः क्वचिदुपलब्धः । तत्र किंनिमित्ता खलु यजुषां शुक्लकृष्णसमाख्येत्यत्र विवेच्यते ।

तत्र तावत् शाखोत्पत्तिप्रकरणे विष्णुपुराण एवं श्रूयते—

यजुर्वेदतरोः शाखाः सप्तविंशन्महामुनिः ।
वैशम्पायननामासौ व्यासशिष्यश्चकार वै ॥
शिष्येभ्यः प्रददौ ताश्च जगृहुस्तेऽप्यनुक्रमात् ॥
याज्ञवल्क्यस्तु तस्याभूद् ब्रह्मरातसुतो द्विजः ।
शिष्यः परमधर्मज्ञो गुरुवृत्तिपरः सदा ॥
ऋषिर्योऽद्य महामेरोः समाजे नागमिष्यति ।
तस्य वै सप्तरात्रात्तु ब्रह्महत्या भविष्यति ॥
पूर्वमेवं मुनिगणैः समयो यः कृतो द्विज ।
वैशम्पायन एकस्तु तं व्यतिक्रान्तवांस्तदा ॥
स्वस्रीयं बालकं सोऽथ पदा स्पृष्टमघातयत् ।
शिष्यानाह च भोः शिष्या ब्रह्महत्यापहं व्रतम् ।
चरध्वं मत्कृते सर्वे न विचार्यमिदं तथा ॥

अथाह याज्ञवल्क्यस्तु किमेतैर्बहुभिर्द्विजैः ।
क्लेशितैरल्पतेजोभिश्चरिष्येऽहमिदं व्रतम् ॥
ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामुनिम् ।
मुच्यतां यत्त्वयाधीतं मत्तो विप्रावमानक ॥
निस्तेजसो वदस्येनान् यत्त्वं ब्राह्मणपुङ्गवान् ।
तेन शिष्येण नार्थोऽस्ति ममाज्ञाभङ्गकारिणा ॥
याज्ञवल्क्यस्ततः प्राह भक्त्यैतत्ते मयोदितम् ।
ममाप्यलं त्वयाधीतं यन्मया तदिदं द्विज ॥
इत्युक्त्वा रुधिराक्तानि सरूपाणि यजूंषि सः ।
छर्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः ॥
यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज ।
जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ते ततः ॥
ब्रह्महत्याव्रतं चीर्णं गुरुणा चोदितैस्तु तैः ।
चरकाध्वर्यवस्ते तु चरणान्मुनिसत्तम ॥
याज्ञवल्क्योऽपि मैत्रेय प्राणायामपरायणः ।
तुष्टाव प्रयतः सूर्यं यजूंष्यभिलषंस्ततः ॥
... ... ... ... ...
याज्ञवल्क्यस्तदा प्राह प्रणिपत्य दिवाकरम् ।
यजूंषि तानि मे देहि यानि सन्ति न मे गुरौ ॥
एवमुक्तो ददौ तस्मै यजूंषि भगवान् रविः ।
अयातयामसंज्ञानि यानि वेत्ति न तद्गुरुः ॥ इति ।
[विष्णु० ३।५।१-१५, २७-२८]

एवं भागवतादिष्वितरपुराणेष्वपि दृश्यते ।

इमां पौराणिकीं कथामनुसृत्य माध्यन्दिनसंहिताभाष्यकृन्महीधर आह—"तानि यजूंषि बुद्धिमालिन्यहेतुत्वात् कृष्णानि जातानि" इति । स्वामिविद्यारण्योऽपि—"बुद्धिमालिन्यहेतुत्वात् तद्यजुः कृष्णमीर्यते" इत्युक्तवान् । वान्तत्वाद् बुद्धिमालिन्यहेतुभूतास्तैत्तिरीयादिसंहिताः कृष्णाः, अयातयामत्वाद् अत एव बुद्धिमालिन्यदोषा भावान्माध्यन्दिन्यादिसंहिताः शुक्ला इत्युच्यन्ते । एतच्च पौराणिकं मतम् ।

## यजुषां शौक्ल्यकाष्ण्र्यविवेकः

अपरे विद्वांसोऽधीतस्य भुक्तान्नवद्वमनासंभवादुक्तकथाभिप्रायमित्थं मन्वते—यथा वमने भुक्तान्नानां मिथः साङ्कर्यं भवति तथैव तैत्तिरीयादिसंहितासु मन्त्रब्राह्मणयोर्मिथः साङ्कर्यदर्शनात् कृष्णत्वम्, माध्यन्दिन्यादिषु मन्त्रब्राह्मणयोः पृथक् पाठात् शुक्लत्वमिति। तथा चाह बृहदारण्यकभाष्यकारो द्विवेदगङ्गः—"शुक्लानि यजूंषि शुद्धानि, यद्वा ब्राह्मणेन मिश्रितमन्त्रकाणि कृष्णानि" इति।

अन्ये खल्वाहुः—यथान्धकारे घटपटादिपदार्थानां भेदग्रहो न भवत्येवं तैत्तिरीयादिषु संहितासु इष्ट्यग्निष्टोमादीनां मन्त्रब्राह्मणानामेकत्रैव पाठात् कर्मणां पार्थक्यं विस्पष्टं न गृह्यते, अतोऽन्धकारवत् तासु कृष्णत्वोपचारः। वाजसनेययजुःषु प्रतिकर्म मन्त्रा ब्राह्मणानि च विभज्य पृथक् पृथक् पठ्यन्ते, अत एव व्यवस्थितप्रकरणत्वात् तेषु प्रकाशवत् शुक्लत्वमुपचर्यते। तथा चाह तैत्तिरीयसंहिताध्यायी भट्टयज्ञेश्वर आर्यविद्यासुधाकरे—

"सोऽयं यजुर्वेदः शुक्ल इत्यभिधीयते, यतोऽत्र दर्शपौर्णमासप्रभृतिसर्वयज्ञेषूपयुक्तानां यजुर्मन्त्राणां ब्राह्मणासंकीर्णानां यथायोग्यक्रमेण विन्यासेन याज्ञिकानां व्यामोहाजननात्। प्राचीनयजुर्वेदस्य तु ब्राह्मणसंकीर्णत्वात् तत्तद्यज्ञीयमन्त्राणामनुक्रमेण पाठाभावाच्च ततो यज्ञकर्मानुष्ठानमार्गस्य दुर्ज्ञेयत्वात् कृष्णत्वम्" [ पृ० ४६ ] इति।

एवं प्रतिज्ञापरिशिष्टभाष्येऽनन्तदेवोऽप्युवाच—

बुद्धिमालिन्यहेतुत्वात् तद्यजुः कृष्णमीर्यते।
व्यवस्थितप्रकरणत्वात् तद्यजुः शुक्लमितीर्यते॥ इति।

चरणव्यूहटीकाकारो महिदासस्तु शुक्लकृष्णनाम्नोः कारणान्तरमाह—"वेदोपक्रमणे चतुर्दशीयुक्तपौर्णिमाग्रहणात् शुक्लयजुः, प्रतिपद्युक्तपौर्णिमाग्रहणात् कृष्णयजुरिति वा" [ पृ० ३६ ] इति।

अस्यायमभिप्रायः—या श्रावणी पौर्णमासी मध्याह्नात् प्रागेव समाप्यते तत्र वेदोपक्रमणे द्वौ पक्षौ। एके चतुर्दशीयुक्तायां पौर्णमास्यां चतुर्दश्याः प्रातरेवोपाकर्माचरन्ति, अपरे प्रतिपद्युक्तायां पौर्णमास्यां प्रातरुपाकर्म कुर्वते। तत्र ये खलु चतुर्दशीयुक्तपौर्णमास्यामुपाकर्मानुतिष्ठन्ते ते शुक्लपक्षीयाः, ये च प्रतिपद्युक्तायां पौर्णमास्यामुपाकर्मकारिणस्ते कृष्णपक्षीया उच्यन्ते। तद्योगात्तेषां यजूंष्यपि शुक्लकृष्णनामभ्यां व्यवह्रियन्ते।

वयं तु शुक्लकृष्णसमाख्यायामन्यदेव निदानमिति मन्यामहे। तथा हि—

मैत्रायणीसंहितायां श्रूयते—"दर्शो ह वा एतयोः पूर्वः पूर्णमास उत्तरः, अथ पूर्णमासं पूर्वमालभन्ते तदयथापूर्वं क्रियते, तत्पूर्णमासमालभमानः सरस्वत्यै चरुं निर्वपेत्" [१।४।१५] इति।

अस्यायमभिप्रायः—दर्शपौर्णमासेष्ट्योरारम्भको दर्शेष्टिं प्रथममारभेत, न पौर्णमासेष्टिम्। यतो हि मासेषु दर्श एव पूर्वो भवति पौर्णमासी चोत्तरा। तस्मात् पौर्णमासेष्टिं प्रथमं प्रयुञ्जानस्तत्प्रायश्चित्त्यै सारस्वतेष्टिं कुर्यादिति।

पूर्वमीमांसायां पिण्डपितृयज्ञस्य दर्शेष्ट्यनङ्गताधिकरणे [४।४।८] यदा पौर्णमास्यामन्याधानं तदा क्रमप्राप्तायाममावास्यायां दर्शेष्ट्याः प्रतिषेध उक्तः। तत्रायमभिसन्धिः—अग्न्याधाने द्वौ पक्षौ, अमावास्यायामग्नीनादधीत पौर्णमास्यां वा। यदा त्वमावास्यायामग्न्याधानं तदा क्रमप्राप्तायां पौर्णमास्यां प्रथमां पौर्णमासेष्टिं कुर्यात्, यदा च पौर्णमास्यामग्न्याधानं तदा क्रमप्राप्तायाममावास्यायां प्रथमां दर्शेष्टिं परिहायाऽऽगामिन्यां पौर्णमास्यामेव प्रथमां पौर्णमासेष्टिं कुर्यादिति। तथा चाथर्ववेदेऽपि पौर्णमासेष्ट्याः प्राथम्यं श्रूयते—"पौर्णमासी प्रथमा यज्ञिया" [७।८०।४] इति।

एवं दर्शपौर्णमासेष्ट्यारम्भे द्वौ पक्षौ—केचनामावस्यायामारभन्ते, अपरे पौर्णमास्याम्। शुक्लयजुःसंहितासु दर्शेष्टिमन्त्राणां प्राथम्येऽपि तद्ब्राह्मणे तान् परिहाय पौर्णमासेष्टिमन्त्रा एव प्रथमं व्याख्यायन्ते, ततो दर्शेष्टिमन्त्रा इति। अतो वाजसनेयिनः पौर्णमासेष्ट्याः प्राथम्यमुररीकुर्वन्तीति विस्पष्टम्। तदेवं दर्शेष्ट्याः प्राथम्यं स्वीकुर्वन्तः कृष्णपक्षीयाः, पौर्णमासेष्ट्याः प्राथम्यं प्रतिपादयन्तः शुक्लपक्षीया इति। तद्योगादेव तेषां यजूंष्यपि शुक्लकृष्णनामभ्यामुपचर्यन्त इति।

प्रसङ्गादिदमन्यद्विचार्यते—प्राचीना द्विवेदगङ्गप्रभृतयो विद्वांसः शुक्लयजुःसंहितासु ब्राह्मणसंमिश्रणस्याभावं स्वीकुर्वत इत्युक्तं पुरस्तात्। या चेदानीं शुक्लयजुषः सर्वानुक्रमण्युपलभ्यते, तस्यां बहुत्र ब्राह्मणस्य सत्त्वं प्रतिपाद्यते। तद्यथा—

१. देवायज्ञं [१६।१२-३१] ब्राह्मणानुवाको विंशतिरनुष्टुभः सोमसम्पत्।
२. अश्वस्तूपरो [अ० २४] ब्राह्मणाध्यायः, शादं दद्भिस्त्वचान्तश्च [२५।१-९]।
३. ब्राह्मणे ब्राह्मणं द्वे कण्डिके [३०।५-६] तपसे [३०।७-२२] अनुवाकश्च ब्राह्मणम्।

एतदनु सृत्य पण्डितरघुनन्दनेन वैदिकसम्पत्तौ शुक्लयजुःषु तत्र तत्र ब्राह्मणस्य प्रक्षेप उक्तः [ वै० सं० पृ० ५७१-५७२ ]।

इयं शुक्लयजुःसर्वानुक्रमणी न प्राचीना प्रामाणिकी, अपि त्ववीचीनाऽप्रामाणिकी च। अस्या अर्वाचीनत्वे ये हेतवस्तेऽस्माभिः "सारस्वती सुषमा"-पत्रिकायां प्रकाशितेऽस्मदीये 'छन्दःसंकलनम्'[1] इति शीर्षके निबन्धे विस्तरशो निरूपिताः।

एवं याजुषसर्वानुक्रमण्याः प्रामाण्याभावे उक्तयाजुषभागानां ब्राह्मणप्रतिपादनमपि न प्रामाण्यपदवीमारोहतीति व्यक्तम्। तथापीदं विचार्यते किं सर्वानुक्रमण्यां ब्राह्मणत्वेनोक्ताः संहिताभागा ब्राह्मणानि मन्त्रा वेति। तत्रेमे भागा मन्त्रा एव न ब्राह्मणानीत्यस्माकं मतम्। तत्र चैतत् प्रमाणम्—

अस्त्येको याजुषभागः—"वसन्ताय कपिञ्जलानालभते" [ २४।२० ] इति। अयं च तस्मिन्नेव प्रकरणे पठ्यते यस्य सर्वानुक्रमण्यां ब्राह्मणत्वमुच्यते। तत्र मीमांसाभाष्यकृच्छबर-स्वामी जैमिन्युक्तमन्त्रलक्षणेऽव्याप्तिदोषं प्रतिपादयन्नाह—

"प्रायिकमिदं लक्षणम्, अनभिधायका अपि केचिन्मन्त्रा इत्युच्यन्ते। यथा वसन्ताय कपिञ्जलानालभते" [ २।१।३१ ] इति।

एतेन शबरस्वामिनो मते—"वसन्ताय कपिञ्जलानालभते" इत्यस्य मन्त्रत्वं विस्पष्टम्। अर्वाचीना अपि मीमांसकाः शाबरमतमनुसरन्तः—"वसन्ताय कपिञ्जलानालभते" इत्यस्य मन्त्र-त्वमेव स्वीकुर्वते। यथा चायमनभिधायकोऽपि मन्त्रः, एवं तत्सहपठिताः—"ब्रह्मणे ब्राह्मणम्" इत्येवमादयोऽनभिधायकाः सर्वेऽपि मन्त्रा एवेत्यपि विस्पष्टमवगम्यते। एतेनापीयं याजुषसर्वानुक्रमणी न प्रामाणिकीति व्यक्तम्।

अपरं चैतत् प्रमाणम्—या खल्वियं वासिष्ठी शिक्षा तस्यां वर्तमानयाजुषसर्वानुक्रमण्यु-क्तानां सर्वेषामपि ब्राह्मणभागानां मन्त्रत्वमुच्यते। तथा हि—

१. "या व्याघ्रमिति आध्यायान्ताश्चतुरशीतिः, पि भ्य इत्युद्धृत्य......ऋचः" [ पृ० ४१ ] इति,

२. "चतुर्विंशतितमेऽध्याये अश्वस्तूपर इत्यारभ्य त्वचेत्यन्तं सर्वाणि यजूंषि" [ पृ० ४२ ] इति,

---

[1] द्रष्टव्या—सारस्वती सुषमा, व० ९, अं० १, पृ० ११-२२।

३. "त्रिंशत्तमेऽध्याये देवसवितरिति तिस्रः [ ऋचः ] पराणि सर्वाण्यध्यायान्तानि सप्तसप्तत्युत्तरशतं यजूंषि" [ पृ० ४३ ] इति च ।

अत्र त्रिष्वपि स्थानेषूपलब्धयाजुषसर्वानुक्रमण्यां ब्राह्मणत्वेनोक्तानां याजुषभागानामृग्यजुःशब्दाभ्यां निर्देशः क्रियते । ऋग्यजुषी च मन्त्राणामेव भेदौ न ब्राह्मणानाम् । तदुक्तं जैमिनिना—"तेषामृग् यत्रार्थवशेन पादव्यवस्था । गीतिषु सामाख्या । शेषे यजुःशब्दः" [ मी० २।१।३४-३६ ] इति । सर्वनाम्नां पूर्वपरामर्शित्वादत्र 'तेषाम्' इति पदेन पूर्वनिर्दिष्टमन्त्रपदस्यैव ग्रहणं भवति । तेन ऋग्यजुःशब्दौ मन्त्रवाचकावेव । एतेन शुक्लयजुःषु नास्ति ब्राह्मणस्य संमिश्रणमिति विस्पष्टम् ।

इत्थमस्मिन् निबन्धे यजुषां शुक्लकृष्णनाम्नोर्निदानं माध्यन्दिनसंहितायां च ब्राह्मणभागस्यासंमिश्रणमिति संक्षेपेण विवेचितमित्यलमतिविस्तरेण बुद्धिमद्वर्येषु ॥

# चयनिका

## विविधपत्रिकाभ्यः संचिता संस्कृतवाङ्मयसंबद्धा लेखसूची

व्रजवल्लभद्विवेदः, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी ।

**इण्डियन फिलासफी एण्ड कल्चर, व० १, अ० १, मार्च १९५६**

डा०के०डी०भारद्वाज—आचार्य रामानुजा'ज फिलासफी ( आचार्यरामानुजदर्शनम् ) ।

श्रीवसन्तकुमार चट्टोपाध्याय—दी वेदाज एण्ड दी उपनिषद्स ( वेदा उपनिषदश्च ) ।

डा०पी०एम०मोदी—कन्सेप्शन आफ यज्ञ ( यज्ञस्वरूपमीमांसा ) ।

प्रो०जी०एच०भट्ट—भागवत इन दी शुद्धाद्वैत वेदान्त ( शुद्धाद्वैतवेदान्ते भागवतस्य स्थानम् ) ।

**व० १, अ० २, जून १९५६**

श्रीवसन्तकुमार चट्टोपाध्याय—भक्ति इन दी उपनिषद्स ( उपनिषत्सु भक्तेर्निरूपणम् ) ।

डा०राधागोविन्द नाथ—चैतन्य महाप्रभु एण्ड सार्वभौम भट्टाचार्य ( चैतन्यमहाप्रभुः सार्वभौमभट्टाचार्यश्च ) ।

डा०आर०नागराज शर्मा—साल्वेशन इन वैष्णव थियोलॉजी ( वैष्णवसिद्धान्तेषु मोक्ष-स्वरूपविचारः ) ।

श्रीएम०वी०वी०के०रङ्गाचारी—श्रीरामानुज एण्ड वैष्णविज्म ( रामानुजाचार्यो वैष्णव-दर्शनं च ) ।

डा०एम०सी०राय—फिलासफ़ी एण्ड रिलीजन आफ दी भगवद्गीता ( भगवद्गीताया दर्शनं धर्मश्च ) ।

डा०सूर्यकान्त—बुद्ध : दी प्रोफेट आफ लव एण्ड रियलिज्म ( यथार्थवादशुद्धप्रेम्णोः शान्तिदूतो बुद्धः ) ।

**इण्डियन हिस्टोरिकल क्वार्टर्ली, व० ३२, अ० १, मार्च १९५६**

डा०आर०सी०हाजरा—ए न्यूली डिस्कवर्ड वर्क आफ भट्ट भवदेव आफ बङ्गाल ( वङ्गीयभवदेवकृतिनो नूतनतया गवेषिता काचन कृतिः ) ।

डा॰ सुरेशचन्द्र बनर्जी—सम फोर्गोटन स्मृति-राइटर्स आफ बङ्गाल ( केचन विस्मृता वङ्गीयाः स्मृतिकाराः )।

श्रीहेरम्ब चटर्जी—ए स्टडी आफ दी प्राजापत्य फॉर्म आफ मेरिज ( विवाहसंस्कारभेदेष्वन्यतमस्य प्राजापत्यस्याध्ययनम् )।

इण्डो-एशियन कल्चर, व० ४, अ० ३, जनवरी १९५६

डा॰ सुनीतिकुमार चटर्जी—दी कल्चर एण्ड लिटरेचर आफ एशिया : ए ब्रीफ जेनरल सर्वे ( एशियामहाद्वीपस्य संस्कृतिः साहित्यं च, संक्षिप्तः साधारणः परिचयः )।

डा॰ एस॰ के॰ डे—बिगिनिंग्स आफ इण्डियन सिविलाइजेशन ( भारतीयसभ्यतायाः प्रारम्भः )।

डा॰ बहादुरचन्द्र छावड़ा—एंश्येन्ट इण्डिया एण्ड साउथ-ईस्ट एशिया ( प्राचीनं भारतं दक्षिणपूर्वीय एशियामहाद्वीपश्च )।

श्रीपरेशचन्द्र दासगुप्त—सम एंश्येन्ट तेराकोट्टाज फ्रोम ताम्रलिप्त ( ताम्रलिप्तावधिगताः प्राचीनाः कतिपयमृण्मूर्तयः )।

डा॰ अणिमा सेनगुप्त—दी बेसिक प्रिंसिपुल्स आफ क्लासिकल सांख्य फिलासफी ( प्राचीनसांख्यदर्शनस्य मौलिकाः सिद्धान्ताः )।

प्रो॰ शिशिरकुमार मित्र—हर्ष, दी थर्ड बुद्धिस्ट एम्परर आफ नोर्थ इण्डिया ( हर्षः, उत्तरभारतस्य तृतीयो बौद्धसम्राट् )।

व० ४, अ० ४, अप्रैल १९५६

म॰ म॰ विधुशेखर भट्टाचार्य—दी सोल इन उपनिषदिक थोट ( औपनिषदसिद्धान्तेषु आत्मनः स्वरूपम् )।

डा॰ सुनीतिकुमार चटर्जी—दी कल्चर एण्ड लिटरेचर आफ एशिया : ए ब्रीफ जेनरल सर्वे ( एशियामहाद्वीपस्य संस्कृतिः साहित्यं च, संक्षिप्तः साधारणः परिचयः )।

भिक्षु संघरक्षित—दी प्लेस आफ फैथ इन बुद्धिज्म ( बौद्धमते श्रद्धाया महत्त्वम् )।

डा॰ मनोमोहन घोष—मीनिंग आफ दी वर्ड पालि : ए सजेशन ( पालिशब्दनिर्वचनम् : एकः परामर्शः )।

प्रो॰ हजीमे नाकामुरा—इण्डियन स्टडीज इन जापान ( जापानदेशे भारतीयवाङ्मयाध्ययनम् )।

डा०ए०एन०उपाध्ये—दी लिटरेचर एण्ड फिलासफी आफ दी जैनाज ( जैनसाहित्य दर्शनं च )।

**इपिग्राफिया इण्डिका, व० ३०, अ० १, जनवरी १९५३**

श्रीवी०वी०मिराशी—धूलेव प्लेट आफ महाराजा भेत्ति ( भेत्तिमहाराजस्य धूलेवस्थानादधिगतं ताम्रपत्रम् )।

श्रीडी०सी०सरकार—नोट ऑन दी धूलेव प्लेट आफ महाराजा भेत्ति ( भेत्तिमहाराजस्य धूवेलस्थानादधिगतस्य ताम्रपत्रस्याध्ययनम् )।

श्रीडी०सी०सरकार—भुवनेश्वर इंस्क्रिप्शन आफ अनंगभीम ( अनङ्गभीमस्य भुवनेश्वरशिलालेखः )।

श्रीडी०सी०सरकार—भुवनेश्वर इंस्क्रिप्शन्स आफ अनन्तवर्मन् छोदगङ्ग ( अनन्तवर्मछोदगङ्गस्य भुवनेश्वरशिलालेखाः )।

**व० ३०, अ० २, अप्रैल १९५३**

श्रीडी०सी०सरकार—नोट ऑन बड़गङ्गा इंस्क्रिप्शन आफ भूतिवर्मन् ( भूतिवर्मणो बड़गङ्गाशिलालेखस्य परिचयः )।

श्रीपी०बी०देसाई—कोत्तुरु इंस्क्रिप्शन आफ चालुक्य विजयादित्य ( चालुक्यविजयादित्यस्य कोत्तुरुशिलालेखः )।

श्रीपी०बी०देसाई—कोपर-प्लेट ग्राण्ट आफ कदम्ब त्रिभुवनमल्ल ( कदम्बत्रिभुवनमल्लस्य ताम्रपत्राङ्कितं दानपत्रम् )।

श्रीएन०पी०चक्रवर्ती एण्ड श्रीबहादुरचन्द्र छाबड़ा—राजप्रशस्ति इंस्क्रिप्शन आफ उदयपुर ( उदयपुरस्थो राजप्रशस्तिशिलालेखः )।

**ईस्ट एण्ड वेस्ट, व० ६, अ० ४, जनवरी १९५६**

श्रीरेनियरो ग्नोली—वृत्तिकार एण्ड कारिकाकार ( ध्वन्यालोकस्य वृत्तिकारः कारिकाकारश्च )।

श्रीएन्थोनी इलेंजिमीथम—साइकोलॉजी आफ सनातनधर्म (सनातनधर्मीयं मनोविज्ञानम्)।

श्रीमैरो बुसेजली—युनिवर्सल वेल्यु आफ इण्डियन एस्थेटिक्स ( भारतीयसौन्दर्यकलाया विश्वजनीनं वैशिष्ट्यम् )।

श्रीवाई०कृष्णन्—बुद्धिज्म एण्ड एथिक्स ( बौद्धमतमाचारशास्त्रं च )।

मेस्सिमो स्कालिगैरो—स्केच आफ ए साइकोलॉजी फाउण्डेड ऑन योग ( योगदर्शनादधिगम्यमानस्य मनोविज्ञानस्य स्वरूपम् )।

**व० ७, अ० १, अप्रैल १९५६**

श्रीजे०गोण्डा—दी सीमन्तोन्नयन एज डिस्क्राइब्ड इन दी गृह्यसूत्राज ( गृह्यसूत्रेषु वर्णितं सीमन्तोन्नयनसंस्कारस्वरूपम् )।

श्रीरेनियरो ग्नोली—दी नेचर आफ काकु एकोर्डिंग टू अभिनवगुप्त ( अभिनवगुप्तमतेन काकोः स्वरूपम् )।

श्रीतपोनाथ चक्रवर्ती—सम इन्फोर्मेशन्स अबाउट स्पोर्ट्स, इण्डोर गेम्स, एण्ड पास्टाइम्स इन दी एंश्येन्ट लिटरेचर एण्ड अर्ली इंस्क्रिप्शन्स आफ बङ्गाल एण्ड आसाम ( प्राचीने वाङ्मये, वङ्गाऽसमप्रान्तयोः प्राचीनेषु शिलालेखेषु च विविधक्रीडानां मनोविनोदानां च वर्णनम् )।

**एनल्स आफ दी भण्डारकर ओरियण्टल रिसर्च इंस्टीटयूट, व०३६, अ०१-२, सन् १९५५**

डा०सुरेशचन्द्र बनर्जी—कृषि-पराशर - ए वर्क ऑन एग्रीकल्चर ( कृषिपराशरः कृषिशास्त्रग्रन्थः )।

श्रीपी०टी०राजू—दी कन्सेप्शन ऑन सत् इन शङ्कर'स अद्वैत ( शङ्कराद्वैतमते सत्पदार्थनिरूपणम् )।

डा०आर०सी०हाजरा—दी साम्बपुराण, ए सौर वर्क आफ डिफ्रेण्ट हैण्ड्स ( सौरमतवादिसाम्बपुराणमनेकेषां विदुषां कृतिः )।

डा०पी०के०गोडे—हिस्ट्री आफ दी प्रेक्टिस आफ मीसेज इन एंश्येन्ट एण्ड मिडीवल इण्डिया–बिटवीन बी०सी०१००० एण्ड ए०डी०१९०० ( प्राचीने भारते मध्यकालीने भारते च १००० ई० पूर्वतः १९०० ई० पर्यन्तं संवाहनकलाया इतिहासः )।

श्रीआर०डी०करमरकर—दी ओरिजिनल नेम आफ इण्डिया ( भारतस्य प्राचीनतमं नामधेयम् )।

श्रीआर०डी०करमरकर—दी ऑथरशिप आफ दी पार्वतीपरिणय ( पार्वतीपरिणयस्य रचयिता )।

श्रीरामशङ्कर भट्टाचार्य—काइण्ड्स आफ एक्स्पोजीशन्स इन संस्कृत लिटरेचर ( संस्कृतवाङ्मये व्याख्याप्रकाराः )।

डा०आर०सी०हाजरा—दी इण्टरप्रिटेशन आफ ए वर्स आफ दी भगवद्गीता (भगवद्गीतायाः 'यावानर्थ उपदाने' इति श्लोकस्य भावार्थः)।

श्रीडी०वी०केतकर—डेट आफ कालिदास [ए० डी० २४०-३००] (कालिदासस्य समयः [२४०-३०० ई०])।

श्रीके०वी०अभ्यंकर—ए शोर्ट नोट ऑन परिभाषा वर्क्स इन संस्कृत ग्रामर (संस्कृतव्याकरणे परिभाषाग्रन्थानां संक्षिप्तः परिचयः)।

श्रीउपेन्द्रराय जे० सांडेसरा—सम पेरेलल्स बिटवीन दी महाभारत एण्ड दी उत्तराध्ययनसूत्र (महाभारते उत्तराध्ययनसूत्रे च समानवचनोपन्यासः)।

**व० ३६, अ० ३-४, सन् १९५५**

श्रीजे०फियोजा—संस्कृत एज लेंगवेज आफ कम्यूनिकेशन (संस्कृतस्य व्यावहारिकभाषात्वम्)।

डा०आर०सी०हाजरा—दी अश्वमेध, दी कॉमन सोर्स आफ ओरिजिन आफ दी पुराण पञ्चलक्षण एण्ड दी महाभारत (महाभारतस्य पुराणपञ्चलक्षणस्य चाश्वमेधमूलकत्वम्)।

डा०पी०के०गोडे—हिस्ट्री आफ दी स्पिट्टून इन इण्डिया–बिटवीन बी० सी० ३०० एण्ड ए० डी० १९०० (भारते पतद्ग्रहस्य (पीकदान) इतिहासः, ३०० ई० पूर्वतः १९०० ई० पर्यन्तम्)।

श्रीहीरालाल आर० कापड़िया—ए डिटेल्ड एक्स्पोजीशन आफ नागरी, गुजराती एण्ड मोदी स्क्रिप्ट्स (नागरी-गुजराती-मोदीलिपीनां विस्तृतं विवेचनम्)।

श्रीडी०डी०कौशाम्बी—ऑन दी डवलपमेण्ट आफ फ्युडलिज्म इन इण्डिया (भारतीयसामन्तवादपद्धतेर्विकासः)।

श्री०आर०डी०करमरकर—वाज शंकर दी आथर ऑफ दी कोमेन्ट्री ऑन गौडपादकारिकाज जेनरली एट्रिब्यूटेड टू हिम (किं शङ्कराचार्यो गौडपादकारिकाभाष्यस्य तदीयरचनात्वेन प्रसिद्धस्य प्रणेता?)।

श्रीआर०डी०करमरकर—म्युचुअल रिलेशन आफ दी योगवासिष्ठ, दी लंकावतारसूत्र एण्ड दी गौडपादकारिकाज (योगवासिष्ठ-लङ्कावतारसूत्र-गौडपादकारिकाणां पारस्परिकः संबन्धः)।

म०म०पी०बी०काणे—पसेजेज फ्रोम दी राजमार्तण्ड ऑन तिथीज, व्रताज, एण्ड उत्सवाज (राजमार्तण्डे तिथि-व्रत-उत्सवसंबद्धानि प्रकरणखण्डानि)।

श्रीमती कमला बाई देशपाण्डे—सम रिलीजियस ओब्जर्वेन्सेज एण्ड फीस्टिवल्स मेन्शण्ड इन देशीनाममाला ( देशीनाममालायां वर्णिताः केचन धार्मिका व्रताः, उत्सवाश्च )।

श्रीविमलचरण देव—दी फ्लोरा इन कालिदासा'ज लिटरेचर ( कालिदाससाहित्ये वानस्पत्यम् )।

श्रीविमलचरण देव—शाकद्वीप ( शाकद्वीपनिरूपणम् )।

श्रीआर० डी० करमरकर—ए रिप्लाई टू डा०हाजरा ( डा०हाजरामहोदयेन 'यावानर्थ' इति भगवद्गीतापद्ये उपस्थापितप्रश्नस्य समाधानम् )।

श्रीके०वी०अभ्यङ्कर—महाराष्ट्री प्राकृत ( महाराष्ट्रीप्राकृतविवेचनम् )।

**एंश्येन्ट इण्डिया, अ० १०-११, सन् १९५४-५५**

श्रीबी०बी०लाल—एक्सकेवेशन एट हस्तिनापुर एण्ड अदर एक्सप्लोरेशन्स इन दी अपर गङ्गा एण्ड सतलज बेसिन्स ( हस्तिनापुरीयमुत्खननकार्यम्, उपरितनगङ्गाद्रोणीषु शतद्रुद्रोणीषु च गवेषणाकार्यम् )।

श्रीसुन्दरलाल होरा—एंगलिङ्ग इन एंश्येन्ट इण्डिया ( प्राचीने भारते मत्स्यविनोदः )।

श्रीडी०एच०गार्डन—दी पॉटरी इण्डस्ट्रीज आफ दी इण्डो-ईरानियन बोर्डरः ए री-स्टेटमेण्ट एण्ड टेन्टेटिव क्रोनोलॉजी ( भारतपारसीकसीमावर्तिप्रदेशीयपात्रनिर्माणव्यवसायः, पुनर्व्याख्यानमानुमानिकस्तिथिक्रमश्च )।

**कार्टर्ली जर्नल आफ दी माइथिक सोसायटी, कल्चर एण्ड हेरिटेज नम्बर, अप्रैल १९५६**

श्रीके०एम०मुंशी—भारतीय कल्चर ( भारतीया संस्कृतिः )।

श्रीके०एम०पणिक्कर—बेसिस आफ इण्डियन कल्चर ( भारतीयसंस्कृतेराधारशिला )।

श्रीएम०रामकृष्ण भट्ट—दी योग आफ सिन्थेसिस इन दी भगवद्गीता ( भगवद्गीतायां समन्वयात्मको योगः )।

श्रीके०गुरुदत्त—दी मैसेज आफ दी गीता ( भगवद्गीतायाः सन्देशः )।

श्रीमस्ती वेङ्कटेश आयंगार—सेक्यूलरिज्म एण्ड दी गीता आर्ग्यूमेण्ट ( ऐहिकवादः, भगवद्गीतोक्ता वाचोयुक्तिश्च )।

श्रीएम०नीलकण्ठन्—टाइम्स आफ श्रीराम, लार्ड कृष्ण, एण्ड भारत बेटल ( श्रीराम-कृष्णयोर्महाभारतयुद्धस्य च कालनिर्णयः )।

श्रीए०एस०आर०चारी -दी मीनिंग आफ लाइफ एकोर्डिंग टू बुद्धिज्म ( बौद्धमतेन जीवनोद्देश्यम् ) ।

श्रीएस० श्रीकान्तय्या—डेट आफ श्रीशङ्कराचार्य ( श्रीशङ्कराचार्यस्य समयः ) ।

**जर्नल आफ ओरियण्टल रिसर्च मद्रास, व० २४, अ० १-४, अगस्त १९५५**

डा०जे०गोण्डा—टू नोट्स ऑन संस्कृत सिन्टेक्स ( संस्कृतवाक्यविन्यासमधिकृत्य द्वे टिप्पण्यौ ) ।

श्रीहेनरी देयदीर—इण्डियनिस्टिक रिसर्चेज इन लाओस ( लाओसदेशे भारतसंबन्ध्यनुसन्धानम् ) ।

डा० लूडो रोशेर—एंश्येन्ट हिन्दू क्रिमिनल लॉ ( प्राचीना हिन्दूदण्डव्यवस्था ) ।

श्रीएन०एय्यास्वामी शास्त्री—सेन्ट्रल थीम आफ दी थेरगाथा (थेरगाथाया मुख्यो विषयः) ।

श्रीअदरिस बनर्जी—ए सर्वे आफ एपिग्राफिकल मेटेरियल्स फाउण्ड एट सारनाथ ( सारनाथस्थाने संप्राप्ताया लेखसामग्रेर्विवेचनम् ) ।

श्रीडी०डी०कौशाम्बी—दी वर्किङ्ग क्लास इन दी अमरकोश ( अमरकोशे वर्णिताः श्रमजीविजातयः ) ।

श्रीके०एस०रामस्वामी शास्त्री—वाल्मीकी'ज व्यू ऑफ सोशल, इकोनोमिक एण्ड पोलिटिकल रूट्स आफ कल्चर एण्ड हेप्पिनेस ( संस्कृतेः सुखस्य च सामाजिकम्, आर्थिकम्, राजनीतिकं च मूलमधिकृत्य वाल्मीकिमतम् ) ।

श्रीआर०अनन्तकृष्ण शर्मा—गीतगोविन्दे पाठपरीक्षणम् ।

अर्थशास्त्रव्याख्या—जयमङ्गला ( ग्रन्थः ) ।

**जर्नल आफ दी अमेरिकन ओरियण्टल सोसाइटी, व० ७६, अ० १, मार्च १९५६**

श्रीपोल थियेमे—पाणिनि एण्ड दी पाणिनीयाज ( पाणिनिस्तदनुयायिनश्च ) ।

**व० ७६, अ० २, जून १९५६**

श्रीएल०के०श्वार्त्मशिल्ट—सम फॉर्म्स आफ दी एब्सोल्यूटिव इन मिडिल इण्डो-आर्यन ( प्राकृतभाषासु तुमुन्प्रत्ययान्तानि कानिचन प्रातिपदिकानि ) ।

श्रीलुडविक स्टेरनबाच—चाणक्या'ज एफोरिज्म्स इन दी हितोपदेश-१ ( हितोपदेशे उद्धृतानि चाणक्यवाक्यानि-१ ) ।

**जर्नल आफ दी ओरियण्टल इंस्टीटयूट, बड़ोदा, व० ५, अ० ३ मार्च १९५६**

डा० एस० एन० व्यास—सम रिलीजियस प्रेक्टिसेज आफ दी रामायण एज (रामायणकालीनानि कानिचन धार्मिकाणि कृत्यानि)।

डा० एस० एन० घोषाल—दी रामायण बाई डा० एच० याकोबी (डा० याकोबीकृतं रामायणाध्ययनम्)।

डा० लूडो रोशेर—चण्डेश्वरा'ज व्यवहाररत्नाकर (चण्डेश्वरस्य व्यवहाररत्नाकरः)।

डा० नीलमाधव सेन—अन-पाणिनियन प्रोनाउन्स एण्ड न्युमरल्स इन दी रामायण (रामायणेऽपाणिनीयानि सर्वनामानि वचनानि च)।

डा० एस० सी० बनर्जी—फ्लोरा एण्ड फोना आफ धर्मसूत्राज (धर्मसूत्रवर्णितं पशुवर्गवानस्पत्यविवेचनम्)।

डा० उमाकान्त पी० शाह—जैन मोंक कालकाचार्य इन सुवर्णभूमि (सुवर्णभूमौ जैनश्रमणः कालकाचार्यः)।

श्री उपेन्द्रराय जे० सांडेसरा—टर्म्स आफ एड्रेस टू मैन एण्ड वीमन इन दी अनुशासन पर्व आफ दी महाभारत (महाभारतेऽनुशासनपर्वणि पुरुषाणां स्त्रीणां च संबोधनपदानि)।

डा० ए० एन० जानी—एक्सटेण्ट आफ दी नैषधीयचरितम् (नैषधीयचरितस्य विस्तारः)।

**व० ५, अ० ४, जून १९५६**

डा० लूडो रोशेर—हलायुधनिबन्ध ऑन लीगल प्रोसीडयूर (हलायुधकृतो व्यवहारविवेकः)।

डा० एस० एन० व्यास—दी पर्दा सिस्टम इन दी रामायण (रामायणेऽवगुण्ठनप्रथा)।

डा० एस० सी० बनर्जी—फ्लोरा एण्ड फोना आफ धर्मसूत्राज (धर्मसूत्रवर्णितं पशुवर्गवानस्पत्यविवेचनम्)।

डा० वी० एम० कुलकर्णी—दी कन्सेप्शन आफ सन्धीज इन दी संस्कृत ड्रामा (संस्कृतनाटकेषु सन्धीनां महत्त्वम्)।

श्री एस० जी० कन्तवाला—दी कल्ट आफ मेन्स एज डिपेक्टेड इन दी मत्स्यपुराण (मत्स्यपुराणानुसारि पितृपूजास्वरूपम्)।

डा० आर० सी० हाजरा—डिस्कवरी आफ दी जेनुइन आग्नेय-पुराण (प्रामाणिकस्य अग्निपुराणसंस्करणस्य गवेषणा)।

डा॰इन्दुकला झवेरी—कन्सेप्ट आफ काल एण्ड आकाश इन दी सांख्य-योग सिस्टम ( सांख्ययोगदर्शनयोः कालाकाशयोर्निरूपणम् )।

डा॰एस॰एन॰घोषाल—दी रामायण बाई डा॰एच॰याकोबी ( डा॰ याकोबीकृतं रामायणाध्ययनम् )।

**जर्नल आफ दी तंजोर सरस्वती महल लाइब्रेरी, व॰ ११, अ॰ १, सन् १९५९**

पञ्चरत्नप्रकरणं श्रीशङ्कराचार्यप्रणीतम्, सुब्रह्मण्यवर्णिकृतप्रकाशाख्यव्याख्योल्लसितम्।

श्रीएन॰एस॰देवनाथाचारियर—पारिजातनाटकस्योपोद्घातः।

संगीतमकरन्दम् ( नाट्याध्यायः ) वेदसूरिविरचितम्, श्रीके॰वासुदेवशास्त्रिकृत-आङ्गलानुवादसहितम् )।

श्रीए॰वी॰गोपालाचारियर—वाल्मीकिरामायण आरण्यकाण्ड रसाज ( वाल्मीकिरामायणस्यारण्यकाण्डे वर्तमाना रसाः )।

**जर्नल आफ दी त्रिवेन्द्रम् युनिवर्सिटी ओरियण्टल मैन्युस्क्रिप्ट लाइब्रेरी, व॰ ६, अ॰ १, सन् १९५६**

अभिज्ञानशकुन्तलचर्चा।

होराभिप्रायनिर्णयः, विवृत्युपेतः।

गोपिकोन्मादः।

न्यायचन्द्रिका, केशवभट्टविरचिता।

शाकिनीसहकारचम्पूः, गोपालकविविरचिता।

शिवविलासकाव्यं दामोदरप्रणीतम्।

**जर्नल आफ दी बिहार रिसर्च सोसाइटी, व॰ ४१, अ॰ ४, दिसम्बर १९५५**

डा॰टी॰पी॰भट्टाचार्य—दी कल्ट आफ ब्रह्मा ( परमेष्ठिपूजासंप्रदायः )।

श्रीएस॰वी॰सोहानी—कालिदास ऑन लिपि एण्ड अध्ययन ( कालिदासकृतिषु लिपेरध्ययनस्य च चर्चा )।

श्रीएस॰वी॰सोहानी—दी मुद्रा आफ राक्षस इन विशाखदत्ता'ज मुद्राराक्षसम् ( विशाखदत्तरचिते मुद्राराक्षसे राक्षसस्य मुद्रा )।

प्रो॰अनन्तलाल ठाकुर—न्यायमञ्जरी आफ गुरु त्रिलोचन - ए फोर्गोटन वर्क ( वाचस्पतिमिश्रगुरु-त्रिलोचनविरचिता न्यायमञ्जरी, अधुना विस्मृतो ग्रन्थः )।

डा०वी०पी०सिन्हा—एलिफेन्ट्स इन एंश्येन्ट इण्डियन आर्मी ( प्राचीनभारतीयसैन्येषु हस्तिनामुपयोगः )।

डा०विश्वनाथप्रसाद वर्मा—थियोलोजी एण्ड एथिक्स इन कौटिलियन पोलिटिकल थोट ( कौटिल्यराजनीतिसिद्धान्तेष्वाध्यात्मिकताया नैतिकतायाश्च स्थानम् )।

**जैन-सिद्धान्त भास्कर, व० २२, अ० १; जैन एण्टिक्वेरी, व० २१, अ० १, जून १९५५**

श्रीअगरचन्द नाहटा—हस्तिमल्ल के पूर्ववर्ती जैन संस्कृत नाटककार।

प्रो०ज्योतिप्रसाद जैन—पूज्यपाद देवनन्दी।

**नागरीप्रचारिणी पत्रिका, व० ६०, अ० २, संवत् २०१२**

श्रीरामशङ्कर भट्टाचार्य—संस्कृतसाहित्य के कुछ पारिभाषिक शब्द।

श्रीवाचस्पति गैरोला—भारतीय पोथियों का प्रवास।

श्रीपण्ड्या बैजनाथजी—महाभारत-काल-निर्णय।

श्रीरमाशङ्कर तिवारी—उपनिषदों में तत्त्वचिन्ता का विकास।

**व० ६१, अ० १, संवत् २०१३**

श्रीपरिपूर्णानन्द वर्मा—भगवान् बुद्ध के परिवार का संहार।

श्रीललिताचरण गोस्वामी—उज्ज्वल प्रेमरस-संबन्धी राधावल्लभीय दृष्टिकोण।

**फिलासफिकल क्वार्टर्ली, व० २८, अ० ४, जनवरी १९५६**

श्रीडी०एम०दत्त—दी इण्टरप्रिटेशन आफ वैशेषिक केटेगरीज ( वैशेषिकपदार्थानामनुव्याख्यानम् )।

श्रीकालिदास भट्टाचार्य—दी बिजिनेस आफ फिलासफी ( दर्शनप्रयोजनम् )।

श्रीजी०आर०मलकानी—मीनिंग एण्ड ट्रुथ ( सत्यार्थयोर्विवेचनम् )।

श्रीके०वेङ्कटरमण—डिड दी बुद्ध डिनाई दी सेल्फ (किं बुद्धेनाऽऽत्मसत्ता निराकृता?)।

**व० २९, अ० १, अप्रैल १९५६**

कल्याणी मल्लिक—गॉडहैड इन सांख्य ( सांख्यदर्शने ईश्वरसत्ताविवेचनम् )।

श्रीरामकृष्ण राव—वेदान्त एण्ड दी मोडस आँपरेण्डी आफ परनोर्मल कोग्नीशन ( असाधारणविषयकज्ञानविधिर्वेदान्तदर्शनं च )।

श्रीजी०आर०मलकानी—मिस्टिसिज्म ( रहस्यवादः )।

श्रीएफ०जे०नोरोन्ह—ऑन दी मैथेमेटिकल एप्रोच टू फिलासफी ( गणितात्मकं दर्शनविवेचनम् ) ।

बुलेटिन आफ दी डेक्कन कॉलेज रिसर्च इंस्टीट्यूट, व० १६, अ० १-४, मार्च १९५५

श्रीएस०बी०देव—हिस्ट्री आफ जैन मोनासिज्म फ्रोम इंस्क्रिप्शन्स एण्ड लिटरेचर ( शिलालेखेभ्यो वाङ्मयाङ्गेभ्यश्चाधिगम्यमानं जैनमठवासस्येतिवृत्तम् ) ।

व० १७, अ० १, जून १९५५

श्रीवाई०बी०दामले—ए नोट ऑन हरिकथा ( हरिकथामुद्दिश्य संक्षिप्तमध्ययनम् ) ।

श्रीएच०जी०नरहरि—शंकर एण्ड व्यास ऑन दी थ्योरी आफ कर्म ( शङ्कराचार्यस्य व्यासस्य च मतेन कर्मसिद्धान्तः ) ।

श्रीएच०जी०नरहरि—आन दी टेक्स्ट आफ दी कृष्णकर्णामृत आफ बिल्वमंगल ( बिल्वमङ्गलरचितकृष्णकर्णामृतग्रन्थविषयकं किञ्चित् ) ।

व० १७, अ० २, सितम्बर १९५५

श्रीजे०ए०बी०वान ब्युतनन—आन अथर्ववेद १०।८।४३ (अथर्ववेदे १०।८।४३ पाठविमर्शः) ।

श्रीएच०जी०नरहरि—डोक्ट्रिन आफ कर्म इन पोपुलर जैनिज्म ( प्रचलितजैनमतेन कर्मस्वरूपम् ) ।

व० १७, अ० ३, दिसम्बर १९५५

श्रीएम०ए०मेहेण्डले—सम रिमार्क्स ऑन दी लेंगवेज आफ दी ओरिजिनल बुद्धिस्ट केनन ( प्राचीनबौद्धधर्मस्य भाषाया विवेचनम् ) ।

श्रीआर०जी०हर्से—दी वैदिक रेमिनिस्केन्सेज आफ ए चाल्डियन सन-हीम (चाल्डीयसूर्य-सूक्तस्य वैदिक मन्त्रैः सह साम्यम् ) ।

श्रीजे०ए०बी०वान ब्युतनन—नोट्स ऑन अक्षर ( अक्षरशब्दविषयकं किञ्चित् ) ।

श्रीवी०ए०रामस्वामी शास्त्री - स्टडीज इन ध्वन्यालोक ( ध्वन्यालोकानुशीलनम् )

ब्रह्मविद्या, व० २०, अ० १-२, मई १९५६

डा०लुडो रोशर—दी रिप्लाइ इन हिन्दू लीगल प्रोसेड्यूर : मित्रमिश्रा'ज क्रिटिसिज्म आफ दी व्यवहार-चिन्तामणि ( आर्याणां व्यवहारेषूत्तरस्य प्राधान्यम्, वीरमित्रोदयकृतं व्यवहारचिन्तामणिमतखण्डनम् ) ।

डा०वी०राघवन्—मोडर्न संस्कृत राइटिंग्स ( अर्वाचीनं संस्कृतवाङ्मयम् ) ।

डा०के० कुंञ्जुन्नी राजा—स्फोट : दी थ्योरी आफ लिंग्विस्टिक सिंबोल्स ( स्फोटवादः ) ।

श्रीके०वी०शर्मा—परमेश्वरविरचिता गोलदीपिका, स्वोपज्ञविवृतियुता ( ज्यौतिषग्रन्थः ) ।

भारती, व० ६, अ० ६, चैत्रः, संवत् २०१३

श्रीचारुदेवशास्त्री—कविः कालिदासः ।

व० ६, अ० ११, भाद्रपदः, संवत् २०१३

प्राध्यापकः साधुरामः—कालिदाससमये चित्रकला ।

भारतीय विद्या, व० १५, अ० ३, सन् १९५६

श्रीएन०जी०छापेकर—यदु एण्ड तुर्वश ( यदुस्तुर्वशश्च ) ।

डा०डी०सी०सरकार—सम ग्रेट वीमन आफ इण्डिया ( भारतस्य कतिपया महिमशालिन्यो महिलाः ) ।

डा०जे०सी०तवाड़िया—वरुण एण्ड दी वाटर्स : एज रिफ्लेक्टेड इन दी वेदाज एण्ड अवेस्ता ( वेदेषु अवेस्ताग्रन्थे च वरुणस्यापां च वर्णनम् ) ।

श्रीरामशङ्कर भट्टाचार्य—सम एनोमेलीज इन दी अष्टाध्यायी एण्ड देयर जस्टिफिकेशन ( अष्टाध्याय्यां विवादस्थानानि तेषां समाधानं च ) ।

मञ्जूषा, व० १०, अ० ५, जनवरी १९५६

श्रीक्षितीशचन्द्रचट्टोपाध्यायः—कतिपयशब्दः ।

व० १०, अ० ६, फरवरी १९५६

प० क्षमाराव—मिथ्याग्रहणम् ।

प० क्षमाराव—क्षणिकविभ्रमः ।

प० क्षमाराव—श्रीतुकारामचरितम् ।

व० १०, अ० ७, मार्च १९५६

सिद्धान्तकौमुदी, लीलावतीटीकासहिता—मीमांसकगिरिधरविरचिता( ग्रन्थः )

व० १०, अ० ८, अप्रैल १९५६

प० क्षमाराव—गणेशचतुर्थी ।

व० १०, अ० ९, मई १९५६

श्रीगजाननलक्ष्मणरेगे—मूलगीता द्वितीयाध्यायमध्यान्ता ।

श्रीकुमुदरञ्जनराय:—मेघदूते आत्मदूत्यम् ।

सिद्धान्तकौमुदी, लीलावतीटीकासहिता ( ग्रन्थ: ) ।

व० १०, अ० १०, जून १६५६

श्रीजगदीशचन्द्रमाथुर:—कपोतालय: ।

सिद्धान्तकौमुदी, लालावतीटीकासहिता ( ग्रन्थ: ) ।

**मधुरवाणी, व० २, अ० १, चैत्र:, संवत् २०१३**

प० वासुदेवशास्त्री वागेवाडीकर:—श्रीहर्ष: ।

व० २, अ० २, वैशाख:, संवत् २०१३

वी०कृष्णमाचारी—वाक्यपदीयम् ।

प० वासुदेवशास्त्री वागेवाडीकर:—रत्नावले: कर्ता श्रीहर्ष: ।

**राजस्थान भारती, व० ५, अ० १, जनवरी १६५६**

श्रीअगरचन्द नाहटा—वाचक विनयसमुद्र ।

डा०उमाकान्त प्रेमानन्द शाह—विमलमंत्री और उसके पूर्वज ।

श्रीसगतसिंह—बीकानेर संग्रहालय की एक झलक ।

डा०दशरथ शर्मा—दसेरक जनपद ।

**विश्वभारती कार्टर्ली, व० २१, अ० १, सन् १६५५**

श्रीवाल्तर लीबेन्थाल—ऑन वर्ल्ड-इन्टरप्रिटेशन्स-४ ( संसारस्वरूपमीमांसा ) ।

व० २१, अ० ४, सन् १६५६

श्रीसन्तोष सेन गुप्त—गोड एण्ड ईविल ( ईश्वरो दु:खं च ) ।

श्रीवाल्टर लीबेन्थाल—ऑन वर्ल्ड-इन्टरप्रिटेशन्स-५ ( संसारस्वरूपमीमांसा ) ।

**शोधपत्रिका, व० ७, अ० २–३, चैत्र, संवत् २०१३**

श्रीरामशङ्कर भट्टाचार्य—लिङ्गपुराण के कतिपय द्रष्टव्य स्थल ।

श्रीरामवल्लभ सोमाणी—लकुलीश मत ।

श्रीमनोहर शर्मा—राजस्थानी लोक-साहित्य में गोरखनाथ ।

डा०कन्हैयालाल सहल—उपनिषदों की सूक्तियाँ और कहावतें ।

**संमेलन-पत्रिका, व० ४२, अ० २, चैत्र, संवत् २०१३**

डा०बुद्धप्रकाश—कालिदास और हूण–२ ।

डा०फतहसिंह– मनु और मन्वन्तर–एक समाजशास्त्रीय दृष्टिकोण।

डा० शान्तिकुमार नानूराम व्यास—रामायणकालीन क्रीडा-विनोद।

श्रीसूर्यनारायण व्यास—दिव्य-द्रष्टा वराहमिहिर।

श्रीरामशङ्कर तिवारी—कुमारसंभव में सौन्दर्य की सृष्टि।

**व० ४२, अ० ३ आषाढ, संवत् २०१३**

महापंडित राहुल सांकृत्यायन—भारतीय मुद्रा।

डा०प्रसन्नकुमार आचार्य—पालि का लोक-साहित्य।

श्रीशालग्रामसिंह परमार—'पद्म' अस्त्र।

डा०बुद्धप्रकाश—कालिदास और हूण–३।

श्रीरामशङ्कर भट्टाचार्य—कर्ता के नाम के अनुसार कर्म का नाम।

श्रीसूर्यनारायण व्यास—नास्तिकाचार्य चार्वाक और कामशास्त्र का प्रणेता वात्स्यायन।

श्रीश्रीधर शास्त्री—स्फोटवाद।

**संस्कृतरत्नाकरः, व० १८, अ० १–२, चैत्रवैशाखौ, संवत् २०१३**

डा०रामगोपालः—संस्कृतनाट्यसमुद्भवः।

श्रीरामशङ्कर भट्टाचार्यः—यास्कापठितानां निर्वचनानां संकलनम्।

**व० १८, अ० ३–४, ज्येष्ठाषाढौ, संवत् २०१३**

श्रीरुद्रदेवत्रिपाठी—दूतकाव्यपरम्परा।

**व० १८, अ० ५, श्रावणः, संवत् २०१३**

श्रीकेदारनाथशर्मा सारस्वतः—महाकविः शम्भुः।

**व० १८, अ० ६, भाद्रपदः, संवत् २०१३**

श्रीकेदारनाथशर्मा सारस्वतः—महाकविर्गुणाढ्यः।

**समाज, व० १, अ० ४, जनवरी १९५६**

प्रो०सुशीलचन्द्र—भारत में जेल-प्रणाली की उत्पत्ति और विकास।

श्रीविश्वनाथ शर्मा—आचार्य नरेन्द्रदेव।

**व० २, अ० १, अप्रैल १९५६**

डा०मङ्गलदेव शास्त्री—हिन्दू समाज के संस्कार, पर्व और त्यौहार।

# सम्पादकीयम्

**द्वितीयदशकप्रवेशः**

पत्रिकेयं स्ववयसो व्यतीत्य दश हायनानि साम्प्रतं द्वितीयं दशकं प्रविशति। पूर्वं सरस्वतीभवनतः 'सरस्वती भवन स्टडीज'-नाम्नी पत्रिका प्रकाश्यते स्म, इतोऽपि पूर्वं च पण्डितापरनामकं 'काशीविद्यासुधानिधिः' इति पत्रं च। तयोः प्रकाशनस्यावरुद्धत्वादियं पत्रिका प्राधान्येन संस्कृतभाषामयी प्रकाशयितुमुपक्रान्ता १६४२ ई० वर्षे। तस्मिन्नेव वर्षेऽस्या महाविद्यालयसार्द्धशताब्दीपूर्तिस्मारको विशिष्टाङ्कः (प्रथमवर्षाङ्कः) प्रकाशितः। तमनु १६४३ ई० वर्षे द्वितीयवर्षाङ्कः, १६४५ ई० वर्षे च तृतीयवर्षाङ्कः प्राकाश्यत।

१६३८ ई० वर्षे पत्रिकामिमां त्रैमासिकीं विधातुं सहायकसंपादकस्य नियोजनं व्यधायि। ततश्च २००५ वैक्रमे वर्षे चतुर्थवर्षस्य प्रथमोऽङ्कः प्रकाशितः। २००६ वैक्रमे वर्षे चतुर्थवर्षस्य द्वितीयतृतीयाङ्कौ; चतुर्थोपाधिवितरणाङ्कश्च, यत्र चतुर्थवर्षचतुर्थाङ्कः पञ्चमवर्षप्रथमाङ्कश्च समाविष्टौ, प्राकाश्यमभजन्। २००७ वैक्रमे वर्षे पञ्चमवर्षस्य द्वितीयतृतीयचतुर्थाङ्काः प्रकाशिताः। ततः २००८ वैक्रमवर्षात्प्रभृति प्रतिवर्षमस्याश्चत्वारोऽङ्काः प्रकाश्यन्ते। ऐषमश्च ( २०१३ वि० ) एकादशे वर्षे पदं निदधातीयम्।

अस्याः पत्रिकायाः पञ्चमवर्षचतुर्थाङ्के 'सुषमाया भाविस्वरूपम्' इति शीर्षके सम्पादकीये—"पूर्वाचार्यसमुत्प्रेक्षितानां तत्त्वानां नवीनया दृष्ट्या प्रतिपादनम्, अनुसन्धानकर्मणि व्यापृतैरध्यापकैराविष्कृतानां तत्त्वानामिदम्प्रथमतया प्रकाशनम्, तत्तत्पाश्चात्यभाषासु प्रकाशितानां वैज्ञानिकानां तत्त्वानां तत्तद्भाषाभिज्ञैर्विद्वद्भिः संस्कृतभाषयानुवाद इति त्रिविधा लेखाः सुषमायामवश्यं प्रकाशमर्हन्ति" इति प्रतिपादितमासीत्। मात्राभेदेन प्रकाश्यन्ते त्रिविधा अपि लेखा अत्र। अथ च, सरस्वतीभवनस्थानां लघुग्रन्थानामपि प्रकाशनमुपक्रान्तमत्र। दशमवर्षसमाप्त्यवसरे तदवधि प्रकाशितानां समेषां निबन्धानां ग्रन्थानां च विषयानुक्रमणिका लेखकानुक्रमणिका च तदङ्कसमाप्तौ संयोजिता। स्वोद्देश्यसिद्धौ कियत्साफल्यमधिगतवत्येषेति तेन प्रतीयेत।

संस्कृतज्ञेष्वनुसन्धानप्रवृत्तेर्जागरणमस्याः प्रधानमुद्देश्यम्। तदर्थं सततमेषा प्रयतते। अस्याः पत्रिकाया विनिमये उपषष्टि अनुशीलनपत्रिका लभ्यन्ते। तासु प्रकाशितानां संस्कृत-वाङ्मयसंबन्धिनां लेखानां सूची प्रकाशयितुमुपक्रान्तात्र। सूचीमेनामवलोकयन्तु नाम संस्कृतज्ञा विद्वांसः। संस्कृतवाङ्मयस्य विभिन्नासु शाखासु, वेदेषु, दर्शनेषु, कलासु, धर्मशास्त्रेषु, राजनीत्यादिष्वेव न, अपि तु प्राचीने लिपिविज्ञाने, मुद्राशास्त्रे, शिलालेखेषु, चित्रस्थापत्यकलाप्रभृतिष्वपि च प्राधान्येन पुराणादीनां संस्कृतग्रन्थानां साहाय्येन विदेशीया देशीयाश्चाऽऽङ्गलभाषाविदो विद्वांसो गवेषणाकार्यं विदधति, तत्फलानि च तेषु निबध्नन्ति। निबन्धकानामेषां प्रायशः संस्कृतभाषायां प्रावीण्याभावाद् भवन्ति तेषु बहूनि स्खलितानि। तेषामपनोदनं परिनिष्ठितेषु पण्डितेषु गवेषणायां व्याप्तेष्वेव संभवति। तादृशस्खलितापनोदनमखगृहीतदीक्षा मनीषिणः सदर्थख्यापनाय बद्धपरिकरा भवन्तु नाम ॥

## संस्कृतविश्वविद्यालयाधिनियमः

चिरप्रतीक्षितं वाराणसेयसंस्कृतविश्वविद्यालयविधेयकमुत्तरप्रदेशीयविधानमण्डलेन पारितम्, महामान्येन राज्यपालेन स्वीकृत्याधिनियमपदवीमारोपितं च। तदनु भाविनः संस्कृत-विश्वविद्यालयस्य कार्यप्रणालीं निर्धारयितुं विशेषाधिकारिणो नियुक्तिरपि कृता प्रशासनेन। इत्थं संस्कृतविश्वविद्यालयप्रतिष्ठापूर्वार्द्धं संपन्नम्।

अस्मिन्नधिनियमे सन्ति पञ्चाशद् धाराः। तासु विश्वविद्यालयस्यास्य नामधेयम्, कार्यारम्भविधिः, अत्र समागतानां पारिभाषिकशब्दानामभिप्रायः, विश्वविद्यालयस्वरूपम्, विश्वविद्यालयस्याधिकारक्षेत्रम्, इतरसंस्थानामनेन संयोजनम्, पाठ्यक्रमव्यवस्था, विश्वविद्यालयनिरीक्षणव्यवस्था, संबद्धमहाविद्यालयनिरीक्षणम्, अस्य पदाधिकारिणः, कुलपति-प्रतिकुलपति-उपकुलपतीनां स्वरूपादिकम्, उपकुलपति-कोषाध्यक्ष-प्रस्तोतृ-ग्रन्थाध्यक्षाणां कर्तव्याधिकारयोर्निरूपणम्, विश्वविद्यालयप्राधिकारिणः, शिष्टपरिषत्-कार्यकारिणीसभा-विद्वत्परिषद्-अर्थसमितीनां स्वरूपादिकम्, पाठ्यक्रमसमितिनिर्धारणम्, छात्रकल्याणपरिषत्स्वरूपम्, परिनियम-अध्यादेश-विनियमानां निर्माणप्रकारः, विश्वविद्यालयपरीक्षासु प्रवेशार्हता, परीक्षाव्यवस्था, वार्षिकप्रतिवेदनाऽऽय-व्ययादिविवरणव्यवस्था, विश्वविद्यालयसंबद्धमहाविद्यालयास्तेष्वध्यापकानां नियुक्तिः, प्रथमोपकुलपतेर्विश्वविद्यालयकर्मचारिवृन्दस्य च प्रथमा नियुक्तिरित्यादीनां विषयाणां समासेन प्रतिपादनं विद्यते। संस्कृतवाङ्मयाध्ययनाध्यापनव्यवस्थामधिकृत्येदम्प्रथमतया प्रवर्ततेऽयं विश्वविद्यालयः

## सम्पादकीयम्

शिक्षणपरीक्षणोभयविधकार्यनिर्वर्तकः प्राचीनतमायां भारतस्य सांस्कृतिकराजधान्यां वाराणस्याम्। सर्वेषां विषयाणामत्र संस्कृतभाषयैवाध्यापनादिकं भविष्यति। राजकीयसंस्कृतमहाविद्यालयेन, सरस्वतीभवनेन, उत्तरप्रदेशीयसंस्कृतशिक्षापरिषदा च क्रियमाणं कार्यजातमयमेव संपादयिष्यति। उत्तरप्रदेशीयाः संस्कृतमहाविद्यालया बहिस्थाश्च राज्यप्रशासनलब्धानुज्ञा अनेन संयोक्ष्यन्ते। उत्तरप्रदेशस्य राज्यपालोऽस्य कुलपतिः, काशीनरेशः श्रीविभूतिनारायणसिंहमहोदय आजीवनं प्रतिकुलपतिश्च भविष्यति। संस्कृतभाषायामाधुनिकज्ञाने च निपुणोऽस्योपकुलपतिर्भविता। प्रथम उपकुलपतिः प्रशासनेन वर्षत्रयानधिककालिको नियोक्ष्यते। शिष्टपरिषत्-कार्यकारिणीसभाप्रभृतीनां विश्वविद्यालयाङ्गानां कार्यपद्धति स्वरूपादिकं च निर्धारयितुं परिनियमादयो विधीयन्ते संस्कृतविश्वविद्यालयविशेषाधिकारिणा। अस्य कार्यारम्भः १९५७-५८ खिष्टाब्दयोः शिक्षणवर्षे भविष्यतीति संभाव्यते।

प्रबुद्धे स्वतन्त्रे भारते सुमहानेष महः संमंस्यते संस्कृतसमाजस्याभ्युन्नतये संस्कृतविश्वविद्यालयस्योद्घाटनदिवसो नाम। तमिममुत्सवक्षणं समुपस्थापयिष्यते उत्तरप्रदेशप्रशासनायानेकान् धन्यवादान् वितरति सुरभारतीसमाजः, विद्यागुरुं विश्वेश्वरं प्रार्थयते च संस्कृतविश्वविद्यालयस्य साफल्याय॥

### हस्तलेखसुरक्षोपक्रमः

उत्तरप्रदेशीयप्रशासनेन १६-६-५६ इति दिनाङ्कितमर्द्धशासकीयं परिपत्रं सर्वेषां मण्डलाधीशानां सविधे प्रेषितम्। तस्यायमाशयः—केन्द्रीयं प्रशासनमुत्तरप्रदेशीयं प्रशासनं च भूर्जपत्रतालपत्रादिषु लिखितानां महार्घाणां हस्तलेखानां द्रुतगत्या संजायमानं प्रणाशमनुशोचति, संभावयति च तेषां सर्वथाऽभावम्। अतस्तेषां सुरक्षायै अचिरेणोपाया विधेयाः। एतदर्थमेकं केन्द्रीयं विद्यासंस्थानं स्थापितं स्याद्यत्र समेषामेषां संग्रहोऽध्ययनं च क्रियेतेति विचाराधीनं वर्तते शासनस्य। समयसाध्यमेतत्। इतः पूर्वं कुत्र कियन्तः कीदृशा हस्तलेखाः सन्तीति परिज्ञानं परमावश्यकम्। इमे हस्तलेखा मठेषु, मन्दिरेषु, पण्डितानां गृहेषु वा भवेयुः। हस्तलेखानामेषां सर्वप्रथमं सूचीनिर्माणं परमावश्यकमिति।

अस्माभिरष्टमवर्षस्य चतुर्थेऽङ्के 'हस्तलेखानामुपेक्षा' इति शीर्षके संपादकीये हस्तलेखानामुपेक्षाऽनुशोचिताऽऽसीत्। अधुना प्रशासनमत्रावदधातीति प्रमोदावसरोऽयमस्माकम्। तत्रोक्तमासीदस्माभिः—"हस्तलेखानां समुद्धारायाऽऽगामिन्यां पञ्चवार्षिकयोजनायां कापि व्यवस्थाऽवश्यमेव विधेयेति···" इति। कृता सा व्यवस्था प्रशासनेन। अधुना संस्कृतज्ञानामस्माकं कर्तव्य-

मपरमवशिष्यते। सर्वप्रथमं ग्रन्थस्वामिषु कृतपदयोरन्धविश्वासमिथ्यामोहयोरपनोदनं विधेयम्। एतच्च कार्यं साम्प्रतमपि भारतीयजनश्रद्धेयानां पण्डितानामेव। आसीद् ग्रन्थभस्मकारिणां तुरुष्काणां स कालः, यदा हस्तलेखानां सुरक्षायै ते ते उपायाः (भित्तिचयनादयः) अवलम्बिताः। नास्ति तेषां साम्प्रतं प्रयोजनम्। अधुना तु ग्रन्थालयसरित्स्वेव समुचितस्तेषां प्रवाहः, ग्रन्थपालगन्धापणिकपाणिष्वेव विक्रेयास्ते, ग्रन्थफलकभित्तिषु च चेतव्याः। समेषां संस्कृतानुरागिणां विशेषतोऽध्ययनाध्यापनव्यापृतानां महदिदं कर्तव्यं यत्ते यत्र क्वचन संस्कृतहस्तलेखान् जानीयुस्तत्सुरक्षायै प्रयतेरन्निति। अस्ति सरस्वतीभवनं नाम संस्कृतग्रन्थानां महान् पुस्तकालय इति ज्ञायत एव भवद्भिः। एषां हस्तलेखानां सूचीं निर्माय प्रेषयन्तु तां सरस्वतीभवनपुस्तकालयाध्यक्षसविधे, स्वकीयमण्डलाधीशानां सविधे च। यः कश्चिद् ग्रन्थस्वामी सुरक्षाव्यवस्थाऽसमर्थः स सरस्वतीभवनसदृशाय साधनसंपन्नाय पुस्तकालयाय ग्रन्थान् दद्यात्। उत्तरप्रदेशीयेन प्रशासनेन द्वितीयपञ्चवार्षिकयोजनायां सरस्वतीभवने हस्तलेखानां संग्रहाय प्रतिवर्षं दशसहस्ररूप्यकाणि निर्धारितानि। उत्कृष्टतमा ग्रन्था अनेन धनराशिना प्रतिवर्षं क्रेतव्या इति प्रचारणीय एष विषयोऽर्थकार्श्यग्रस्तानां ग्रन्थस्वामिनां पुरतः॥

**प० चिन्नस्वामिशास्त्रिणः**

वैदिकवाङ्मयानुशीलनपूतो म०म०प०चिन्नस्वामिशास्त्रिणां भौतिको देहो न पुनरप्यवलोकयितुं पार्यते, न वा सा नैकविधशास्त्राभ्यसनपटीयसी तेषां वाणी पुनरपि श्रोत्रकुहराणि नः पवित्रयिष्यतीति चिन्तयतः कस्य नाम सुरभारतीसमाराधकस्य मानसं प्रकामं न दूयेत। गतः स मनीषी त्रिदिवं श्रावणशुक्लषष्ठ्यां शनिवासरे (११-८-१९५६) कलिकातां नगरीमधिवसन् सप्तषष्टिवर्षे वयसि। अस्य महानुभावस्य जनिः १८९०तमे ई०वर्षे मद्रासप्रान्तीये मण्डकोलूरनामके स्थाने श्रीमतामप्पाशास्त्रिणां गृहे समपद्यत। पितुरधीतकृष्णयजुर्वेद एष महानुभावश्चेन्नपुर्यां श्रीकुप्पुस्वामिशास्त्रि-श्रीवेङ्कटसुब्बाशास्त्रिप्रभृतिभ्यो मीमांसाशास्त्रं सम्यगधिजगे। उत्तरभारते लुप्ताध्ययनप्रचारं मीमांसाशास्त्रं श्रौतकर्मकाण्डविज्ञानं च प्रचारयन्नेष महानुभावो वाराणस्यामभिनवकुमारिल इव संमानितः। अधुनापि वाराणस्यां प०सुब्रह्मण्यशास्त्री, कलिकातायां प०पट्टाभिरामशास्त्री च तच्छिष्यवर्यौ तत्प्रज्वालितं मीमांसादीपमध्यापनस्नेहापूरप्रदानेन संजीवयतः। नैके मीमांसाश्रौतकर्मकाण्डवेदादिविषयका ग्रन्था एभिर्महानुभावैः संपादिता रचिताश्च। उदारचरितस्य वेदगवीसेवानिरतस्यास्य महानुभावस्य निधनं संस्कृतसमाजस्य महतीं क्षतिमावहति॥

---

## समालोचनम्

**पर्यन्तपञ्चाशिका**—श्रीमदभिनवगुप्तप्रणीता, डा० वे० राघवमहोदयेन संपादिता।

पर्यन्तपञ्चाशिका हि महामाहेश्वरस्याभिनवगुप्तस्य लघ्वी कृतिः। कश्मीरोद्भूतस्य लोकोत्तरस्य शैवदर्शनस्य प्रकाण्डमर्मज्ञेनानेन तन्त्रालोकसदृशान्यनेकानि ग्रन्थरत्नानि प्रणीतानि, तेषु च शैवदर्शनस्य सिद्धान्ताः साकल्येन वैशद्येन च प्रतिपादिताः। उत्पलदेवप्रणीतेश्वरप्रत्यभिज्ञाया विमर्शिनीनामिकां टीकां विरच्य विदुषाऽनेन स्वीयमजरममरं च यशःसौरभं दार्शनिकजगति वितानितम्। विमर्शिनीयुत ईश्वरप्रत्यभिज्ञाभिधो ग्रन्थ एकल एव शैवदर्शनस्य निखिलं गाम्भीर्यं प्रतिपादयितुं क्षमः। त्रिकदर्शनरहस्यख्यापिका अन्या लघ्व्यो बृहत्यो वा कृतयस्तु तत्तद्ग्रन्थप्रणेतॄणां तद्विषयकात्मबोधप्रत्यायिका एव। अस्तु, अत्र लेशतः पर्यन्तपञ्चाशिकाप्रतिपाद्यं प्रस्तूयते—

पर्यन्ता चासौ पञ्चाशिकेति विग्रहनिष्पन्नपर्यन्तपञ्चाशिकायां वर्णसमूहरूपाया वाचः स्तुतिः। सा च वाक् परापश्यन्तीमध्यमावैखरीतिभेदेन चतुर्धा। तत्र च परा वागनपायिनीत्युक्त्या पराया वाचः—विमर्शः, चित्, चितिः, चैतन्यम्, स्वरसोदिता, स्वातन्त्र्यम्, परमात्मनो मुख्यमैश्वर्यम्, कर्तृत्वम्, स्फुरत्ता, सारः, हृदयम्, स्पन्दः, अनुत्तरतत्त्वम्, अनाश्रिततत्त्वमित्यादिशब्दैरागमेषूद्घोषः। अकारादिक्षकारान्तवर्णसमुदायमध्यगतानामनन्तशक्तीनां विश्रान्तिभूमेरनुच्चार्यायाः परशिवहृदयभूताया वाचः स्तुत्या "सूक्ष्मा समरसा वृत्तिः" इति महार्थमञ्जर्युक्तदिशा शिखण्डयण्डरसन्यायेनोक्तवाक्त्रयशबलीकृतस्वभावा प्रत्यग्दृशः परमेश्वरस्य भैरवस्योद्योगलक्षणा वृत्तिराख्यायते। अनुत्तररूपशक्त्यविनाभावेन स्थितो भैरवः सदसद्रूपां ज्ञानाज्ञानादिरूपां च स्वेच्छावकल्पितामाख्यां भजते। भुवनतत्त्वकलावर्णपदमन्त्राख्यः षोढाऽप्यध्वा क्रमेण वाच्यवाचकरूपाख्याद्वयं भजन्नपि शिवशक्त्यविनाभावरूपेणाभासितशिवतत्त्ववदेकधैव।

विश्वभरणक्षमस्य तस्य परमेशितुश्चिदानन्देच्छाज्ञानक्रिया इति पञ्चशक्तयः। चित्स्वभावोऽप्यसौ प्रभुः स्वयमेव विमर्शात्मना शिवादिभूम्यन्तषट्त्रिंशत्तत्त्वात्मिका भूमिकाः प्रतिपद्यते। षड्विधस्याध्वनः स्थूलसूक्ष्मपराभेदेन प्रत्येकं त्रैविध्यम्। देशकालभेदेन संविदां भेदात्मा

विचित्राभासताकारी शिवस्वरूप एव क्रमशब्देनाभिधीयते। बहिष्कृतार्थानां स्वाहन्ताया विश्रान्तिरेव शुद्धविद्या। "प्रावृतीशबले कर्म मायाकार्यं चतुर्विधम्" इत्युक्त्या चतुर्विधमलावृतात्मनां स्वात्मबहिर्मुखतैवाशुद्धविद्या। साधारणासाधारणभेदेन सृष्टिरपि द्विविधा स्वीकृता। साधारणसृष्टिर्घटपदादिरूपा, असाधारणसृष्टिः शाम्भवी। चिदानन्देच्छाज्ञानक्रियारूपोक्तपञ्चशक्तीनां कलाऽविद्येत्युभयकरणसंयोगेन भेदबुद्धेरुन्मेषः। चिदात्मैवान्योन्यानुप्राणितान्योन्यावियुक्तज्ञानक्रियेत्याख्यामावहन् विच्छेदबुद्ध्यवच्छिन्नो विच्छेदात्मकक्रियावच्छिन्नश्च कर्मेन्द्रियज्ञानेन्द्रियसंवलितः पशुरित्यभिधीयते। अविकल्परूपे चिदात्मन्यव्यग्रतयावस्थितः स्वेच्छावभासितजगद्वपुरसौ भगवान् भैरवः कञ्चुकपञ्चककञ्चुकितेन पशुव्यपदेशात्मकेनात्मना प्रमाणत्वाप्रमाणत्वेति विकल्पकोट्या स्वयमेव प्रमीयते च। सततवात्सल्यपरिप्लावनप्रोद्यतो हि भगवान् भैरवः पशुमनुजिघृक्षुर्वत्सेति मृदुसंबोधनेन संविदोऽद्वयत्वेन विदितस्यायुतसिद्धिवृत्त्या शक्तिसहकारेणावभासितस्यात एव तन्मयस्यास्य शिवात्मकस्य विश्वस्य स्वरूपं स्वतोऽभिन्नत्वेन स्वात्मनैवानुशीलनार्थं प्रतिबोधयति। ततः सर्वचिन्ताविनिर्मुक्तः शिवोऽहमिति मुहुर्मुहुरनुभावयन्तमविकल्पां शिवाऽद्वयभावनां साक्षात्कुर्वन्तं प्रस्फुरदनन्ताकारतामङ्गीकुर्वन्तमपि स्वाहन्तैकलक्षणां शक्त्यविनाभावेनाभासितशिवसंविदमाविश्य संस्थितं तं छिन्नसर्वसंशयत्वेन समास्थातुं समाश्वासयति, खेचर्यादिपारमेश्वरसंस्फुरणधाराभिर्वाहापरपर्यायाभिर्व्याप्तां शब्दार्थरूपां ततः परां चात्मचितिं महाह्रदरूपां कुण्डलिनीं ध्यायन्तं तमज्ञानरूपं मलं नाशयितुं प्रतिपादयति च।

एवमेव सर्गस्थापनसंहारनिग्रहानुग्रहेति पञ्चकृत्यानि कुर्वन्तमपि तं शिवोऽहमिति विश्वासस्य दृढानुवृत्तिमुपदिशति। अनन्तरं कलाशब्दस्य क्षेपज्ञानप्रसंख्यानगतिनादक्रमेणाकलनमुपदिश्य वह्निज्वालादृष्टान्तेन विश्वभङ्गीनां भैरवात्मकत्वं समर्थ्य च भेदाभेददिशा बन्धमोक्षौ व्यवस्थाप्याऽन्ते भैरवोऽस्मीति बुद्धेः पारमार्थिकत्वं व्यवस्थापयति। ततः शिवशक्त्योः संघट्टादन्यासामानन्देच्छेशानोन्मेषोनतेत्यादीनां शक्तीनां प्रादुर्भावं वर्णयति। आसां शक्तीनां तारतम्येन जगदुन्मेषम्, परापश्यन्त्यादिवाचां प्रादुर्भावम्, स्थानकरणव्यापारादिकं चोपवर्ण्यान्ते वाग्विभूत्यन्तर्गतानन्तवाच्यवाचकनिर्भरे मन्त्रमुद्राणां रहस्यस्वरूपेऽनुत्तरमहसि प्रपत्तिभावमेव जीवनसर्वस्वं स्फुटं निर्दिश्य निर्विकल्पकसमाधिप्राप्तपर्यन्तसंविदां शिवस्वरूपाणामागमरहस्योपदेष्टॄणां पूर्वगुरूणामुत्कर्षमनुस्मरन् ग्रन्थसमाप्तिं सूचयति।

यद्यपि मातृकारहस्यप्रतिपादकाः शारदातिलकादिरूपा बहवोऽन्ये विपुलकाया ग्रन्थाः सन्ति, तथापि संक्षेपेण मातृकारहस्योपोद्बलकनिखिलतत्त्वानामेकत्र सुष्ठु संचयनमस्य ग्रन्थस्य

वैशिष्ट्यम् । ग्रन्थरत्नस्यास्य संपादकाः श्रीडाक्टरवे०राघवमहोदया मद्रपुरीयविश्वविद्यालयस्य संस्कृतविभागाध्यक्षाः संस्कृतजीवातवो गवेषकमूर्धन्याः संस्कृतोद्धारप्रचारयोर्निहितसर्वस्वाः सन्ति । विदुषा संपादकेन भृशं परिश्रम्यात्रोद्धृतान् पारिभाषिकान् शब्दान् व्याख्यातुं तत्तद्ग्रन्थेभ्यः संवादिव्याख्यांशानुद्धृत्य स्वीयोपज्ञप्रज्ञयाऽऽङ्गलभाषामय्या टिप्पण्या उपोद्धातेन च विभूष्य ग्रन्थोऽयं सुसंपादित इति किमु वक्तव्यं तस्य विषये ॥

**श्रीरघुनाथपाण्डेयः**

---

**जर्नल आफ दी अन्नमलाई युनिवर्सिटी, अन्नमलाईनगर, चिदम्बरम् । व० १६, जुलाई १६५४, वार्षिकं मूल्यं सार्द्धसप्तरूप्यकम् ।**

अन्नमलाईविश्वविद्यालयपत्रिकैषा गवेषणाप्रधानान् निबन्धान्, अप्रकाशितान् महत्त्वाधायकान् ग्रन्थांश्च प्रकाशयति । अस्याः प्रस्तुतेऽस्मिन्नेकोनविंशतितमाब्दीयेऽङ्के पञ्चदश निबन्धाः सन्ति । तेषु त्रयस्तमिलभाषामयाः, अन्ये चाङ्गलभाषायामुपनिबद्धा वर्तन्ते । अन्ते च वेङ्कटनाथापराभिधवेदान्तदेशिकविरचितो न्यायपरिशुद्धिनामको ग्रन्थः काञ्चीपुरवास्तव्येन श्रीकृष्णताताचार्येण विरचितया सन्न्यायदीपिकाख्यया व्याख्यया सहितः १२१ १४२ पृष्ठात्मकः शोभतेतराम् । अस्य ग्रन्थस्य १-१२० पृष्ठानि पूर्वतनेष्वङ्केषु प्रकाशितानि, तत्रैव भावनाविवेकन्यायकुलिश-नीतिमालाप्रभृतयो ग्रन्था अपि प्रकाशिताः ।

वेदान्ताचार्य-वेदान्तदेशिकादिनामभिः प्रख्यातेन रामानुजवेदान्तवाचस्पतिना वेङ्कटनाथेन को नाम संस्कृतज्ञोऽपरिचितः ? तस्य महानुभावस्य न्यायपरिशुद्धिनामकेऽस्मिन् ग्रन्थे वेदान्तन्याययोः सिद्धान्ताः सम्यग् विवेचिताः सन्ति । अस्मिन्नङ्के प्रत्यक्षाध्यायान्तो ग्रन्थः समाप्ति गतः, अग्रिमेष्वङ्केषु संपूर्णो ग्रन्थः प्रकाशयिष्यत इत्याशास्यते । अस्य ग्रन्थस्य व्याख्यानत्रयमुपलभ्यते—१. तत्र भारद्वाजश्रीनिवासविरचितन्यायसाराख्या व्याख्या वाराणसीतः चौखम्बासंस्कृतग्रन्थमालायां प्रकाशिता, २. श्रीनिवासशठकोपयतिविरचिता निकषानाम्नी व्याख्या साम्प्रतममुद्रिता वर्तते, ३. सन्न्यायदीपिका चैषाऽत्र प्रकाश्यते । वेदान्तदेशिकाचार्यस्य गूढार्थमभिव्यञ्जयन्ती सुविस्तृतैषा व्याख्या रामानुजीयन्यायसिद्धान्ताधिजिगमिषूनतीवोपकुर्यात् ।

• पत्रिकायाः समालोच्यमानेऽस्मिन्नङ्के पूर्वोक्तग्रन्थपृष्ठसंख्या अपहाय २०० परिमितेषु पृष्ठेष्वाङ्गलभाषीया द्वादश निबन्धाः, ७६ परिमितेषु च पृष्ठेषु तमिलभाषीयास्त्रयो निबन्धाः परिदृश्यन्ते । तत्र तमिलनिबन्धानुद्दिश्य नैव किमपि वक्तुं पारयामः । आङ्गलभाषीयेषु निबन्धेषु

प्रथमाश्रयः संस्कृतवाङ्मयपरिशीलनानुरागिणां ज्ञानवर्द्धका मनोनुरञ्जकाश्च शतसंख्याकपृष्ठपरिमितं पत्रिकाया भागमापूरयन्ति। अवशिष्टे शतपृष्ठपरिमिते भागे नव निबन्धाः सन्ति, येष्वेकोऽरविन्ददर्शनं व्याकुरुते; अन्ये च सामाजिकान्, आर्थिकान् वैज्ञानिकांश्च विषयान् विवृण्वन्ति।

तत्र 'शैव सिद्धान्त' शीर्षकः प्रथमो निबन्धः १९५२ ई० वर्षे काशीहिन्दूविश्वविद्यालये, प्रयागविश्वविद्यालये च श्रीमता एस०सच्चिदानन्दपिल्लइमहानुभावेन प्रदत्तानां व्याख्यानानां संग्रहः। सुविस्तृतेऽस्मिन् निबन्धे शैवदर्शनस्य क्रमिकस्य विकासस्य, दक्षिणभारते प्रसिद्धानां शैवागमानां शैवदर्शनस्य च तमिलग्रन्थानां संस्कृतग्रन्थानां च साहाय्येन वैशद्येन परिचयो वर्तते। परमात्म जीव-जगद्रूपास्त्रिपदार्थाः शैवदर्शने पति-पशु-पाशनामभिरभिधीयन्ते। एषा त्रिपदार्थी शैवदर्शनजीवातुभूताऽत्र विस्तरेण विवेचिता, शक्ति-अवस्था-माया-दीक्षा-मार्ग-मल-कर्मप्रभृतयः पारिभाषिकाः शब्दाः सभेदप्रभेदा व्याख्याताः, सदाशिवतत्त्वस्य मुक्तेश्च स्वरूपमुपवर्णितम्।

"दी कन्सेप्ट आफ धर्म इन दी इतिहासाज एण्ड पुराणाज" शीर्षके श्रीएन०रघुनाथ-महोदयविरचिते द्वितीये निबन्धे लेखकेन प्रतिपादितं यद् महाभारते, विष्णुपुराणे, भागवते च न केवलं पौराणिककथा एवोपवर्णिताः, किन्त्वेतेषु धर्मस्यापि सुविशदं स्वरूपं निरूपितम्। अत्र लेखकमहोदयो रामायणाध्ययनं शाहजीति सुप्रथितनामधेयस्य तंजोरनृपतेर्मन्त्रिणा त्र्यम्बकराय-मखिना विरचितां 'धर्माकूतम्' इति नामिकां कृतिमनुसृत्य प्रस्तौति। स धर्मदृष्ट्या रामकृतं ताटका-बालि शम्बूकवधमालोचयति, अन्ते च भारतीयां नीतिशास्त्रदृष्टिं युक्तिभिर्विशदयति।

"ए क्रिटिक्यु आफ दी फिलासफीज आफ हिस्ट्री" इति शीर्षकात्मकस्य निबन्धस्य निबद्धा डा०के०सी०वरदाचारिमहोदयोऽत्र प्रतिपादयति यदितिहासो न केवलं नृपतीनां राज्यशासनादिकं मानवजातेर्युद्धादिकं वा वर्णयति, अपि तु दार्शनिकसिद्धान्तानपि तावद्विवेचयतीति।

सुप्रसिद्धं चिदम्बरतीर्थं निकषा १९२९ ई० वर्षेऽन्नमलाईविश्वविद्यालयस्य स्थापना समजनि। पत्रिकाया अस्या अन्ते प्रकाशितप्रकाशननामावलीतोऽल्पीयस्येव कालेऽस्माद्विश्वविद्यालयाद्विभिन्नेषु विषयेषु शताधिका ग्रन्थाः प्रकाशिता इति ज्ञायते, येषु संस्कृतग्रन्थानां संख्या द्वादश वर्तते। उत्तरप्रदेशीया विश्वविद्यालया बद्धपरिकरा भवन्तु नामैतस्यां प्रकाशनस्पर्द्धायाम्। वयमस्माद्विश्वविद्यालयात् प्रकाशिताया अस्याः पत्रिकायाः प्रचुरं प्रचारं श्रीवृद्धिं च कामयामहे। प्रसारयतु नामैषा पत्रिका तमिलसंस्कृतवाङ्मययोः समन्वयात्मकं स्वरूपमिति॥

ब्र० व० द्वि०

अतः प्रभृति बीजम्—

यस्मात्सकलं विश्वमनन्तं प्रजायते व्यक्तम्।
अव्यक्तादपि बीजाच्छिवं च गणितं च सदा नौमि ॥१॥
अव्यक्तसमीकरणं वर्णसमत्वं च मध्यमाहरणम्।
भावित्समत्वमस्मिन् बीजानि वदन्ति चत्वारि ॥२॥

तत्रादौ तावदव्यक्तसाम्ये करणसूत्रमार्यापञ्चकम्—

यावत्तावच्चिह्नितमेकं वा बहुमितं रूपरी[त्या] कल्प्या।
रूपाढ्या वा रूपोनितमथवा व्यक्तमानमिति ॥३॥
[1]माने तस्मिन्नु वदं शाला एकत्रत्समाहरेत्कर्म।
फलसिद्ध्यै तौ पक्षौ तुल्यौ कार्यौ प्रयत्नेन ॥४॥
एकैकस्मादव्यक्तं विशोधयेदन्यतस्तु रूपाणि।
शेषेणाव्यक्तेन च समुद्धरेद्रूपशेषमिह ॥५॥
अव्यक्तस्य च राशेर्मानं व्यक्तं प्रजायते नूनम्।
अज्ञातेषु बहुषु वा यावत्तावद्द्विकादिसङ्गुणितम् ॥६॥
भक्तं रूपैर्युक्तं विवर्जितं वा प्रकल्पयेदेवम्।
निजबुद्ध्या विज्ञेयं क्वचिदव्यक्तस्य च मानम् ॥७॥

यस्मिन्नेको वर्णो वर्तते तदव्यक्तसाम्यं बीजम्। यत्र बहवो वर्णा यावत्तावत्कालकादयो वर्तन्ते तदनेकवर्णसाम्यम्। यत्र च वर्णानां वर्गादिसमीकरणं क्रियते तन्मध्यमाहरणम्। यत्राव्यक्तवर्णानां भावितसमीकरणं तद्भावितसमत्वमिति बीजचतुष्टयमाद्याः प्राहुः।

तेषु प्रथमे यावदव्यक्तसाम्ये यत्रोदाहरणे योऽज्ञातो राशिस्तन्मानं यावदेकं द्व्यादि वा सरूपमरूपं वा रूपैरूनं युतं वा प्रकल्प्य तस्य राशेर्न्यासनानुसारेणोद्देशकालापवद्योगवियोगगुणनभजनत्रैराशिकपञ्चराशिकश्रेढीक्षेत्रखातादिक्रियया द्वौ पक्षौ समौ कार्यौ। यस्मिन्नालापे पक्षयोः समत्वं न विद्यते तदेकपक्षः केनचित्संगुणितो भक्तो युतो वर्जितो वा निजबुद्ध्या पक्षौ समौ कार्यौ। समपक्षयोरेकपक्षाव्यक्तमन्यपक्षाद्विशोध्य व्यक्तवर्गादिकमपीतरपक्षरूपाणीतरपक्षरूपेभ्योऽपि [वि]शोध्य तत्र यद्रूपशेषमव्यक्तशेषेण हरेत्, यल्लब्धं तदेकस्याव्यक्तस्य मानं व्यक्तं तेन कल्पितराशिरुत्थाप्य व्यक्तो राशिः क्रियते।

१. "माने तस्मिन्नुद्देशकालापवत् समाहरेत् कर्म" इति पाठः समीचीनः प्रतीयते।

# श्लोकार्धानुक्रमणिका

---

लघुग्रन्थरत्नप्रभावलिः—५

# बीजगणितावतंसः

## नारायणपण्डितविरचितः

सरस्वतीभवनानुसन्धानमन्दिरसदस्येन

श्रीचन्द्रभानुपाण्डेयज्यौतिषाचार्येण

टिप्पण्यादिभिरलङ्कृत्य सम्पादितः

सारस्वती सुषमा

भाद्रपूर्णिमा, संवत् २०१३

# विषयानुक्रमणी

# प्राक्कथनम्

बीजगणितावतंसनामकोऽयं ग्रन्थः काशिकराजकीयसंस्कृतमहाविद्यालयीयसरस्वतीभवन-पुस्तकालयस्य हस्तलिखितसिद्धान्तज्यौतिषविभागे १४५ तमां संख्यामभिधत्ते। वर्तते ह्याधारोऽस्याः पाण्डुलिपेस्तूलपत्रम्। ग्रन्थोऽयं खण्डितः। ग्रन्थस्यास्यैकपत्रमारभ्य त्रयोदश-पत्रं यावदेव समुपलब्धिः संजाता। अपूर्णत्वादस्य हस्तलेखस्य कः काल इति निश्चेतुं न पार्यते। तथापि ग्रन्थाक्षरावलोकनेन पञ्चाशदधिकशतवर्षात् पूर्वस्यैवैतदीया पाण्डुलिपिरिति प्रतिभाति। अस्य लिपिर्देवनागरी। ग्रन्थोऽयं प्रायः सर्वत्र शुद्धोऽपि यत्र तत्राक्षराणाम-भावेन पाठभ्रष्टतां कलयति, परस्परं संमिलितान्यल्पीयांसि चास्याक्षराणि जनयन्ति चाधिकं कष्टं पिपठिषूणाम्। ग्रन्थस्य प्रतिपृष्ठं द्वादशतः पञ्चदश पङ्क्तयो राजन्ते। प्रतिपङ्क्ति पञ्चचत्वा-रिंशतः पञ्चसप्ततिपरिमितान्यक्षराणि विलसन्ति। भास्करीयबीजगणितस्य शैलीवाऽस्यापि शैली प्राचीनतामावहति।

ग्रन्थस्यास्य रचयिता विद्वद्वरेण्यः श्रीनारायणपण्डितः (१३५० ई०)। अनेन विरचितो गणितकौमुदीनामको व्यक्तगणितमधिकृत्यापरोऽपि ग्रन्थो विद्यते।

अद्यावधि बीजगणितावतंसस्य प्रकाशनं कुत्रापि नाभूदतः स्थानीयाधिकारिणां प्रोत्साह-नेनाशीर्वचसा च कृतः प्रयासो मया प्रकाशयितुमेनं ग्रन्थम्। सततमन्वेषणानन्तरमपि नोपलब्धाऽ-परा कापि पाण्डुलिपिर्ग्रन्थस्यास्य संपादनाय। पुण्यपत्तनस्थभण्डारकरप्राच्यगवेषणासंस्थान-स्थितानां श्रीवी०डी०आप्टेमहोदयानां पत्रेणैकेन ज्ञातं यत्तेषां पार्श्वेऽपि ग्रन्थस्यास्य कश्चिदंशो वर्तत इति। परन्त्वनेकपत्राचारानन्तरमपि नोपलब्धः सोऽंशोऽस्माभिः। अतः सर्वतो नैराश्य-माकलय्य केवलं सरस्वतीभवनस्थपाण्डुलिपिमेवाधारीकृत्य ग्रन्थोऽयं सम्पादितः।

समुपलब्धेऽस्याल्पीयस्येव भागे भास्करीयबीजगणितान्नूतना विषयाः समुपलभ्यन्ते। यथा कुट्टकप्रकरणस्य व्यावहारिकोपयोगकरणम्, प्रकृतिरूपस्यावर्गाङ्कस्य रूपक्षेपीयकनिष्ठ-ज्येष्ठाभ्यासाभ्यामासन्नपदानयनम्, करणीप्रकरणस्य विस्तरेण विचार इत्यादि।

प्राप्तांशेऽस्मिन्नन्येषामाचार्याणां ग्रन्थानां वा समुल्लेखो न वर्तते, केवलं प्राक्तनपदेनो-द्धृतो वर्तत एष पद्यः—"अस्मिन् विकारः खहरे न राशावपि" इत्यादिः। तेनेदमवगम्यते यद्भास्कराचार्यतो गृहीतोऽयमंशो वर्तत इति।

यद्यपि वर्गप्रकृतिपर्यन्त एवैष ग्रन्थः समुपलब्धस्तथापि तदंशमात्रगतवैशिष्ट्यमवलोक्य प्रतीयते यदि ग्रन्थस्यैकवर्णसमीकरणानेकवर्णसमीकरणादिप्रकरणान्युपलब्धानि भवेयुस्तदाभिनवा अनेके विषया दृष्टिपथमवतरिताः स्युः। आधुनिकबीजगणितापेक्षयाप्यस्य वर्गप्रकृति-चक्रवाल-कुट्टकप्रभृतयो विषया विशेषोपयोगिनः सन्ति।

मूलग्रन्थप्रकाशनेन सहैव तदीया टिप्पणी प्रचलितबीजगणितपद्धतिमनुसृत्य सरसा, सरला, विस्तृता च विरचिता मया।

पुस्तकमदः प्रकाशयितुं पुस्तकालयोपाध्यक्षा विद्वद्वराः पण्डितविभूतिभूषणभट्टाचार्य-महोदया यादृशं साहाय्यं दत्तवन्तस्तदर्थं तेषां चिरकृतज्ञोऽस्मि। सहसम्पादकैः श्रीव्रज-वल्लभद्विवेदमहाभागैरनेकविधं कष्टमविगणय्य यादृशः सहयोगः प्रादायि तदर्थमप्यहमस्मि कृतज्ञ-स्तेषाम्। यद्यपि यथावदध्ययनादिकं विधायैव प्रकाशितोऽयं ग्रन्थस्तथापि मानवधर्मसुलभा त्रुटिः स्वाभाविकी। अतः प्रार्थ्यन्ते गुणैकपक्षपातिनो विद्वांसो यत् क्षन्तव्यास्ताः सूचनीयाश्चेति।

यद्यस्य ग्रन्थस्यावशिष्टभागोऽपि कुत्रचिदुपलब्धो भवेच्चेत्तदा सोऽप्यंशः विदुषां दृष्टि-पथमधिरोहत्विति भगवन्तमभ्यर्थये॥

सरस्वतीभवनम्, वाराणसी
भाद्रपूर्णिमा, सं० २०१३

विदुषां वशंवदः—
श्रीचन्द्रभानुपाण्डेयः

इदानीं ग्रन्थसमाप्तौ स्वस्थित्यादिकमाह—

गोलज्ञविद्वद्युतगोलनाम्नि ग्रामे गुणौघैः प्रथितो बभूव ।
यथार्थनामा शिवलब्धधामा श्रीकृष्णनामा गणकोष्णधामा ॥१॥

तस्मादभूतां तनयौ तदाद्यः श्रीमन्नृसिंहो बुधसेविताङ्घ्रिः ।
ज्योतिर्विदाचार्यपदं प्रयातः स्वधामसंतोषितसद्द्विजौघः ॥२॥

कविज्ञमार्गादुपरि स्फुरन् यः कविज्ञसंसेवितपार्श्वभागः ।
ज्योतिर्विदां सूर्य इवाग्रगण्यः श्रीमच्छिवाख्यस्तनयो द्वितीयः ॥३॥

श्रीमन्नृसिंहस्य यशोवरिष्ठाः श्रीसूर्यनिष्ठा गुणिनां वरिष्ठाः ।
श्रीमज्ज[illegible]कुलावतंसास्ते सूनवो भूमितले जयन्ति ॥४॥

ज्येष्ठस्तेषु दिवाकरो विजयते सत्संप्रदायाग्रणीः
सिद्धान्ताम्बुजबोधनैकमिहिरो दैवज्ञवाचस्पतिः ।
तर्केऽनल्पमतिः कवित्वकरणे साक्षात् पुराणो मुनि-
र्यस्यात्यन्तमराति[वर्गदन्ति]दलने शार्दूलविक्रीडितम् ॥५॥

श्रीमानसीमगुणमण्डितपण्डितार्यचूडामणिः सुगणितागमचक्रवर्ती ।
चण्डांशुचण्डधिषणः कमलाकरोऽन्यः क्ष्मायां जयत्यखिलपण्डितवन्द्यपादः ॥६॥

कुशाग्रबुद्धिर्गणितागमज्ञगणाग्रणीर्यो गुणिनां वरिष्ठः ।
[२०ख]दिवाकराराधनलब्धतेजाः श्रीगोपिनाथस्तनयस्तृतीयः ॥७॥

तस्यानुजः पण्डितरङ्गनाथः सिद्धान्तचूडामणिनामधेयम् ।
सौरानुसारं सुगमप्रकारं विनिर्ममे दैवविदां हिताय ॥८॥

[1]मासानां कृतिरब्धिहृद्युतिरसौ खाज्वै[ब्जै]र्विहीना तिथि-
बाणैर्हृद्द्विहृतोडुवासरमितिर्वाराङ्गभागात् पदम् ।
पक्षः सर्वयुतिः शको द्विखदिनैर्युक्ताऽत्र जानाति य-
स्तस्याऽव्यक्तविदो नितान्तमपरा दैवाकरी भारती ॥९॥

इति श्रीसकलगणकसार्वभौमश्रीमत्कृष्णदैवज्ञात्मजनृसिंहगणकसुत-
रङ्गनाथविरचितः सिद्धान्तचूडामणिः
समाप्तिमगमत् ॥

---

१. कूटश्लोकोऽयम् । अस्यालापानुसारेण म०म०श्रीसुधाकरद्विवेदिभिर्गणकतरङ्गिण्यां गणितं प्रदर्शितमस्ति । तद्यथा—

मासाः = १० । यु = २५ । ति = १५ । न = ३ । वा = ६ । प = १ । सर्वयुतिः = ६० । द्विखदिनैः १५०२ युक्ता १५६२ जातः शकः ।

श्रीबालकृष्णदीक्षितैः स्वरचिते भारतीयज्यौतिषशास्त्रेतिहासेऽस्यैवं गणितं प्रदर्शितम् । यथा—

मा = १० । यो = २५ । ति = १५ । न = ६ । वा = ६ । प = १ । तदनुसारं शके = १५६५ पौष (१०) शुक्ल (१) पूर्णिमायां (१५) आर्द्रानक्षत्रे (६) ब्रह्मयोगे (६) शुक्रवासरे (६) ग्रन्थोऽयं समाप्तिमगमदिति ध्वन्यते ।

अत्र प्रथममतेन १५६२ शके ग्रन्थारम्भः स्वीकृतः । अपरेण १५६५ शके ग्रन्थ-समाप्तेरनुमितिरङ्गीकृता । परं द्वयमपि मतमसङ्गतमिवाभाति । आचार्येणाहर्गण-साधने शकः १५६५ गृहीतः । तस्मादयं शकः समाप्तेः कालः कथं स्यात्, किन्त्वारम्भस्यैव कालो भवितुमर्हति । अतः श्रीसुधाकरद्विवेदिनां गणना वस्तुरीत्या न रोचते । श्लोकार्थरीत्याऽपि दीक्षितानां गणना युक्तियुक्तेति विवेचकैर्विचारणीयम् ।

श्रीमन्नृसिंहात्मजरङ्गनाथविनिर्मिते खेचरसाधनेऽस्मिन् ।
मीठादिलालेन कृता विवृत्तिः सिद्धान्तचूडामणौ पूर्तिमागात् ॥

---

# परिशिष्टम्—१

## [1]योगवासिष्ठे

[2]अपि पौरुषमादेयं शास्त्रं चेद्युक्तिबोधकम् ।
अन्यं त्वार्षमपि त्याज्यं भाव्यं न्यायैकसेविना ॥१॥
युक्तियुक्तमुपादेयं वचनं बालकादपि ।
[3]अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मजन्मना ॥२॥
योऽस्मत्तातस्य कूपोऽयमिति कौपं [पि]बेत् पयः[4] ।
त्यक्त्वा गाङ्गं पुरस्थं तं को नु शास्त्यतिरागिणम् ॥३॥

[ योग० २।१८।२-४ ]

वन्ध्यापुत्रेण पिष्टोऽद्रिः शशशृङ्गं प्रगायति ।
प्रसार्य भुजसंपातं शिला नृत्यति ताण्डवम् ॥१॥

१. इतः प्रभृति कतिचिच्छ्लोका हस्तलिखितपुस्तकस्य मुखपृष्ठेऽङ्किताः सन्ति। तत्राऽऽरम्भतः षट् श्लोका ग्रन्थालङ्करणभूताः, अन्त्यौ च सार्द्धद्वयश्लोकौ विभिन्न-सिद्धान्तग्रन्थोक्ताहर्गणसंबन्धद्योतकाववगन्तव्यौ ।

२. अनेन पद्येनाऽऽचार्यस्य सौरशास्त्रेऽन्धश्रद्धाया अभावोऽभिमतः, तथापि बहुधा तथैवाचरितं ग्रन्थकृता ।

३. 'अन्यत्' इति पाठान्तरम् ।

४. क्वचित् पुस्तके 'कौपं पिबत्यपः' इति पाठान्तरमस्ति, तन्नोपयुक्तम् ।

स्रवन्ति सिकतास्तैलं पठन्त्युपलपुत्रिकाः ।
गर्जन्ति चित्रजलदा इती(ति) चेदं वचः प्रभोः ॥२॥

[1]अपश्यत्काष्ठरन्ध्रस्थं वृषणाक्रमणं यथा ।
कीलोत्पाटी कपिदुःखमेतीदं हि तथा मनः ॥३॥

[2]वेदाङ्करामाङ्ककराभ्रवेदखवेदवेदेन्दुमहीध्रयुक्तः ।
सिद्धान्तचूडामणिवासरौघः स्यात्सूर्यसिद्धान्तजवासरौघः ॥१॥

७१४४०४०२९३९४

[3]वेदेषुवेदेषुमहीध्रचन्द्रतर्काग्नितर्काभ्रकराद्रिभिश्चेत् ।
सिद्धान्तचूडामणिघस्रसंघो युतः स सिद्धान्तशिरोमणेः स्यात् ॥२॥

७२०६३६१७५४५४

---

१. 'काष्ठरन्ध्रस्थवृषणाक्रमणाद्यथा' इति पाठान्तरं साधु । अन्यथाऽर्थापकर्षः ।

२. कल्यादौ सौराब्दाः = १९५५८८०००० 
सौरमासाः = २३४७०५६०००० 
अधिमासाः = + ७२११३८२८७४ 
चान्द्रमासाः = २४१९१९४२८७४ 
चान्द्रदिवसाः = ७२५७५८२८६२२० 
क्षयाहाः = − ११३५५९८६५९३ 
सूर्यसिद्धान्तीयकल्यादौ सावनाहर्गणः = ७१४४०२२९६६२७ 
कल्यादितो ग्रन्थारम्भं यावदहर्गणः = + १७३२७६७ 
ग्रन्थारम्भे सूर्यसिद्धान्तीयसावनाहर्गणः = ७१४४०४०२९३९४

३. अथ ग्रन्थारम्भे सिद्धान्तशिरोमणयुक्ताहर्गणानयनं प्रदर्श्यते—
कल्यादौ सौरदिनानि = १९७२९४४००० × १२ × ३० = ७१०२५९८४०००० 
अधिदिनानि = + २१८२९८०३३०० 
चान्द्रदिनानि = ७३२०८९६४३३०० 
अवमदिनानि = − ११४५५२००५८५

[1]सप्ताङ्गसप्तद्वितथाग्निसप्तचन्द्रान्वितश्चेत् कलितो गणः स्यात्।

१७३२७६७

[2]महीप भूप तावकं तनोतु भव्यमीश्वरी
महेशदेवसुन्दरी सदा [स]रोजलोचना।
नृपाधिराजसन्मते व्यधात् सुमामकामनं
परं नरेशनन्दन द्विज व्रजामि क्व प्रभो ॥१॥

---

कल्यादौ सावनाहर्गणः = ७२०६३४४४२७१५
कल्यादितो ग्रन्थारम्भं यावदहर्गणः = + १७३२७६७
ग्रन्थारम्भेऽहर्गणः = ७२०६३६१७५४८२

अयमहर्गणो ग्रन्थोक्ताहर्गणादन्तरित इति सुधियो विचारयन्तु।

१. नृपशकस्यान्ते कलेर्वत्सराः = ३१७९
ग्रन्थारम्भे शकाब्दाः = + १५६५
= ४७४४
= × १२
इष्टसौरमासाः = ५६९२८
इष्टाधिमासाः = + १७४९
इष्टचान्द्रमासाः = ५८६७७
× ३०
इष्टचान्द्रदिनानि = १७६०३१०
इष्टावमदिनानि = − २७५४३
कलितो ग्रन्थारम्भं यावदहर्गणः = १७३२७६७

२. अत्र पञ्चचामरवृत्तम्। तल्लक्षणं च—"प्रमाणिकापदद्वयं वदन्ति पञ्चचामरम्" इति। परमत्रच्छन्दोभङ्गः। अतः—"द्विजः क्व याम्यहं प्रभो" इति पाठान्तरं साधु। पद्येनानेनाऽऽचार्यस्य राज्याश्रयत्वं व्यज्यते।

# परिशिष्टम्—२

## अथ ग्रन्थारम्भकालिकाधिशेषावमशेषानयनम्

गोऽद्रीन्द्वद्रयब्धिनन्दाद्विशैलनन्देन्दुसंमिताः ॥५८॥
शालिवाहनशकेन युतास्ते स्वार्कवर्षवदनेऽत्र गताः स्युः ॥५८½॥

[ सिद्धान्ततत्त्वविवेके, मानाध्याये ]

इति शकादौ सौरवर्षाणि गतानि = १९७२९४७१७९
ग्रन्थारम्भकालिकशकवर्षाणि = + १५६५
कल्पारम्भतो गतवर्षाणि = १९७२९४८७४४
सृष्टिवर्षाणि = − १७०६४०००
सृष्ट्यारम्भतो गतवर्षाणि = १९५५८८४७४४
× १२
गतसौरमासाः = २३४७०६१६९२८
इष्टाधिमासाः = + ७२११३८४६२३
इष्टचान्द्रमासाः = २४१९२००१५५१
× ३०
इष्टचान्द्रदिनानि = ७२५७६००४६५३०
इष्टक्षयदिनानि = − ११३५६०१७१३६
ग्रन्थारम्भे सृष्टितः सावनाहर्गणः = ७१४४०४०२९३९४

**अथ गणितसौकर्य्यार्थं द्व्यादिगुणिता युगाधिमासादयो लिख्यते—**

| युगाधिमासाः | | युगसौरमासाः | |
|---|---|---|---|
| १५९३३३६ | १ | ५१८४०००० | १ |
| ३१८६६७२ | २ | १०३६८०००० | २ |
| ४७८०००८ | ३ | १५५५२०००० | ३ |
| ६३७३३४४ | ४ | २०७३६०००० | ४ |
| ७९६६६८० | ५ | २५९२००००० | ५ |
| ९५६००१६ | ६ | ३११०४०००० | ६ |
| १११५३३५२ | ७ | ३६२८८०००० | ७ |
| १२७४६६८८ | ८ | ४१४७२०००० | ८ |
| १४३४००२४ | ९ | ४६६५६०००० | ९ |

| युगत्र्याणि | | युगचान्द्रदिवसाः | |
|---|---|---|---|
| २५०८२२५२ | १ | १६०३००००८० | १ |
| ५०१६४५०४ | २ | ३२०६०००१६० | २ |
| ७५२४६७५६ | ३ | ४८०९०००२४० | ३ |
| १००३२९००८ | ४ | ६४१२०००३२० | ४ |
| १२५४११२६० | ५ | ८०१५०००४०० | ५ |
| १५०४९३५१२ | ६ | ९६१८०००४८० | ६ |
| १७५५७५७६४ | ७ | ११२२१०००५६० | ७ |
| २००६५८०१६ | ८ | १२८२४०००६४० | ८ |
| २२५७४०२६८ | ९ | १४४२७०००७२० | ९ |

कल्पसौरमासाः = २३४७०६१६९२८

युगाधिमासाः = × १५९३३३६

१४०८२३७०१५६८
७०४११८५०७८४ ×
७०४११८५०७८४ ×
७०४११८५०७८४ ×
२११२३५५५२३५२ ×
११७३५३०८४६४० ×
२३४७०६१६९२८ ×

युगसौरमासाः ५१८४००००) ३७३९६५७८८९३५९१८०८ (७२१३८४६२३ = इष्टाधिमासाः

३६२८८००००
११०८५७८८९
१०३६८००००
७१७७८८९३
५१८४००००
१९९३८८९३५
१५५५२००००
४३८६८९३५९
४१४७२००००

२३९६९३५९१
२०७३६००००
३२३३३५९१८
३११०४००००
१२२९५९१८०
१०३६८००००
१९२७९१८०८
१५५५२००००
अधिशेषम् = ३७२७१८०८

३७२७१८०८ = अधिशेषम् ।
× ३०
५१८४०००० | १११८१५४२४० | २१
१०३६८००००
८१३५४२४०
५१८४००००
२९५१४२४०
× ६०
१७७०८५४४०० | ३४
१५५५२०००००
२१५६५४४००
२०७३६००००
८२९४४००
× ६०
४९७६६४००० | ९
४६६५६००००
३११०४०००
× ६०
१८६६२४०००० | ३६
१५५५२०००००
३११०४००००
३११०४००००

अधिशेषदिनादि = २१।३४।९।३६

अथ क्षयदिनानयनम्—

७२९७६००४६५३० = इष्टचान्द्रदिवसाः
×२५०८२२५२ = युगक्षयदिवसाः

१४५१५२००९३०६०
३६२८८००२३२६५०×
१४५१५२००९३०६०×
१४५१५२००९३०६०×
५८०६०८०३७२२४०×
३६२८८००२३२६५०××
१४५१५२००९३०६०×

१६०३००००८० = युगचान्द्रदिवसाः | १८२०३६९९६३७८५९७१८५५६० | ११३५९०१७१३६ = इष्टक्षयदिवसाः

१६०३००००८०
२१७३६९५५७८
१६०३००००८०
५७०६९५४९८५
४८०९०००२४०
८९७९५४७४५९
८०१५०००४००
९६४५४७०५९७
९६१८०००४८०
२७४७०११७१८
१६०३००००८०
११४४०११६३८५
११२२१०००५६०
२१९११५८२५५
१६०३००००८०
५८८१५८१७५६
४८०९०००२४०
१०७२५८१५१६०
९६१८०००४८०

११०७८१४६८०
×६०
६६४६८८८०८०० | ४१
६४१२०००३२०
२३४८८७७६००
.१६०३००००८०
७४५८७७५२०
×६०
४४७५२६५१२०० | २७
३२०६०००१६०
१२६९२६४९६००
११२२१०००५६०
१४७१६४९०४०
×६०
८८२९८९४२४०० | ५५
८०१५०००४००
८१४८९३८४००
८०१५०००४००
१३३९३८०००
×६०
८०३६२८०००० | ५
८०१५०००४००
२१२७९६००

क्षयशेषघट्यादिः = ४१।२७।५५।५

# अथ मध्यमाधिकारः

अहर्गणोपपत्तिः। ग्रन्थारम्भवर्षतो गताब्दा द्वादशगुणा गतसौरवर्षान्ते सौरमासा भवन्ति। तेषु चैत्रादिगतचान्द्रतुल्यसौरमासा योज्यास्तदा गतसौरमासा भवन्ति। इष्टसौरमासेष्विष्टाधिमासयोजनेन इष्टचान्द्रमासा भवन्ति। अत इष्टाधिमासाः साध्यन्ते।

सौरमते युगसौरमासाः = ५१८४०००० । युगाधिमासाः = १५९३३३६ ।

अनुपातेनैकस्मिन् सौरमासेऽधिमासाः $= \frac{१५९३३३६}{५१८४००००} = \frac{६६३८९}{२१६००००} = \frac{६६३८९ \times ६५}{६५ \times २१६००००}$

$$= \frac{६६३८९ \times १३}{६५ \times ४३२०००} = \frac{८६३०५७}{६५ \times ४३२०००} = \frac{\frac{८६३०५७}{४३२०००}}{६५} = \frac{२ - \frac{९४३}{४३२०००}}{६५}$$

$$= \frac{२ - \frac{९४३ \times २}{४३२००० \times २}}{६५} = \frac{२ - \frac{२}{\frac{४३२००० \times २}{९४३}}}{६५} = \frac{२ - \frac{२}{९१६}}{६५}$$ । एत इष्टसौरमासगुणिता

जाता इष्टाधिमासाः $= \frac{\text{इसौमा}\left(२ - \frac{२}{९१६}\right)}{६५}$ । अतोऽधिमासानयनमुपपन्नम् ।

इ सौरमासाः + इ अधिमासाः = इ चान्द्रमासाः ।

इ चान्द्रमासाः × ३० + गततिथयः = इष्टचान्द्रदिवसाः ।

इष्टचान्द्रदिवसेष्विष्टक्षयदिनवियोजनेनाभीष्टसावनाहर्गणो भवति । अत इष्टक्षयदिवसाः साध्यन्ते ।

सौरमते युगचान्द्रदिवसाः = १६०३००००८० । युगक्षयदिवसाः = २५०८२२५२

अत्रानुपातेनैकस्मिन् चान्द्रदिवसे क्षयदिवसमानम् $= \frac{२५०८२२५२}{१६०३००००८०} =$

$$\frac{२५०८२२५२ \times ६४}{१६०३००००८० \times ६४} = \frac{२५०८२२५२ \times ४}{१००१८७५०५ \times ६४} = \frac{१००३२९००८}{१००१८७५०५ \times ६४}$$

$$= \frac{१ + \frac{१४१५०३}{१००१८७५०५}}{६४} = \frac{१ + \frac{१}{\frac{१००१८७५०५}{१४१५०३}}}{६४} = \frac{१ + \frac{१}{७०८}}{६४}$$

अतोऽनुपातेनेष्टचान्द्रदिनसंबन्धिक्षयदिनानि =

$$\text{इचां}\left(\frac{१ + \frac{१}{७०८}}{६४}\right) = \frac{\text{इचां} + \frac{\text{इचां}}{७०८}}{६४}$$ इति ग्रन्थोक्तमवमानयनमुपपन्नम् ।

इचांदि − इक्षयदि = अहर्गणः । ग्रन्थारम्भदिने शुक्रवार आसीत् । अतो वारगणना शुक्रवारतो विधेया । अहर्गणे सैकनिरेककरणवासना—"अभीष्टवारार्थमहर्गणश्चेत्सैको निरेकः सुधिया विधेयः" इति सिद्धान्तशिरोमणिरीत्यावगम्या । अधिशेषावमशेषत्यागकारणमपि तत्रैव स्पष्टम् । अत आचार्योक्तं सर्वमुपपन्नम् ।

अत्राहर्गणानयने ग्रन्थारम्भकालिकाधिशेषावमशेषे त्यक्ते। तत्तद्धरापयुक्ते ते साध्येते। यदि युगसौरमासैरिदं पूर्वागतमधिशेषं तदा ६५ हरेण किमिति लब्धं यत् तत् प्रदर्श्यते—

अधिशेषम् = ३७२७१८०८
×६५
१८६३५९०४०
२२३६३०८४८×
५१८४०००० | २४२२६६७५२० | ४६
२०७३६००००
३४९०६७५२०
३११०४००००
३८०२७५२०

$\frac{३८०२७५२०}{५१८४००००} = \frac{३३०१}{४५००} = \frac{११}{१५}$ | $४६ + \frac{११}{१५}$ एतन्मितं द्विगुणेष्टसौरमासेषु योजनार्हं लब्धं क्षेपमानं तदाचार्येण त्यक्तम्। एवं संचारेण ६४ हरसंबन्धिक्षयशेषमानं साध्यते।

क्षयशेषम् = ११०७८१४६८०
×६४
४४३१२५८७२०
६६४६८८८०८०×
१६०३०००००८० | ७०९००१३९५२० | ४४
६४१२०००३२०
६७८०१३६३२०
६४१२०००३२०
३६८१३६०००

$\frac{३६८१३६०००}{१६०३०००००८०} = \frac{४६०१७००}{२००३७५०१} = \frac{१}{४}$ स्वल्पान्तरतः।

$४४\frac{१}{४}$ एतन्मितमिष्टचान्द्रगणे योजनार्हं लब्धं क्षेपमानम्। एतदपि आचार्येण त्यक्तमिति सुधियो विभावयन्तु।

## अथ क्षेपसाधनम्—

क्षेपसाधने येऽनुपातागतग्रहास्ते बीजसंस्कृताः सन्तो ग्रन्थोक्तक्षेपसमा भवन्ति। स च बीजसंस्कारो मकरन्दोपदिष्ट एवात्र स्वीकृतः। अतः प्रथमं बीजानयनं क्रियते। मकरन्दाचार्यैर्बुधशुक्रशीघ्रोच्चगुरुशनिषु बीजसंस्कारः कृतः। तथा चास्य प्रारम्भः कलियुगारम्भतः स्वीकृतः।

अथ बीजानयनं मकरन्दे यथा—

शकोऽङ्कसप्तेन्दुगुणैः समेतः समागणः स्यात्कलितः प्रयातः।
खबाणसप्तोद्धृत एष बीजं बुधाशुकेन्द्रस्य लवाद्यमस्वम् ॥४३॥
दलीकृतं तद् गुरुबीजमस्वं निजाङ्घ्रिहीनं कविकेन्द्रशन्योः।
धनं त्वमीभिः परिसंस्कृतास्ते दृग्गोचराः स्युर्विदुरेवमाद्याः ॥४४॥ इति।

३१७९ = शकारम्भे कलितो गताब्दाः
+ १५६५ = ग्रन्थारम्भशकः
४७४४ = ग्रन्थारम्भे कलितो गताब्दाः।

७५०|४७४४|६ अंशादि बुधबीजं ६।१९।२१ ऋणम्।
४५००
२४४ $\frac{६।१९।२१}{२}$ = ३।९।४६ गुरुबीजमृणम्।
×६०
१४६४०|१९
७५० $\frac{६।१९।२१}{४}$ = १।३४।५३
७१४०
६७५०
३९० ६।१९।२१
×६० − १।३४।५३
२३४००|३१ ४।४४।२८ = शुक्राशुकेन्द्रशनिबीजं धनम्।
२२५०
९००
७५०
१५०

इति बीजानयनम्।

अथ गणितसौकर्यार्थं द्व्यादिगुणितः सृष्ट्यादितो ग्रन्थारम्भकालिकोऽहर्गणो लिख्यते—

| एकादिगुणा अहर्गणाः | | एकादिगुणयुगसावनदिवसाः | |
|---|---|---|---|
| ७१४४०४०२९३९४ | १ | १५७७९१७८२८ | १ |
| १४२८८०८०५८७८८ | २ | ३१५५८३५६५६ | २ |
| २१४३२१२०८८१८२ | ३ | ४७३३७५३४८४ | ३ |
| २८५७६१६११७५७६ | ४ | ६३११६७१३१२ | ४ |
| ३५७२०२०१४६९७० | ५ | ७८८९५८९१४० | ५ |
| ४२८६४२४१७६३६४ | ६ | ९४६७५०६९६८ | ६ |
| ५०००८२८२०५७५८ | ७ | ११०४५४२४७९६ | ७ |
| ५७१५२३२२३५१५२ | ८ | १२६२३३४२६२४ | ८ |
| ६४२९६३६२६४५४६ | ९ | १४२०१२६०४५२ | ९ |

## अथ रविक्षेपानयनम्—

अहर्गणः = ७१४४०४०२९३९४

रवेर्युगसौरभगणाः = × ४३२००००

१४२८८०८०५८७८८·०००
२१४३२१२०८८१८२ ×
२८५७६१६·१७५७६ ×

युगसावनदिवसाः = १५७७९१७८२८ ) ३०८६२२५४०६९८२०८०००० ( १९५५८८४७४३ = गतभगणाः

१५७७९१७८२८
१५०८३०७५७८९
१४२०१२६०४५२
८८१८१५३३७८
७८८९५८९१४०
९२८५६४२३८२
७८८९५८९१४०
१३९६०५३२४२०
१२६२३३४२६२४
१३३७१८९७९६८
१२६२३३४२६२४

रवे राश्यादिक्षेपः =
११।९।४५।१७
अयं क्षेपः पठितरविक्षेपाद्
विकलाद्वयासन्नान्तरितः ।

७४८५५५३४४०

६३११६७१३१२

११७३८८२१२८०

११०४५४२४७९६

६९३३९६४८४०

६३११६७१३१२

६२२२९३५२८०

४७३३७५३४८४

१४८९१८१७९६

× १२

१७८७०१८१५५२ | ११

१५७७९१७८२८

२०९१००३२७२

१५७७९१७८२८

५१३०८५४४४

× ३०

१५३९२५६३३२·० | ९

१४२०१२६०४५२

११९१३०२८६८

× ६०

७१४७८१७२०८० | ४५

६३११६७१३१२

८३६१४५८९६०

७८८९५८९१४०

४७१८६९८२०

× ६०

२८३१२१८९२०० | १७

१५७७९१७८२८

१२५३३०१०९२०

११०४५४२४७९६

१४८७५८६१२४

## अथ चन्द्रक्षेपानयनम्—

अहर्गणः = ७१४४०४०२९३९४

युगचन्द्रभगणाः = × ५७७५३३३६

४२८६४२४१७६३६४
२१४३२१२०८८१८२×
२१४३२१२०८८१८२×
२१४३२१२०८८१८२×
३५७२०२०१४६९७०×
५०००८२८२०५७५८×
५०००८२८२०५७५८×
३५७२०२०१४६९७०×

१५७७९१७८२८ = युगसावनदिवसाः | ४१२५९२२५९४९३४५५५८३८४ | २६१४७८८६२९४ = गतभगणाः

३१५५८३५६५६
९७००८५९३८९
९४६७५०६९६८
२३३३५२४२१३
१५७७९१७८२८
७५५६०६३८५४
६३११६७१३१२
१२४४३९२५४२५
११०४५४२४७९६
१३९८५००६२९५
१२६२३३४२६२४
१३६१६६३६७१५
१२६२३३४२६२४
९९३२९४०९१८
९४६७५०६९६८
४६५४३३९५०३
३१५५८३५६५६
१४९८५०३८४७८
१४२०१२६०४५२
७८३७७८०२६४
६३११६७१३१२

चन्द्रस्य राश्यादिक्षेपः = ११।१८।१०।४७ ।
अयं क्षेपः पठितक्षेपसमः ।

लघुग्रन्थरत्नप्रभावलिः—६

# श्रीरामकर्णामृतम्

## श्री ति० मा० नारायणशास्त्रिविरचितम्

खण्डकाव्यम्

पुण्यपत्तनीयडेक्कनकालेजशोधसंस्थानस्थेन

श्रीक०वे०कृष्णमूर्तिशास्त्रिणा

टिप्पण्यादिभिः संयोज्य संपादितम्

सारस्वती सुषमा

भाद्रपूर्णिमा, संवत् २०१३

# काव्यकर्तृपरिचयः

रामकर्णामृताभिधस्यास्य प्रबन्धस्य प्रणेतारो विद्वदवतंसाः श्रीनारायणशास्त्रिणो दक्षिणदेशे त्रिशिरःपुरी ( त्रिचिनापल्ली ) प्रान्तेऽखण्डकावेर्या रोधसि विराजमाननृसिंहपुर्यां ( करुपत्तूरु ) श्रोत्रियपरम्परायामजनिषत। अमीषां पिता वेदधर्मशास्त्रपुराणेषु लब्धवैचक्षण्यो वाग्मिष्वग्रेसरो मार्गसहायेश्वरदीक्षितो नाम। लक्ष्मीनाम्नी जननी साध्वी अमीषाम्। ईश्वरनाम्नि संवत्सरे ( १८७७ ई० वत्सरे ) कन्यामासे एषां जननम्। तैत्तिरीयशाखीया अमी साङ्गं कृष्णयजुर्वेदमध्यगीषत बाल्ये, काव्यनाटकादिषु च परिनिष्ठितां पाण्डितीमविन्दन्त। सदाचारसंपन्नाश्चैते सह्यजाकूलस्थमनन्तदेवालयगर्भितं कुम्भघोणनगरं स्वावासमकृषत। तदात्वे श्रीवैश्वनाथशास्त्रिभिर्वैदिकग्रन्थानां काव्याद्यनेकग्रन्थानां च मुद्रणाय प्रतिष्ठापिते शारदाविलासमुद्रणालये निर्वाहकपदव्यामिमे स्थापिताः स्वकीयां देहयात्रामन्ववर्तिषत। बह्वीः समास्तत्र स्थिता बहूनां ग्रन्थानां परिचयवशात् प्रसृमरधियोऽजायन्त। धर्मशास्त्रेऽमीषां व्युत्पत्तिरसाधारणी। तदनु अप्पय्यदीक्षितवंश्यानां धवलितयशसा जीवतां यज्ञस्वामिशास्त्रिणां साहाय्येनाद्वैतवेदान्ते प्रावीण्यमभजन्। कुम्भघोणे श्रीकाञ्चीकामकोटिपीठमधिष्ठितानां स्वामिपादानां संनिधौ धर्मशास्त्रविषये परीक्षाधिकारिणश्चेमे समजायन्त। एतेषां हि प्रत्यूषे तरङ्गिण्यां स्नानम्, स्वकर्मानुष्ठानम्, देवपूजा, मुद्रणशालीयकार्यावेक्षणम्, देवालयेषु भगवन्मूर्त्यवलोकनम्, कर्मानुतिष्ठासतां साहाय्यकरणम्, मितभाषणम्, सत्स्वार्जवम्, विद्वत्स्वभिमान इति नैसर्गिका गुणाः; सत्यवकाशे भगवत्परतया काव्यरचनं च सहजसिद्धं धनम्।

एतेषां कल्पनाशक्तिरसाधारणी। अधुना 'रामकर्णामृतम्' एतदीयं खण्डकाव्यमत्र प्रकाश्यते। रामायणकथानुपूर्वीमनुसृत्य विरचितमिदं काव्यं पठनावसरे नितान्तं मनसः प्रमोदं श्रीसाकेतनाथे भक्तिं च संधुक्षयति। एवमेतैरपराण्यपि भगवत्पराणि पद्यानि प्राणायिषत। तान्यपि यथावसरं विद्वज्जननिकुरुम्बे प्रकाशं प्राप्य संतोषं जनयेयुरिति विश्वसिमः। भगवान् पुरुषोत्तमः शारीरं दार्ढ्यमेभ्यो वितरत्वित्याशास्महे—

भाद्रपूर्णिमा, संवत् २०१३

पुण्यपत्तनीयडेक्कनकालेजशोधसंस्थानस्थः
श्रीके० वी० कृष्णमूर्तिशर्मा

# श्रीरामकर्णामृतम्

## श्री ति० मा० नारायणशास्त्रिविरचितम्

### खण्डकाव्यम्

भक्तत्राणविलम्बनासहतया नित्याप्तचक्रादिको
विश्वक्षेमविधावधानवशगो निद्रामिषेणानिशम् ।
विष्वक्सेनविहङ्गराजविनुतः पार्श्वाप्तलक्ष्मीधरो
दद्यादद्य चतुर्भुजः स चतुरोऽप्यर्थान् दयासागरः ॥१॥

रक्षोराजपराजयाप्तदिविषद्वर्गावनोद्यद्दया-
पूरावेशवशप्रतिश्रुतनराकारानुसारादरम् ।
सेवातत्परताहृतप्लवगतागूढामरौघानुगं
मान्यं तं मनुवंशमौक्तिकमजं सेवे सदा निर्मलम् ॥२॥

तप्यत्पङ्क्तिरथावनीशतिलकप्राग्जन्मभाग्योदयं
कौसल्योदरशुक्तिमौक्तिकमणिं सद्वृत्तमाप्तं गुणैः ।
सत्याख्यैस्त्रिभिरन्वितं भुवि सतां सन्त्रातृभिर्भ्रातृभी
रामं निर्जितसोममाननरुचा लोकाभिरामं भजे ॥३॥

कौसल्याङ्कविहारि कुन्दरदनं यन्मन्दहासोल्लस-
द्वक्त्रान्तर्विनिवेशिताङ्गुलिदलं वालीकुलश्यामलम् ।
हारालम्बितपुण्डरीकनखरभ्राजद्गलाप्तालकं
भाग्यं तत्किल भावये दशरथस्यानेकजन्मोर्जितम् ॥४॥

अश्रान्ताध्वरविघ्नभुग्नकुशिकापत्याधिकव्यातुनः
पारावारवलप्रदर्शनकलापाण्डित्यपूर्णाशुगम् ।
लीलोत्सृष्टशराग्रदारितशिलासंघातवृत्ताटकं
लीलामानुषवेषनाटकपटुं कञ्चिद्भजे बालकम् ।।५।।

पश्यत्पादमुनीन्द्रदारविमलीकारक्षमं यं पदा
हातुं दुष्कृतमात्मना कृतमपि[1] ध्यायन्त्यभिज्ञा हृदा ।
विश्वानन्दकरत्रिशङ्कुकलनाद्याश्चर्यचर्योल्लस-
द्विश्वामित्रकथावदावदशतानन्दाभिनन्द्यं नुमः ।।६।।

चण्डीशोग्रशरासदण्डदलने दर्पाग्निदन्तावलं
यं दृष्ट्वा जनकः सुताजनकताजातं निजाधिं जहौ ।
सीतानेत्रचकोरनिर्मलशरद्राकासुधादीधितिं
तं कन्दर्पशताभवीरवपुषं सेवे परं पूरुषम् ।।७।।

ज्यासंधानविघातशङ्कितमहीजाताग्निलज्जाकुलां
दृष्टिं विस्मयकैतवादवनिगे खण्डेऽर्पयन्तं मुहुः ।
वामेनात्तशरासनैकशकलं हस्तेन कक्ष्यालस-
त्कक्ष्यालम्बिकृपाणमंसविलसत्तूणीरमीडे विभुम् ।। ८ ।।

भग्नेऽप्युग्रशरासने निमिषने प्रालेयभूभृद्घने
तत्ताद्दृश्यवनीगताखिलनृपाहङ्कारशैलाशनौ ।
ज्यायोगे वितथोद्यमत्वविहितां व्रीडां सगूढां वह-
न्नप्राप्तस्मयविस्मयो विजयते वीरो विनीतो विभुः ।। ९ ।।

प्रत्यग्रस्फुटपुण्डरीकसुषमासर्वस्वहृल्लोचनं
कान्त्या वार्षिकवारिवाहभरिताहङ्कारितामोचनम् ।
सीताशीलदृगुत्पलस्रगसितं भूयो विदेहाधिभू-
दूतानीतगुरुप्रमोदगुरुहृन्मोदप्रदं तं श्रये ।। १० ।।

---

१. आत्मना कृतम् = ज्ञात्वा कृतम् ।

उद्वाहोचितवेषभूषमुदितानेकार्कतुल्यद्युतिं
चञ्चच्चन्द्रसमाननं स्मरशताकारं दृगासेचनम् ।
दीव्यन्मङ्गलदीपमण्टपगतं सेवे युतं सीतया
वध्वा पावनलाजधूमकलिकास्निह्यद्दृशानीदृशा ॥ ११ ॥

यातौ पावनपुण्यवत्कुलजनिं याक्कजमित्रेक्षणौ
संतुष्यज्जनकौ सवोचितनिजक्षेत्रोदयादद्भुतात् ।
नित्यं सच्छ्रुतकीर्तियोगमुदितौ तुल्याभिहृष्टौ परं
भूयास्तां भुवनावनादृतमती तौ दम्पती भूतये ॥ १२ ॥

पायान्मां रघुपुङ्गवः परिणये पादाम्बुजं भूभुवो
गृह्णन् पाणिसरोरुहेण गुरुवाग्भक्त्येव हृष्टो द्रुतम् ।
नित्यं स्वप्नसमागमेषु कलितं तत्पादयुग्मग्रहं
स्मृत्वाऽकाण्डजनिस्मितं विरचितुं व्रीडादिवावाङ्मुखः ॥ १३ ॥

दूरे विप्रतयेक्षितेऽञ्जलिकरः स्मेरः कुठारोद्यते
क्रुद्धो युद्धकृतोद्यमे कुटिलदृक्तातस्य मोहावहे ।
कालाभः शरलक्ष्यतामधिगते पादानते भार्गवे
प्रीतोऽनुग्रहकृत्परो विजयते दूरो रुषः पूरुषः ॥ १४ ॥

वाचालेऽतिबले चलच्छितितले तस्मिञ्जिघांसौ खले
दुष्टक्षत्रदवानलेऽपि विजिते कोपाकुले भार्गवे ।
विख्यातां स्वकुलोचितां मुनिहितां ब्रह्मण्यतां दर्शयन्
विस्मेरैर्विबुधैः स्तुतो विजयते पित्रोपगूढः प्रभुः ॥ १५ ॥

साकेतेऽधिगतेऽलकापुरतुलां श्रीमन्निकेतावृते
पूते भृङ्गवधूभृतेन सरयूवातेन सर्वादृते ।
प्रासादं परिमृष्टमर्दलमिलद्वीणानिनादं गतौ
प्रीतौ नित्यमिमौ समौ धरणिजारामौ भजे दम्पती ॥ १६ ॥

तातं प्रीतहृदं गुरून्गुरुमुदो मातॄश्च संमानिताः
पौरान्प्रेमयुतान् बलं च विपुलं दीनानहीनान् श्रिया ।
दीप्रं विप्रकुलं धनेन विमतान् कुर्वन्परं संनतान्
शौर्यौदार्यमुखाखिलाभरणगुणारामोऽस्तु रामो मुदे ॥ १७ ॥

उत्तुङ्गोऽवनिभृन्नकर्कशतनुश्चिन्तामणिः कोसलः
सत्सत्त्वो मधुरो भ्रमानधिगतो रत्नाकरः श्रीधरः ।
कल्पद्रुर्भुवि कामिनामपरुषो गीर्वाणगीतः कवि-
र्वीरो विश्रुतपौरुषो विजयते रामोऽभिरामो भुवि ॥ १८ ॥
यत्साम्राज्यमहाभिषेकमुचितं श्रुत्वावनीशोदितं
सद्यः सर्वनिकेतनैर्जलधरप्रान्तोच्चलत्केतनैः ।
रम्भादम्भहराङ्गनामणिगणै रम्भालसत्तोरणैः
साकेतं मुदितं सुरेशनगराकारं बभौ तं भजे ॥ १९ ॥
लोकानन्दनरामचन्द्रनृपतिश्रीलाभतोषातुले
साकेते परमातुरा जयतु सा क्रोधोद्धुरा मन्थरा ।
संघर्षादुदितो यदीयहृदये क्रोधाग्निरिद्धः क्रमा-
द्रघोराजपुरीगृहेषु विपुलो जज्वाल कालान्तरे ॥ २० ॥
अज्ञाश्चेदवनीतले हितपरां निन्दन्ति तां मन्थरां
सारज्ञाश्च न सन्ति किं त्रिभुवने स्तोतुं सतां तां मताम् ।
अश्रान्तं कलहप्रियोऽपि स मुनिश्चेन्नारदः स्तूयते
कैकेयीमतिमात्रभेदपरया किं वापराद्धं तया ॥ २१ ॥
पैशुन्यं कलयन्सदा विचरति प्राज्ञैर्मुनिर्मानितः
कृत्वा सर्वजगत्प्रियं सकृदियं तन्मन्थरा गर्हिता ।
सत्येवं विदिते परः समुचितो हेतुः कथं कथ्यतां
मन्ये विग्रहवद्विशेषकुटिलस्तस्या विधिस्तादृशः ॥२२॥
दास्या या गमितोत्पथं कुटिलयाऽष्ठीवद्वरं निष्ठुरं
स्वान्तस्थं किल वात्यया क्षितिधरे कादम्बिनीवाशनिम् ।
कैकेयी स्वसुतादिगर्हितकृतिस्तातान्गनेत्यादृता
सा येनापि वनाश्रयाभ्युपगमाद्धन्यै तमीडे विभुम् ॥२३॥
पित्रोक्तोऽवनिमण्डलाधिपतितालाभाभिषेकोत्सवो
मात्रा वा गदितो महाघनवनप्राप्त्यातिदुःखागमः ।
गम्भीरस्य न विक्रियाकृतिपटुर्यस्या भवच्चेतस-
स्तं संपूर्णसुधाकराभवदनं सेवे सदा चिद्घनम् ॥२४॥

तातं शोकवशं गतं स्वजननीं स्नातस्तनीमश्रुभिः
सीतां बाष्पखितां मृतान् क्षितिगतान् स्यूतं च सूतं शुचा ।
पौरान् प्रार्थनतत्परानतिकटुक्रोधारुणां लक्ष्मणां
दृष्ट्वाप्यस्खलितव्रतं नृपसुतं वीरं श्रिये तं श्रये ॥२५॥
त्यक्तान्यादरणे कृतानुसरणे क्षोणीसुराणां गणे
निद्राणेऽशरणे श्रमेण सरितः शीर्णे तटप्राङ्गणे ।
अप्राप्तेऽप्यरणे नगाभरणतामध्वान्तरेण व्रजन्
रामः सत्करुणः प्रतारणचणः पायाद् गुणौघापणः ॥२६॥
सीदत्सादिरुदन्निषादिनिवहं पर्याप्तपादातिकं
धूलीधूसरिताङ्गणाप्तशरणं क्षामाङ्गसर्वाङ्गनम् ।
अप्राप्तार्चनदेवतार्चपिहितप्रासादमालाकुलं
त्यक्ताहारविहारपौरनिकरं श्रीहीनपद्माकरम् ॥२७॥
शय्यालीननृपालमाविलतरं विक्रोशदन्तःपुरं
संत्यक्ताशनपानबालमहुतत्रेतादिपूतानलम् ।
शोचद्भृङ्गविहङ्गमागमवरं यस्य प्रवासे पुरं
तं सर्वादरभाजनं हृदि भजे संपूर्णचन्द्राननम् ॥२८॥
मध्वाद्यैर्मधुरैः सुधासमधुरैराप्तार्चनेहं निज-
प्रीत्यात्याहतराजवाहनिवहं मैत्रीगृहं तं गुहम् ।
आश्लिष्यन्नुरसोपपीडमनुगप्रेम्णाऽऽशु तीर्णापगः
पायादात्मसमानतां स विदधद्दाशेऽपि दासे विभुः ॥ २९ ॥
न्यग्रोधोऽनुपरोधमेष सुजनिर्भूयाच्चिरं भूतले
रामानुग्रहतोऽपि यं गुरुतरं प्राप्ता द्विजाः सत्फलैः ।
यद्दुग्धं शुचि मुग्धमाप्य शिरसा राजर्षिराजोचितं
संतुष्टो मकुटं बभार स जटाजूटाभिधानं विभुः ॥ ३० ॥
रम्यां मूर्ध्नि जटां कटौ च दधतं वल्कं करे कार्मुकं
भीमं यातुकुलस्य कालतुलया मित्रं मुनीनां परम् ।
सेवे विस्मयशान्तवीररससंभेदोल्लसद्विग्रहं
भारद्वाजहृदम्बुजाम्बरमणिं लोकैकवीरं मुनिम् ॥ ३१ ॥

मान्यो रामपदाम्बुजन्मपदविन्यासातिधन्यान्तरः
सीतास्नानपवित्रवारिविलसत्पर्याप्तपद्माकरः ।
कल्याणावहचित्रकूटनिकरः सत्याभिधो भूधरो
जीयाद्विस्मितवाजिवक्त्रवनितागीतोन्नदत्कन्दरः ॥ ३२ ॥

कौसल्या कलयत्वनारतमिमं सीता सदा सेवतां
जानाते न तु जातु पङ्कजदृशौ रामाननेन्दो रुचिम् ।
जाने पङ्क्तिरथः परं कुवलयाधीशोऽधिगन्तुं क्षमो
म्लायन् योऽस्य वियोगमाप्य सहसा निद्रां नितान्तं दधौ ॥ ३३ ॥

आज्ञामाप्य जनेश्वरस्य जनकस्यापि क्षितिं संत्यजन्
काञ्चित्कालकलां परं कृतिशतै रामो यदि स्तूयते ।
वैमात्रेयमुदे ददत् स्वयमपि प्राप्तां श्रियं यश्चिरं
भृत्योऽभूद्भरतो गुणी स कविभिः कैर्वा कथं कथ्यताम् ॥ ३४ ॥

मत्वाऽलं भुवि मुक्तयेऽपि स भरद्वाजो यदीयार्चनं
कान्तारे भरतस्य तस्य पृतनां रामं निनीषोः पुरम् ।
कृच्छ्राप्तस्वतपोव्ययाकलितया देवार्हयाऽप्यर्हया
सर्वज्ञः समतोषयत् [1]स्वमनसां सर्वार्थदं तं श्रये ॥ ३५ ॥

वीरं चीरधरं शिरोभृतजटं प्रत्यग्रमेघप्रभं
दृष्ट्वा स्वप्रतिबिम्बतुल्यमनुजं दिष्ट्या चिरायागतम् ।
वर्षन्नश्रुविलोचनेन युगपच्छोकप्रमोदागतं
पर्याप्तं स परिष्वजन् विजयतेऽविज्ञातवेद्यान्तरः ॥ ३६ ॥

कौसल्यां जननीं जहन्नृपसुतां सीतां वनं तां नयन्
मुञ्चन्नम्बुधिमेखलामपि वने क्लेशं यदर्थं ययौ ।
श्रुत्वार्तिं जनकस्य तस्य सहसा दुःखं यदापाऽतुलं
रामस्तत्क्षितिमण्डलेऽपि निखिले केनोपमामश्नुतुं ॥ ३७ ॥

---

१. स्वमनसाम् = आत्मनि भक्तानाम् ।

प्रादेशानधिकप्रदेशविभुतालाभाय पापाहता
यत्र क्षत्रकुलोदिता विजहति प्राणान् रणप्राङ्गणे ।
तामेवाम्बुधिमेखलां भुवमितां[१] संत्यज्य पापाद्भिया
वीरौ धर्मपरौ समाश्रितवनौ स्तुत्यौ न कस्यावनौ ॥ ३८ ॥

बालाभ्यामिव कन्दुकं लघुतरं क्रीडोचिताभ्यां चिरं
क्षिप्तं सत्क्षितिमण्डलं पटुतया याभ्यां मिथः प्रापितम् ।
दृष्ट्वा कन्दुकसाम्यमस्य गदितं पूर्वैर्लविज्ञा बुधै-
रद्यापि प्रथतेतरां क्षितितले सत्त्वाधिकौ तौ स्तुमः ॥ ३९॥

वेलां वारिनिधिस्त्यजेदपि निजां मेरुश्चलेद्वा महां-
श्चण्डांशुत्वमियात्तुषारकिरणः स्याद्वा रविः शीतगुः ।
सन्धां नालमहं विहन्तुमिति संप्राप्य प्रतिज्ञां पुनः
सद्यो मोदविषादकृत्पुरभुवां ह्यो विभुः स्याद् गतिः ॥ ४० ॥

ताताज्ञापरिपालनैकनिरते रामेऽतिधीरव्रते
वन्याभ्यर्थनतामिते च भरते प्रायोपवेशे रते ।
राज्ञा भूतलमाकलय्य विकलं वर्या वशिष्ठादिभि-
र्विश्वत्राणपटीयसी भगवतः पादुः परा स्याद् गतिः ॥ ४१ ॥

[२]पादोऽस्येत्युदितस्य सर्वजगतस्त्राणेन या संस्तुता
पादत्रेति कृताभिधा भगवतः पादूरशेषैरपि ।
भ्रातृभ्यां समुपेक्षितस्य जगतस्त्राणेन चेदुत्सुका
सात्मख्यातिरिरक्षिषापरवशा चित्रं किमत्रास्ति नः ॥ ४२ ॥

उद्वेलः करुणारसो हृदयतस्तुङ्गाद्भिर्मोर्निःसृतः
पादत्रे भवतीं गतो विजयते पादाध्वना किं स्थिरः ।
अन्नाथेन विहीनमम्ब भुवनं ज्ञात्वापि हृत्तादृशं
संत्यज्यापि चिरं धृतं विभुपदं त्वं त्रातुमासीः पुरः ॥ ४३ ॥

---

१. इतां=प्राप्ताम्, स्वयमेवागतां न तु प्रयासेनाधिगताम् ।

२. "पादोऽस्य विश्वा भूतानि" [ऋग्० १०।९०।३] इति श्रुत्या विश्वभूतानामपि भगवत्पादत्वं श्रूयते । सा च पादं त्रायते भगवतः । भगवत्पादस्य विश्वभूतानां चाभिन्नतया जगत्त्राणकरीत्यपि भवति । जगत्त्राणकरीत्यास्य यशसो भङ्गो भवेदरक्षणे । अतः स्वार्थपरतयैव प्रवृत्ता भुवो रक्षणे नात्र चित्रमित्यर्थः । 'त्राणेन चेदुत्सुका' इत्यत्र 'प्रसितोत्सुकाभ्याम्' इति तृतीया ।

यन्नेत्रान्तरकोणजन्मविदितं ज्योतिः किमप्यम्बरे
राजत्पर्वणि वारिधिं भुवि नयत्युद्वेलकल्लोलताम् ।
अत्रिं तं मुनिवर्यमप्यतिमुदा गम्भीरमुद्वेलयन्
शश्वत्क्षीररुचेन्दुनैष भजतां किं रामचन्द्रस्तुलाम् ॥ ५१ ॥

संकल्प्यैव यदर्थमात्मवशगं वस्त्वङ्गरागादिकं
साध्वीसङ्गसमादृता स्वयमभून्मान्यानसूया सुरैः ।
सीता सा मुनिमानिनीभिरमला गीताविगीतातुल-
श्रीरामाधिगमादिदिव्यचरितप्रीताभिरास्तां श्रिये ॥ ५२ ॥

सीतां विस्मयनीयवृत्तविहगाद्यालोकदीर्घेक्षणां
भूयो हंसवधूविजित्वरगतिं मन्दस्मितोद्यन्मुखीम् ।
कान्तारैकनिकेतनैरविदितं नामापि तत्तद्ब्रुवन्
सिंहप्रेक्षितचङ्क्रमो विजयते वन्यां विशन् राघवः ॥ ५३ ॥

श्लाघ्योऽभूदपि पापकृन्मुनिमृगव्याधो विराधो वने
योऽयं राजसुतद्वयं गतभयं भेजे निजेऽसद्वये ।
पात्रः पङ्क्तिरथेन तेन तुलनां पुण्येन यः पुत्रिणा
भक्तेनापि हनूमता भगवता तेनाञ्जनासूनुना ॥ ५४ ॥

रामो मांसलमंसमाप्य विपुलं तद्रक्षसो धावतः
सोऽस्मार्षीदतिहर्षितः स्वनगरे तद्वारणारोहणम् ।
स्मृत्वा वत्सलचेतसं तु जनकं स्वात्मादृतांसं पुरा
साश्रुश्च क्षणमीलितेक्षणयुगः स्तब्धोऽभवद्धीरधीः ॥ ५५ ॥

सीतां तां च घने वने चलदृशं भीतां प्रियादर्शनात्
क्रन्दन्तीं कुररीमिवातिकृपणां श्रुत्वाऽश्रुपूर्णेक्षणाम् ।
भीमं वैरिभुजद्वयं च कदलीलावं विलूयाचिराद्
रक्षन् सानुजनिः प्रियां जनकजाजानिः स जीयाच्चिरम् ॥ ५६ ॥

भूदेवः शरभङ्गनामविदितो यं द्रष्टुकामः परं
मत्त्वापि त्रिदिवं तृणाय सुकृतैः संपूज्य सर्वैः पुरः ।
जीर्णामात्मतनुं तनुं च विधिना हुत्वानले निर्मले
सत्यं लोकमितोऽर्चितश्च विधिना तं पुण्यपुञ्जं भजे ॥ ५७ ॥

ताद्रग्गौतमदारजीवनरजःपादं निरीक्ष्यागतं
रक्षोभक्षितदारकीकसकणाकीर्णान्निजानाश्रमान् ।
स्वस्त्रीलाभसमुत्सुका मुनिवराः संपूज्य यं निर्मल-
स्वस्त्रीलाभमिताः परं मुमुदिरे तं पुण्यभाजं भजे ॥ ५८ ॥

उत्तुङ्गक्षितिभृद्ध्रुवं द्विजवरैः सेव्यं सदा सानुजं
सच्छायं सुमनोगतं धृतजटं स्कन्धोल्लसद्वल्कलम् ।
पादाप्तेऽपि जडे धृतातुलफलं कल्पद्रुमं जङ्गमं
वानप्रस्थगणाः स यं शरणयंस्तापं जहौ तं श्रये ॥ ५९ ॥

कान्तातोषकृते त्यजन्ति तनुजानिष्टां तनुं वा नृपा-
श्चित्रोऽसौ नृपनन्दनो विजयते मान्यो महीमण्डले ।
विप्रत्राणकृते कृतामपि निजां सन्धामवन्ध्यां वदन्
सीतां तामपि यः प्रियामनुसृतां त्याज्यामगर्जद्विभुः ॥ ६० ॥

तीक्ष्णश्चित्तजुषां द्विषामिति मुनिः ख्यातः सुतीक्ष्णाख्यया
संप्राप्तेऽपि शतक्रतौ शतधृतेर्वासं निनीषौ स्वयम् ।
वैदेही विभुमाकलय्य भुवि यं मुक्तिं विदेहाभिधां
संप्रेप्सुश्चिरमप्युवास विपिने मुक्तिप्रदं तं नुमः ॥ ६१ ॥

ये गर्जन्ति महत्तया जलधयस्तान्योऽनयद्बिन्दुतां
विन्ध्याद्रेरपि खर्वताकृतिकृती वातापिवैरी मुनिः ।
तस्मिन्नप्यतिवेलतामधिगतो रामाननेन्दूदयात्
संमोदामृतसागरोऽयमयते केनोपमां स्वाहते ॥ ६२ ॥

तल्पे भोगमये रमाहृतपदो नोऽभूत्पयःसागरे
सोऽभूद्रामपदाहतोऽवनितले वंशे पुनः सागरे ।
सौन्दर्यादसमास्त्रतामधिगतो यो भूमिजाताहृतां
शौर्यादप्यथ तामवाप धनुषा स्वेनारिजाताहृताम् ॥ ६३ ॥

पक्षीन्द्रं स्वपितुः सपक्षमुदितस्वीयान्ववायान्वयं
व्योम्नीवात्मनि पक्षपातमधिकं संप्राप्य रक्षाहतम् ।
चीरं वीक्ष्य मुहुर्निजं घनजटाभारं च दीनाननै
स्निग्धं प्राप्य जटायुषं जनकवज्जातादरं तं श्रये ॥६४॥

पूता पञ्चवटी परं क्षितितले यत्रास्ति पर्णैः कुटी
कल्प्ता या किल लक्ष्मणेन लघुना सीतानिवासोचिता ।
तुष्टस्यानुजमाकलय्य जनकं जीवन्तमेकं निजं
गाढालिङ्गनपात्रतां कृतितुतां रामस्य तां प्राप यः ॥६५॥
हेमन्तोऽवतु नः स हेमविलसच्छाल्युत्तवप्रान्तरो
वर्षन्कर्षकमण्डले हिममिषाद्यो हर्षभूमामृतम् ।
साहाय्यं सुमसायकस्य दधता येनातिवृद्धापि सा
व्यग्रा शूर्पणखा विडम्बनकृता विप्रापदं प्रापिता ॥६६॥
अज्ञातावमतेरपि त्रिभुवनेऽवज्ञाजुषो राघवा-
द्राक्षस्या वचसागताः करकृतप्रासाः शतं राक्षसाः ।
यस्योद्वेलबलानले शलभवत्तूलोपमां लेभिरे
सेवे तं खरदूषणादिखरसंहारातिशूरं हरिम् । ६७॥
गाङ्गेयाङ्गकुरङ्गवेषमुषितक्षोणीसुतामानसो
मारीचोऽप्यतिनीच एष महितो मन्ये महीमण्डले ।
अन्विष्यापि विदन्ति नैव मुनयो यत्नाच्चिरं यत्पदं
युक्तः सोऽनुससार यस्य पदवीं रामोऽपि रामामुदे ॥६८॥
काषायं कलयन्पटं सकपटं संप्राप्य कर्मन्दितां
ब्रह्मैवाहमिति ब्रुवन्ननुपदं संमील्य नेत्रद्वयम् ।
अप्रीतेन हृदा खलोऽपि विदितश्चोरः स नक्तंचरः
शोचन्त्यापि यथार्चितः सपदि सा धर्म्यास्तु सीतागतिः ॥६९॥
तादृक्त्रोटिपुटातिघोरनखरत्रुट्यद्भुजौघार्गला-
मूलानर्गलनिर्गलत्क्षतजसंमूढाऽसुरेन्द्रार्दितः ।
पक्षाघातभवातुलप्रतिरवक्रन्दद्गुहाकन्दरः
स्याद्रामार्थवपुर्व्ययेन सफलस्वायुर्जटायुर्गतिः ॥७०॥
सुग्रीवश्चिरमृश्यमूकशिखरे लीनोऽग्रजाताद्भिया
यां देवीं चपलामिवातिविमलामभ्रेऽपि दृष्ट्वा सकृत् ।
लब्ध्वा भूषणजालकं स शुभदं राज्यं निजं चाप सा
सीता मामपि दर्शनेन शुभदा शीतान्तरङ्गावतु ॥ ७१ ॥

कौशेयक्षतपक्षपादविगलद्रक्तौघमज्जत्तनुं
सीतोदन्तविवक्षया तत इतो दीनां दिशन्तं दृशम् ।
दृष्ट्वाश्लिष्य जटायुषं जनकवद्रामे रुदत्यञ्जसा
भूपे भूमिभृतोऽपि बाष्पमकिरन्नभ्रंलिहा निर्झरैः ॥ ७२ ॥

कृत्वा घोरतरं तपश्चिरमभूद्यः पुत्रिणामग्रणी-
स्तादृशैस्तनयैः कृती दशरथो नैवाप यद्भूमिपः ।
सद्यः संस्क्रियया तदाप सुकृती [1]नैवापमापं जरन्
गृध्रो रामकरात्परात्स सुमतिर्युद्ध्वा क्षणं रक्षसा ॥ ७३ ॥

अन्धोऽतिक्षुधया दिवान्धतुलया कक्षे निगूढोऽनिशं
विख्यातो भुवने कबन्ध इति यः सत्याख्यया राक्षसः ।
आश्लिष्यापि जिघांसया स च सकृद्यौ मुक्तबन्धो ययौ
दिव्यं धाम दयाधनौ शुभगुणौ तौ पावनौ भावये ॥ ७४ ॥

येषां त्राणकृतेऽजनि स्वयमजोऽप्याद्योऽवनौ मानुषः
तेषां या परिचर्ययातिविदिता भूमीसुराणां सताम् ।
अन्विष्यातिघने वनेऽपि शबरीं दिव्यं पदं तां नयन्
ब्रह्मण्योऽवतु नो विभुः करुणया स ब्रह्मबन्धूनपि ॥ ७५ ॥

दीप्रैर्विप्रवरैर्यथाविधि हुतं हव्यं च नव्यं मखे
भुङ्क्ते यो हुतभुङ्मुखेन विनुतः साम्नाप्यदृष्टो भुवि ।
सोऽयं वन्यफलादिवस्त्वपि चिरात्क्लृप्तं शबर्यर्पितं
साक्षादेव भजन्विभुः प्रमदतो भक्त्येकवश्योऽवतु ॥ ७६ ॥

श्रीमानद्रिगुहास्वपि स्वपदगान्दीनान् क्षितौ रक्षितुं
सीतान्वेषणकैतवात्तत इतो दृष्टिं दिशन् कानने ।
पम्पापावनवारिशीतपवनाचान्तश्रमाम्बुर्विभुः
क्रीडन् कामिविडम्बनेन कलयेत्कारुण्यराशिः श्रियम् ॥ ७७ ॥

---

१. आपम् = अपां समूहम् ।

वालिप्रेरितवीरवैरिविहितभ्रान्तिद्रवत्स्वाधिपा-
श्वासार्थाहतभिक्षुरूपभृदपि स्तुत्यं वदन् सूनृतम् ।
यो वैयाकरणाग्रणीरनुमितो रामेण चासीत् स्तुतः
शुद्धिं मे स गिरां परां सुमधुरां धीमान्हनूमान्दिशेत् ॥७८॥
दृष्ट्वा दाशरथी दयारसनिधी निश्चित्य वीरौ परौ
शक्तौ सूर्यसुताय पूर्वजहृतां दातुं हरीशश्रियम् ।
विश्वास्य स्ववचोभिरेव विनयी नीत्वाशु पृष्ठे वह-
न्नापाद्याग्निसुहृत्त्वमात्मविभुना तुष्यन्कपिः पातु नः ॥७९॥
सौहार्दं शुचिसाक्षिभावविदितं काकुत्स्थसुग्रीवयोः
कान्तान्वेषणराज्यलाभवशगं स्याच्चेत् किमत्राद्भुतम् ।
भक्तिर्या भुवि निर्ममस्य कृतिनो रामे परा पावनेः
सेयं विस्मयमस्मदीयहृदये धत्ते परं पावनी ॥८०॥
राज्येनाप रघूद्वहं रविसुतो रक्षोऽधिपश्चैकदा
तैस्तैरेव समीहितैर्मुनिगणोऽरण्ये शरण्यं सकृत् ।
वर्णी विज्ञकुलाग्रणीरपि सदा यन्मारुतिः सेवते
नित्यं कामकलानभिज्ञहृदयः स्तुत्यं तदेतत्सताम् ॥८१॥
शङ्कां सूर्यसुतस्य तस्य जनितातङ्कां विनेतुं विभुः
पादाङ्गुष्ठबलातिदूरकलितानल्पास्थिकूटाचलः ।
साक्षान् सप्त गिरिं रसां च विशिखेनैकेन भिन्दन् समं
हर्षौघेण हरन् हरीशहृदयं हन्यान्मदन्तर्द्विषः ॥८२॥
कण्ठासक्तलतेन भास्करतनूजातेन बद्धात्मना
दुर्भेद्यं दिविषत्कुलेशतनयं दृष्ट्वापि धृष्टः परम् ।
दुर्वारेण शरेण योऽभिनदमुं चित्रेण योधाग्रणी
रामो रम्यतरः श्रिया रणभुवा राजीवनेत्रोऽवतु ॥८३॥
मुग्धेनाशनितुल्यवेगविशिखज्वालातिदग्धात्मना
कीशेनाधिगतक्रुधा निजहृदोऽनीशेन तेनोदितम् ।
दुष्टं शिष्टविगर्हितं निजवधं रामः परैर्हेतुभि-
र्न्याय्यं साधु समर्थयन् विजयते धर्मस्य जीवातुभिः ॥८४॥

कीशं कञ्चन मत्तमीशमधुना यत्त्वं निलीयावधी-
वींराग्र्यो भुवि विश्रुतोऽप्यतितरां धुर्यश्च धर्मात्मनाम् ।
हेतुस्तत्र तु धातुरप्यविदितस्त्वन्मात्रगम्यो महान्
मन्ये तुष्यतुनीतितः कतिचन प्रोक्तास्त्वया हेतवः ॥ ८५ ॥
अङ्गुल्यग्रबलेन हन्तुमखिलाँल्लोकानपीशस्य ते
कीशस्यास्य विभो निलीय हनने भीतिर्न हेतुर्ध्रुवम् ।
धर्मार्थं पितृवाक्यमात्रवशतः संत्यक्तसर्वावने-
र्नाधर्म्ये भविता परं रघुपते ते कामचारे रतिः ॥ ८६ ॥
वात्सल्यं शरणागते रघुपते वेलातिगं ते श्रुतं
दृष्टं तत्सफलं दयाजलनिधे दन्त्यादि-तिर्यक्ष्वपि ।
सत्येवं शरणागतावनपरो यः कोऽपि ते स्यात्सुहृत्
सीतारक्षणतत्परोऽत्र सुकृती साक्षी जटायुः खगः ॥ ८७ ॥
पापं त्वं ननु मन्यसेऽपि परमं पादानतोपेक्षणं
सर्वं तत्सुकृतं चिराय सुकृतं हन्याच्च पुंसामिति ।
पापात्मा च मतोऽप्रियस्तव परं पादानते योऽनृजु-
र्यद्वीक्षापि विगर्हितेति कलिता साद्यत्र शक्रात्मजः ॥ ८८ ॥
श्रुत्वा दारहृतं खलं धनहृतं सख्युः समस्यासुभि-
र्विद्राव्याधिकदुःखदं च न भवांश्चक्रे कृपालुः क्रुधम् ।
सोदर्यं शरणं गतेऽपि शतशः श्रुत्वा शठं शक्रजं
वीक्षानर्हमघेन तं निरचिनोर्वध्यं निलीयात्मना ॥ ८९ ॥
पौलस्त्ये निजदारहृत्यपि विभो पापे दयादर्शिते
संनद्धं समरेऽपि तं यदभवः सन्धातुकामः स्वयम् ।
दण्डं प्राप स तीव्रमेव भवतो वाली निलीनात्मनः
पापी यः शरणागतानुजचिरक्लेशातिदुष्टाशयः ॥ ९० ॥
भेजे नैव विभीषणोऽतिकृपणः पौलस्त्यमप्यग्रजं
तत्त्वज्ञस्तव पादपद्ममभजत् सत्त्वाधिकः सन्नुतम् ।
यद्येषोऽप्यभविष्यदात्ममनुजं राम स्वयं रावणः
सत्यं वालिपथेऽभविष्यदपि ते सद्यः शरेणार्दितः ॥ ९१ ॥

अब्धिः स्तब्धधियावमत्य शरणं प्राप्तं किल त्वां शर-
प्रोद्यत्पावकतप्ततोयविलुठन्निःसत्त्वसत्त्वोत्करः ।
संतप्तः स्वयमप्यगाधहृदयः सास्रैः स्वदारैः समं
संप्राप्याशु भवन्तमीश शरणं मुक्तो जडात्माप्यधात् ॥ ६२ ॥
पूतस्त्वच्छरपावकेन विगलत्कीलालधारासरि-
त्स्नातः शुद्धमतिः स शक्रतनयस्त्वन्नेत्रपात्रत्वतः ।
त्वामेवाप्य गतिं पतिं त्रिजगतां संप्राप्य सत्यं पदं
मेने ते मनुवंशमौक्तिकमणे क्रोधं प्रसादाद्वरम् ॥ ९३ ॥
शास्त्रं मन्दतराणियच्छति नरान् कामार्थिनः केवलं
तत्त्वज्ञान्न तु तत्त्वमादिवचसां यद्याश्रितांस्त्वत्पदम् ।
सर्वज्ञं सकलेशितारमनघ त्वामाहुःकामं कुतो
यस्यार्या निगमान्समान्निजगदुर्निःश्वासतस्ते समान् ॥ ९४ ॥
क्षोणीक्षोणभुजोऽपि भूपकुलजाश्चेद् दुष्टशिक्षाकृतो
नो दुष्यन्ति युतास्त्वदंशकलया गीताश्च पुण्या भुवि ।
स्वामिन्सर्वजगज्जनिस्थितिलयानीक्षावशात् कुर्वतो
हानिस्ते हनने हरेः सुहृदरेरर्हा न भूमन्भवेत् ॥ ६५ ॥
धर्मस्थापनहेतुनाप्य धरणीमालम्ब्य मर्त्यात्मतां
कान्तारैकनिकेतनैर्मुनिजनैः संमानितस्यामलैः ।
नाधर्म्यं परमीश कीशहननं संभाव्यते ते ध्रुवं
पापायान्यथयन्ति केचन कलौ शापातुराः पामराः ॥ ६६ ॥
स्याद्वा दुष्टमिदं क्रुधैव सहसा सत्पुः कृते ते कृतं
दोषं साधुगते कथं कलयते तेजीयसस्ते परम् ।
यद्रोषारुणनेत्रकोणकलनानल्पोष्णतोयोल्लुठ-
त्पाठीनोऽब्धिरभूत् क्षणाच्चरणगः स्तब्धोऽपि सेतुक्षमः ॥ ९७ ॥
बध्वा योजयसे क्षणेन विनतं त्वं चेद्वियुक्तश्चिरं
साम्राज्यं सुहृदे प्रयच्छसि यदि त्वं काननेऽसि भ्रमन् ।
वीरं वालिनमाशु हंसि विजितं तेनाशरं चेच्चिरा-
च्चित्ते नालमहं विभो कलयितुं चित्रं चरित्रं तव ॥ ६८ ॥

दोषं याति न दाहजं हि दहनः ख्यातः स यत्पावनो
वातः स्पर्शकृतं न चाशुचिकृतां पुनः प्रकृत्या यतः ।
सर्वेशश्च भवान्न दुष्टदमनोद्भूतं स्वतो निर्मलः
पूतानामपि पावनान्तरमतिर्नेष्टानवस्थाविदाम् ॥ ९९ ॥

मुक्तग्रीवरुदद्वधूगणमिलत्सुग्रीवदीनानना-
लोकोद्यत्करुणोद्गताश्रुकणिकापात्रात् स्वनेत्राम्बुजः ।
चित्रन्यस्त इवाचलोऽचलधृतिर्द्वित्रान्क्षणान्ध्यानतो
जीयाच्चापलसत्करो रघुवरो वीरो दयासागरः ॥ १०० ॥

राज्यं प्राज्यसुहृज्जनं बहुधनं दारैरुदारैः समं
सख्या स्वेन च सूर्यवंशजनुषा ख्यातेन गुप्तं गिरौ ।
यद्वीर्याम्बुधिबिन्दुलेशलवतः स्वं प्राप कश्चित्कपिः
सेवे रामशरं तवैव शरणं तं दीनरक्षापरम् ॥ १०१ ॥

इष्टं मित्रसुतं वने चिरतरक्लिष्टं विदित्वा वधू-
मित्रं चित्रतमासमाखविपुलक्रीडोचितं तं परम् ।
कुर्वन्यश्चतुरोऽप्युवास चतुरो मासान् धरित्रीधरे
धीरः प्राणसमासमागमपरोऽप्याप्तप्रियोऽव्यात्स नः ॥ १०२ ॥

अन्धं वीक्ष्य कपिं मदेन मदनेनासत्यसन्धं च तं
रोषेणाप्यरुणा धृतानलकणा पत्यू रघूणां परम् ।
आनीतं किल लक्ष्मणेन लघुनावेक्ष्य क्षणेनानतं
प्रातः पङ्कजपत्रमित्रसुषमा दृष्टिर्दयार्द्रावतु ॥ १०३ ॥

अन्याव्यारिहृतां विचेतुमनसोऽवन्यात्मजां वानरा
धन्यास्ते धरणीतलेऽत्र निखिले वन्यानिवासा अपि ।
सीताध्यानहृतैनसः सपदि ये गीतात्मसारा बुधै-
र्नीता राघवदासभावयशसाधीतां महद्भिर्नुतिम् ॥ १०४ ॥

पुण्यः पावनिरेव पावनतरो गुण्यः प्रकृत्यैव यो-
ऽगण्यानामपि पादमूलशरणोऽरण्यालयानां गणे ।
वीराग्रेसरभावलक्ष्मविरुदं श्रीरामहस्ताद्दत्तं
भेजे तत्परमङ्गुलीयममलं रेजे यदाख्याक्षरैः ॥ १०५ ॥

कृत्वा घोरतरं रणं तनुमपि त्यक्त्वा स सीताकृते
रामादाप्य च संस्क्रियां बत ययौ यत्राज्जटायुः खगः ।
उक्त्वोदन्तमुपागतेषु हरिषु स्वज्ञातमुर्वीभुवः
पाथाद्विष्णुपदं स्वपक्षबलतः संपातिनामा क्षणात् ॥ १०६ ॥

वृद्धो यद्विकलः प्रतीक्ष्य सुचिरं रामस्य दूतान् खगः
प्रायात्तान् क्षुधितोऽपि साधु समये तानाह सीतागतिम् ।
भेजे विष्णुपदं स तेन सहसा दुष्प्रापमन्यैश्चिरा-
र्थेद्वाल्पं सुमहत्त्वमेति सुकृतं काले द्विजैश्चेत्कृतम् ॥ १०७ ॥

ऋक्षाधीश्वरवक्त्रनिर्गतनिजाश्चर्यस्तवाकर्णन-
प्रोद्यद्विस्मृतपूर्वसर्वमहिमाद्यानेकभूतिस्मृतिः ।
आश्वास्याकुलमर्कसूनुभयतः कश्चित्कपीनां कुलं
वीरो वानरपुङ्गवो विजयते वार्धिं तितीर्षुर्वशी ॥ १०८ ॥

उद्वीक्ष्यारुणमर्कबिम्बमुदितं बालः फलस्य भ्रमा-
ज्जातस्तत्क्षणतोऽपि जाङ्घिकतमो यो योजनानां शतम् ।
संक्रान्तोऽक्रमतः शतक्रतुकृतात् क्रुद्धेन पित्राकुलै-
र्देवेशैः सममानि मे गतिरसौ नाम्ना हनूमानिति ॥ १०९ ॥

एकं तं कलये प्रभञ्जनतपःपाकं विशोकं हृदा
रक्षोभञ्जनमञ्जनोदरसुधावाराशिराकाविधुम् ।
भक्त्यानञ्जनयैव यो रघुवरं चक्रे स्वहृत्पञ्जरे
तुल्यो यस्य न विक्रमेऽपि जलधिर्येनापि कुल्यापदम् ॥ ११० ॥

पारावारतितीर्षया धृतमतेः प्रांशोस्तथा पावने-
र्मौलौ निर्मलरत्नरम्यमकुटाकारं जगाहे रविः ।
चित्रं तस्य पटत्वमाप पटलं धाराधराणां गिरौ
यातोऽभूदपि जानुदघ्नजलतां यादःपतिर्यो महान् ॥ १११ ॥

व्योमोदग्रतया समो बलिजितो दामोदरस्य त्विषा
व्यामोहं विदधद्द्विषादबहुलं रोमोद्गमं च द्विषाम् ।
संमोदं कलयन् गिरात्मसुहृदां सोमोपमाननो
भीमो भीरुहृदां हरिर्विजयते रामोरुकीर्त्यादृतः ॥ ११२ ॥

सीतां द्रष्टुमना दशाननहृतां गीतां सतां संसदा
ध्यायन्दाशरथिं दयारसनिधिं गायन्गिरा तद्गुणान् ।
आरुह्याद्रिवरं महेन्द्रपदगं चारुस्वनैः किन्नरै-
र्गीतो नः शरणं समुद्रतरणाभीतो हनूमान् हरिः ॥ ११३ ॥

वृद्धान्स्वान्प्रणमन्सुधोपमगिरा स्निग्धान्हरीन्हर्षयन्
खर्वत्वं गमयन् गिरिं गुरुतया गर्वं हृदो वर्जयन् ।
कर्षन्वेगवशान्वने विटपिनो वार्धिं तितीर्षन् द्रुतं
पायात्पावनमानसः कपिवरो मायाविनां भीकरः ॥ ११४ ॥

पारे वारिनिधेर्विचेतुमनसं रामस्य रामां रमां
वातो यद्विजितोऽपि वेगविपुलं पश्चात् सिषेवे कपिम् ।
आमोदातिशयेन मन्थरतरः शीतश्च तत्साम्प्रतं
पुत्रादाप्य गुणेन कः परिभवं याति प्रतीपं बुधः ॥ ११५ ॥

शक्रः शिक्षिनमात्मजद्वयमपि प्रेक्ष्यापगर्द्धं विभो
सर्वान् राममनानुगात्मजवरान्गर्वाश्रान्निर्जरान् ।
दूते दाशरथेन्निधाय विपत्नामर्हां विहातुं ह्रियं
नूनं वारिनिधौ निलीनमचलं चक्रे मपक्षं बहिः ॥ ११६ ॥

चित्तं वेत्सि शरीरिणां हि भवदायत्तं समस्तं जग-
द्विज्ञास्त्वां किल कीशपुङ्गव जगत्प्राणात्मभूतं विदुः ।
साध्वी सा तु सुरद्विनास्[1] सुरसा प्रत्यूहकृत्त्वे समे
चित्रं यत्परुषा त्वयागतरुषा सा सिंहिका संहृता ॥ ११७ ॥

वामं प्राप्य तवाबला करतलं लङ्का परं कातरा
मुग्धावेद्य पुरीभुवामपि भयं दग्धा हि ते तेजसा ।
तेनेमां सहसादहत्स दहनो मेने[2] त्वया शीतलो
लाङ्गूले मणिदीपवत् किल कपे यो जानकीतेजसा ॥ ११८ ॥

---

१. आस इति विभक्तिप्रतिरूपकमव्ययम् ।

२. मेने; कर्मणि लिट् ।

देवावासनिभां सभां मणिगणैः पुष्टं परं पुष्पकं
    दृष्ट्वा देववधूर्दशाननगृहे सुप्ताश्च ताः सुन्दरीः ।
लेशेनापि हि विस्मयस्मरवशं नैवागमो योगिव-
    द्वैशद्यं हृदयस्य हृद्यमिह ते स्तोतुं कपे कः कविः ॥ ११६ ॥
यास्यन्तीं स्वपदाश्रितस्य वशतां दुष्टासुरैर्दूषितां
    लङ्कां पावयितुं पदाब्जरजसां त्वां प्राहिणोद्राघवः ।
मन्ये पावनपावने ननु ततः सर्वां निशां पर्यटः
    सर्वज्ञोऽप्यनभिज्ञवद्रिपुपुरे देवीदिदृक्षोत्कटः ॥१२०॥
उल्लङ्घ्याम्बुनिधिं विजित्य तरसा लङ्कां च जाग्रन्निशां
    सर्वां तां नगरीं चरन् द्रुतगतिर्यन्मारुतिः प्राप सः ।
वीक्ष्याशोकवने घने क्षितिसुतां दुःखं जहौ तत्क्षणात्
    क्लेशः स्यादतुलः फलेन कुरुते नूनं नवीनं नरम् ॥१२१॥
पौलस्त्यामयपीडितं त्रिभुवनं संप्राप्य वैद्याद्विधेः
    कारुण्याभिधमौषधं रघुपतेः स्वास्थ्योन्मुखं वीक्ष्य या ।
सेहे वत्सलमानसा रिपुगृहे प्रेयोवियोगं परं
    भूत्यै मे जननी समस्तजगतां जायेत सा जानकी ॥१२२॥
मत्वा पङ्क्तिमुखं तृणं च भषितं तस्याखिलं भाषितं
    प्राप्तुं वीरवधूपदेन विदितं गीतं सतीभिर्यशः ।
रक्षःशिक्षणदीक्षितं स्वकमनं स्मृत्वैव यानुक्षणं
    दक्षाप्यक्षमतात्मदुःखममला सीतास्तु सा मे गतिः ॥१२३॥
उद्बद्ध्यापि तनुं त्यजन्तु सुधियः सद्यो न शीलं परं
    कृच्छ्राप्ताः कुलपालिका इति परां प्रख्याप्य साध्वीस्थितिम् ।
सर्वज्ञापि बबन्ध शाखिनि शुभा वेण्या तनुं या तनूं
    धीरा सा धरणीसुता मम धृनां धर्मे विदध्याद् धियम् ॥१२४॥
आत्मौन्मुख्यमवाप बाष्पबहुला या जीवनाशाकुला
    संतप्ता शुचिना महीव बलिना कालेन मह्यात्मजा ।
सिञ्चंस्तामामृतेन रामचरितेनात्मोदितेनाशु यः
    सर्वज्ञः समजीवयत् स समये पायादपायात् कपिः ॥१२५॥

रत्नैः सन्मणिभिर्वृतं च धनरुग्यत्साधुवृत्तं लस-
द्रामाख्यं सदयावलोकितमतीवाप्तं चिराज्जानकी ।
दीव्यन्मारुतिसंस्तवोच्चितपदं कान्तं करेणाप्य सा
युक्तं राममिवाप मोदमतुलं रामाङ्गुलीयं सती ॥१२६॥

पित्रा स्वेन सकृन्मतामपि वधूं मत्त्वा निजां मातरं
रामो मानयति प्रतीतविनयो धर्मस्य यो मार्मिकः ।
तुल्या तस्य गुणैर्यदस्यवनिजे तल्लालयस्यूर्मिकां
प्राप्तां कान्तकरग्रहं स्वसदृशीं हृष्टाम्बदृष्टां चिरात् ॥१२७॥

कान्तस्याङ्गुलिमण्डनं स्वकरगं सीतातितान्ता शुचा
प्रेमाश्रुस्नपितं प्रमृज्य नयने प्राप्तं चिरादीक्षते ।
वर्णान् वक्ति च तद्गतानथ मुहुर्मन्दाक्षमन्दाक्षरं
गाढं वक्षसि गूहते प्रलपति प्रीता चिरं चुम्बति ॥१२८॥

भग्ने भर्गशरासने निजकरग्राहस्य विघ्ने चिरात्
प्राप्ते यूनि जितस्मरेऽपि च वरे भूभृत्कुमारे पुरा ।
आप्तो यः प्रमदोऽवनीतनुसुता सोऽप्यङ्गुलीयेक्षणा-
न्मोदाब्धेरतुलस्य नैव तुलनामाप्तुं लवेनार्हति ॥१२९॥

हित्वेमामपि मानिनीं धृततनोर्वर्षासु धाराधरा-
साराप्ते धरणीधरेऽपि वसतो रामस्य यूनः परम् ।
चित्तं किं कृतमश्मनापि कलित हन्तायसा कल्पितं
वज्रेणेति च विस्मयाप्तहृदयः स्यान्मे गतिर्मारुतिः ॥१३०॥

सत्त्वं सागरलङ्घनादपि रिपोर्धैर्यं प्रवेशात् पुरे
दक्षत्वं समये ममेदृशि समाश्वासाच्च ते दर्शितम् ।
मन्ये वाग्मितया तवाप्य न चिराद्धन्येश्वरं स्यामिति
स्तुत्या भूमिभुवा समीरतनयो नम्राननः पातु नः ॥१३१॥

रामप्रत्ययकारिणीं क्षितिभुवः संप्राप्य चूडामणिं
वृत्तान्तं बलवैरिजातविदितब्रह्मास्त्रवीर्यं च तम् ।
आश्वास्यावनिजां निजेन वचसा वीरो वरो वाग्मिनां
भङ्क्त्वाशोकवनं घनं विजयते शोकप्रदो रक्षसाम् ॥१३२॥

सेनानीसचिवात्मजाक्षविजयक्रुद्धेन्द्रजित्प्रेरित-
ब्रह्मास्त्रानुसृतिक्षणोद्भटभटानीतोऽसुरेन्द्रान्तिकम् ।
अव्यान्मां हरिरात्मपथ्यवचनश्रुत्युत्थकोपोन्नद-
द्रक्षोनाथवितीर्णवालहुतभुङ्निर्दग्धलङ्कापुरः ॥१३३॥

सीतालोकनवृत्तवर्णनसुधापानेन हृष्टान् हरीन्
धन्यात्मा मधुकाननाप्तमधुनो दानेन चामोदयन् ।
धृष्टैर्धर्षितपूरुषैर्दधिमुखे पुष्टैश्च तैः पूजितो
मानाङ्कूरमरुर्मरुत्तनुभुवो मान्योऽस्तु मान्यो मम ॥ १३४ ॥

दृष्टार्यावनिजेति वाङ्मयसुधासारं विभोः कर्णयो-
र्वर्षन् हर्षवशेन विस्तृतदृशानन्दाब्धिमग्नात्मना ।
नान्यत्पश्यति मे मनस्तव मुदे मान्यस्य ते मारुते
दीनोऽस्मीति धृताश्रुणा रघुवरेणालिङ्गितोऽव्यात् कपिः ॥ १३५ ॥

भक्त्या त्वत्पदपद्मयुग्मगतया नीतेत मे शीततां
मूर्तेनेव तपोग्निना क्षितिभुवो मह्यालगेनाग्निना ।
दग्ध्वा देव निशाचरेन्द्रनगरं दृष्ट्वाथ ते प्रेयसीं
प्रत्यागामिति संस्तुवन्निजविभुं निर्व्याजमव्यात् कपिः ॥ १३६ ॥

यद्दृष्ट्वा युवती बुभूषति वने मुग्धं मुनीनां कुलं
यत्संश्लेषरसाप्तिभाग्यमहिता भूमीसुतैकावनौ ।
तेनैतेन भुजान्तरेण भवतो गाढोपगूढः कपि-
र्दासः स्यां दयितः सदेति विनमन् हृष्टो हरिः पातु नः ॥ १३७ ॥

स्निग्धां स्वर्णरुचा रसान्तरजनिं संप्राप्य चूडामणिं
कान्तां मारुतिहस्ततः प्रियतमां रामश्चिरादीक्षिताम् ।
पश्यत्यादृतया दृशाश्रुसलिलैः सिञ्चत्यथानिर्गलै-
र्धत्ते वक्षसि गूहते प्रलपति प्रेम्णा चिरं चुम्बति ॥ १३८ ॥

गत्या व्योमनि तार्क्ष्यवद्रिपुपुरे युक्त्या प्रवेशे गिरां
सूत्या भूतनयाप्तया भुजबलोन्नत्या रणे रक्षसाम् ।
नीत्या वैरिणि चोक्तयानिलभुवो मैत्र्या हरीणां कुले
भक्त्या चात्मनि विस्मितोऽवतु विभुर्नुत्या सुहृत्तं स्वजन् ॥ १३९ ॥

कारुण्येन कृतत्वरो रघुवरः कान्ताकथाकर्णनात्
क्रोधेनालघुना च केनचिदितः क्रव्यादकुल्याधमे ।
वर्षन् वानरमण्डलेऽपि चपले वीर्यं विचित्रं दृशा-
मर्षं चाप्यभिषेणनात्सफलयन्पायादपायात्स माम् ॥ १४० ॥
लाङ्गूलैश्चलितैस्ततैस्तत इतो दीप्तैरनेकप्रभै-
स्तन्वद्भिर्दिवि धूमकेतुविशयं लङ्काभुवां रक्षसाम् ।
कीशैरभ्रनिकाशकायपिहिताकाशैः कृताशै रणे
सिंहारावतिरस्कृताम्बुदरवै रामो जयत्यावृतः ॥१४१॥
तीरे नीरनिधेः प्लवङ्गमचमूवीरेरितैरारवै-
स्तारेण प्रतिनिस्वनेन चलिताधारे गिरौ राघवः ।
पारे वारिधि रक्षसा निवसता क्रूरेण रुद्धां प्रियां
धीरेणापि हृदा स्मरन् स जगृहे पूरेण शोकाश्रुणः ॥१४२॥
किं व्योम्नाशु नयामि कीशपृतनां किं व्योमयानेन वा
किं बाणानलशोषिताम्बुधितलेनैवातुलेनाध्वना ।
किं वा योगबलेन मेऽतिविपुलेनेति प्रकारान् बहून्
ध्यायन्मानुषवेषगूढमहिमा मायी विभुः पातु माम् ॥१४३॥
शत्रोरप्यनुजे चिरादविदिते शस्त्रान्विते सानुगे
मित्रैः स्वैरपि शङ्किते शरणगे वाचैव रात्रिंचरे ।
न्यायोपन्यसनैः परं शरणगत्राणं निजं वर्णयन्
रक्षोराज्यपदप्रदः सपदि मे देयात् स देवोऽभयम् ॥१४४॥
नो देशं समयं विभो शरणगे जातिं निसर्गं कुलं
कारुण्यं तव वीक्षते न सहतेऽप्यौचित्यचर्चां मनाक् ।
दातुं साम्यमपीश ते प्रयतते सद्यःप्रपन्ने स्वयं
क्वाचित्के विभुता गतिं मम मनो वाचां समाचामति ॥१४५॥
त्वं सर्वेशतयासि राम निगमैः सर्वैः स्तुतः सागमैः
कारुण्यं ननु ते परं प्रभवतीत्येतच्च निश्चप्रचम् ।
तच्चोदेति विना विचारकणिकां जन्तौ प्रपत्त्यक्षरै-
र्मन्ये त्वत्पदपङ्कजप्रपतनादन्यन्न किञ्चिन्महत् ॥१४६॥

तप्तं यैरनलान्तरे चिरतरं ध्यातं तथैकायनै-
र्जप्तं जन्म समग्रमन्तरुषितं स्नातं च गङ्गाम्भसि ।
दृष्टं संवननं तव प्रपदनं नूनं न तैस्तापसै-
र्येनाभूत्सुकृती सकृत्प्रणयिना स्निग्धः सुहृद्राक्षसः ॥१४७॥
नो देशाकलनं न कालनियमो न प्रत्यवायाद्भयं
नैवान्यानुसृतिश्रमः प्रतिपदं नार्थार्जनोत्थापदः ।
स्वायत्तेऽत्र तनूभृतः प्रपदने राम त्वदीयाध्वरे
साम्याप्तिस्तव सद्य एव फलतीत्यावेदितं रक्षसा ॥ १४८ ॥
संकल्प्यात्महितं तव प्रपदनं हित्वा प्रतीपान्निजान्
विश्वस्तः शरणं भवन्तमुपयन् विन्यस्तभारस्त्वयि ।
पादान्ते पतितः स दीनवचनो लङ्काधिपस्यानुजो
मित्रत्वेन गुरूकृतः किल विभो वक्ति प्रपत्तिं पराम् ॥ १४९ ॥
शक्तः स्रष्टुमपि स्वयं शतधृतिं कर्तुं जगच्चान्यथा
मित्रोक्तिं किल मानयन् स्वकुलजैरुत्पादितस्याम्बुधेः ।
प्राप्तुं प्राकृतवत्प्रसादमवनीपृष्ठे कुशैरास्तृते
बाहुं पालितलोकपालमुपधायाव्याच्छयानो विभुः ॥ १५० ॥
उद्यत्फेनजडाशयावमतिजक्रोधानलप्रस्फुर-
द्वक्रभ्रूलतरक्तनेत्रवदनप्रेक्षातिभीतामरम् ।
स्फायत्संतमसाकुलीकृतनभोभागच्यवत्तारकं
संरम्भं कलये विभोः फटफटारावस्फुटद्भूधरम् ॥ १५१ ॥
क्रोधाकर्णविकृष्टचापघटितप्रोद्यत्स्फुलिङ्गाशुग-
क्षेपक्षोभितत्तप्ततोयविलुठद्यादोगणाम्भोनिधिम् ।
कल्पान्तानलकल्पकोपकलनानल्पाप्तभीत्याकुल-
स्वस्त्रीसंवृतसागरानतपदं रामं श्रये निर्मदम् ॥ १५२ ॥
स्निह्यल्लक्ष्मणसान्त्ववादशमितामर्षातिवेगं विभुं
वर्षद्वीक्षणवारिराशिवनितावीक्षाविलीनक्रुधम् ।
पादाप्ताम्बुधिराजपालनमहावेशातुलोद्यद्दयं
द्वैतीयीकशराग्निशोषितमहाद्वीपं विपापं श्रये ॥ १५३ ॥

विस्मेरामरपुष्पवर्षविपुलव्योमाप्तभेरीरव-
व्यक्तप्रक्रमविक्रमानुपमदोर्दण्डद्वयेनाद्वयम् ।
वाराशीशसमर्पितामलमणिश्रेणीमहोमञ्जरी-
पुञ्जारञ्जितपादपद्मयुगलं रामं श्रये निर्मलम् ॥ १५४ ॥
यातुत्रातवृतां वनेऽवनिसुतां त्रातुं भृशोद्योगिनीं
नेतुं वानरवाहिनीं द्रुततरं नेतुः पुरीं रक्षसाम् ।
केतुं धूमपदादिमाशरततेर्हेतुं जयस्यात्मनः
सेतुं तादृशि वारिधावपि सृजन्पातु विभुः स्यात्स माम् ॥१५५॥
कीशाधीशचमूहृतैरुरुतरैरुर्वीरुहैश्चोपलै-
रुच्चैः पातसमुत्थिताम्बुकणिकाशीतातिभीतामरैः ।
बध्नन्नश्रुतदृष्टपूर्वमतुलं धीमानगाधेऽम्बुधौ
सेतुं वैरिविनाशहेतुमनघः पायाद्रघूणां पतिः ॥१५६॥
भास्वद्वंशजभूमिभृद्वरयशःसौधोल्लसत्केतवे
बन्दीभूतवसुन्धरातनुजनिक्षेमैकजीवातवे ।
उत्खाताखिलयातुधाननगरीदर्पोन्नदद्यातवे
तापत्रासनहेतवे तनुमतां तस्मै नमः सेतवे ॥१५७॥
खेलत्कालभुजङ्गघोररसनाभोगायितो रक्षसां
शोचत्स्वीयसुतासमाहितिकरक्षोणीकराप्तोपमः ।
संसारातुलदुर्गमार्गविलुठद्विश्रान्तिदः सत्पथः
सेतुर्नेतुरिनान्ववायजनुषां हेतुः शुभस्यास्तु मे ॥१५८॥
यन्नाम्नो ग्रहणेऽपि यान्ति विलयं दुर्नामकाद्या गदा
यं ध्यात्वापि सकृद्धतेन मनसा वन्ध्यापि सूते सुतम् ।
यत्राप्लावकृतोऽपि जातु सुलभः सुत्रामलोकश्चिरं
सेतुं तं विधितो भजन् समुचितो यातुं विधातुः पदम् ॥१५९॥
सत्स्थाणुर्विदितः सदाप्यनुगतापर्याप्तवादश्रुतो
यत्सेतुं लवणोदधावधिगतः सूते फलं भूरिशः ।
येनाकारि शिलापि काचिदबला पादूरच भूभृत्पदे
चेतश्चिन्तय चिन्मयं चिरतरं तं चित्रचर्यं विभुम् ॥१६०॥

आरूढो हरिमाञ्जनेयमनुजेनाधिष्ठितेनाङ्गदं
 
    च्वेलाक्षोभितराक्षसेन्द्रनगरीकद्दयान्तरारक्षिभिः।
 
वीरैर्व्योमचरैः करोद्धृतधरैर्वीतो वरैर्वानरैः
 
    संतीर्यार्णवमाप्तयातुनगराभ्यर्णो विभुः पातु नः ॥१६१॥
 
कान्ताहारिणि पापकारिणि खले युद्धाय बद्धाग्रहेऽ-
 
    प्यार्यार्ता रणनीतिरीतिमनुसृत्यैवाभिजाताग्रणीः।
 
सत्यं पथ्यतमं च तादृशमरिं सामाङ्गदेनाह यः
 
    सोऽयं सत्त्वघनः सदाप्तकरुणः स्यात्सत्त्वशुद्ध्यै विभुः ॥ १६२ ॥
 
आत्मश्वासमतश्रुतिप्रथितसन्मन्त्रास्त्रसंमानना-
 
    वाप्ताशीविषबन्धनानुसरणाच्छन्नात्मभूमा विभुः।
 
पायाद्भक्तिभरद्रुतागतिवशप्रोद्धूतपक्षानिल-
 
    ध्वस्ताहिव्रजपक्षिराजसखितासंसूचितस्वोन्नतिः ॥ १६३ ॥
 
कर्तुं साधुपथे खलं दशमुखं यो भीषणेनैव तं
 
    लीलोत्सृष्टनिजाशुगाशुविदलन्मौलिं विधाय क्षणात्।
 
श्रान्तं शान्तभुजावलेपमनयल्लङ्कामलं कातरं
 
    सर्वानुग्रहसादरं श्रुतिवचःसारं तमीशं श्रये॥ १६४ ॥
 
तूलं मारुतवज्जगन्निखिलमामूलं हरन्तं क्षणात्
 
    कालं कोऽपि विजेतुमात्तजननो नालं त्रिलोक्यामिति।
 
स्पष्टं यो विदधे दशाननहठात्काराघबुद्धं खलं
 
    निद्रालुं चिरमाशरं तमवशं हत्वा विभुं तं श्रये ॥ १६५ ॥
 
तेजो भाति पतिव्रतासु परमं दान्तासु गूढात्मना
 
    प्रादुर्भूय दहेत्तु जातु तदिदं मिथ्याप्यवज्ञाकृतः।
 
इत्येतद्विशदीचकार कुहनासीतावधात् पापिनं
 
    हत्वा शक्रजितं निजानुजनिना यस्तं सदा संश्रये ॥ १६६ ॥
 
यश्चक्रीकृतचापदण्डविगलत्काण्डाग्निखण्डीभव-
 
    द्वेतण्डव्रजवाजिपत्तिरथिकासृग्वाहिनीनां शतैः।
 
कुर्वन्नर्णवमाशु पूर्णहृदयं स्वावाप्तशोषं पुरा
 
    निन्ये मूलबलं च कालनिलयं शूरं परं तं श्रये ॥ १६७ ॥

नृत्यत्तुङ्गतुरङ्गगण्डविगलद्दानान्धदन्तावल-
द्वेलाक्षोभितवाधिपत्तिरथिकस्फीतं च मौलं बलम् ।
झञ्झावात इवाशुगोऽतिगहनं रम्भावनं पातयन्
कालाग्नेरपि भीषणः कटुरुषा रामो रणे राजते ॥ १६८ ॥

वीर्यं वारिजविष्टराब्ववरगं वीरुद्गतं विस्मयं
मैत्रीं मित्रतनूभवस्य महितां भक्तिं परां पावनेः ।
नैयत्यं नियतेर्नृणां च समये संदर्शयन् यः स्वयं
स्वेच्छास्वीकृतबन्धनो भवभयात् पायात् स नश्चिद्घनः ॥१६९॥

निर्वेदं सुतमुख्यबन्धुनिधना यात्वापि जात्वादरा-
न्मामेतद् बत यातु यातुशरणं रक्षामि रौक्ष्यं विना ।
संचिन्त्येति हृदि स्वयं सकरुणः सर्वास्त्रगं कौशलं
संदर्श्यातिचिरं निजं विजयते विद्रावयन् रावणम् ॥१७०॥

विख्यातं द्युमणेर्निजान्वयमणेर्दातुं दयावारिधिः
स्तोत्रं किञ्चन कुम्भसंभवमुखात् संप्राप्य वीरः स्वयम् ।
दात्र्यै वैरिजयस्य राक्षसरणे काल्यै महत्यै बलीन्
मौलीनेव हरन्नरेः शरवरैः श्रेयो दिशेन्मे प्रभुः ॥१७१॥

दृष्ट्वा रामपदाब्जदास्यमहितापत्यान्प्रहृष्टान् सुरान्
स्मृत्वा विश्रुतरामरोषकृदघं मोघं स्वसूनुद्वयम् ।
व्रीतेनानुमते सुराधिपतिना गीते सुरैः स्वोचिते
नीते मातलिना स्थितो विजयते तुङ्गे शताङ्गे विभुः ॥१७२॥

संछिन्नेष्वपि मस्तकेषु विशिखैर्नैकेषु रक्षःपते-
रालोक्याधिकरूक्षतां हृदि धृतां निःसत्त्वगन्धागमाम् ।
निःसत्त्वं वपुराशु चास्य कलयन्नृत्यन्निलिम्पाङ्गना-
संगीतस्तुतवैभवः सुरनुतो रामोऽभिरामोऽवतु ॥१७३॥

शस्त्राघातभवातुलानलशिखादीप्तान्तरिक्षाङ्गणं
बाणाग्रस्फुरितस्फुलिङ्गभयसंभ्राम्यत्सुपर्वाङ्गनम् ।
निश्चेष्टायुधहस्तविस्मितचमूरुद्धाहवाभ्यन्तरं
युद्धं क्रुद्धरघूत्तमाशरवरारब्धं विभात्यद्भुतम् ॥१७४॥

वर्षन् हर्षरसं हृदि क्षितिभुवोऽमर्षं परं रक्षसा-
माधिं चानवधिं द्विषद्गृहजुषां मोदं मुनीनामपि ।
बन्दीमोक्षमुदं सुपर्वसुदृशां हत्वा रिपुं तादृशं
साफल्यात्समरे सुखं च सुहृदां वीरः परो मे गतिः ॥१७५॥

पुष्पासारपिनद्धदुर्दिननभोभागप्रनृत्ताप्सरः-
संगीतध्वनिसंभृतामरजयारावाप्तसत्यस्तुतिः ।
पादान्ते प्रणतः प्रभञ्जनभुवाश्लिष्यानुजं हर्षयन्
रक्षोराजहरीशमुख्यविनुतो वीरो रणे राजते ॥ १७६ ॥

तापं स्वोचितमाप भानुरचिरात्तं तु त्रिलोकी जहौ
शैत्यं प्राप निजं शशी दिवि परं रक्षःकुलं तज्जहौ ।
प्रासादं प्रमदादगात् सुरपतिः स्वीयं प्रसादात् प्रभो-
र्धूर्ते यातुकुलाधमे दशमुखे याते कथाशेषताम् ॥ १७७ ॥

अंसे दक्षमनुव्रतस्य विदधद्वामं च चापं भुजे
मुक्ताभश्रमवारिलेशविलसद्वक्त्राब्जमञ्जुस्मितः ।
शोणाभेक्षणकोणवीक्षणधृतानन्दामरौघस्तुतो
विश्वस्यार्तिहरः परो विजयते वीरो रघूणां वरः ॥ १७८ ॥

उक्तं भक्तिभुवा मरुत्तनुभुवा तेनानतेनादृतं
श्रुत्वा कान्तजयं दशाननरणे कान्तानना जानकी ।
संप्राप्येव भुजान्तरं स्वदयितस्यानल्परोमोद्गमा
मोदाश्रुप्रसरानुसारशिशिरा मुग्धातिशुद्धाऽवतु ॥ १७९ ॥

आश्वास्यासुवियोगयोग्यसमये मां सामभिः सूनृतै-
रानीयानुचरायुतावृतमिमां रक्षःपुरीं राघवम् ।
आपद्यासि जयं मुहुः परिहृतापायैरपायैर्महान्
मान्यः केन भवान्मयेति वसुधापुत्र्या स्तुतोऽव्यात्कपिः ॥ १८० ॥

कीशान् योधयितुं रणे कृमिसमीकर्तुं च रक्षःकुलं
वार्धिं वर्त्मयितुं परं पितृवनीकर्तुं पुरं वैरिणः ।
शक्तिः कस्य दशास्यमम्ब मशकीकर्तुं क्षणादस्ति ते
पातिव्रत्यमिदं विनेति विनमन् सीता हरिः पातु नः ॥ १८१ ॥

व्यूढोरस्कमहीन्द्रबाहुयुगलं कोदण्डदीव्यत्करं
धूलीधूसरमौलिमात्तविजयं तूणोन्नतांसद्वयम् ।
दृग्भूयोऽपि दिदृक्षते मम जनस्थाने यथा त्वं विभुं
त्वं मेऽद्यापि गतिर्भवेति गदितो देव्या हरिर्दीव्यति ॥ १८२ ॥
मातर्दित्ससि मे सतीष्वचरमे वात्सल्यतश्चेद्वरं
देह्याज्ञां दृढमम्ब मे दमयितुं दासीरिमा रक्षसः ।
दुष्टास्त्वय्यपि दुर्भगा गतदया वक्त्रोग्रवाचः पुरा
दन्तैः कुन्तसमैः खरैश्च नखरैरित्यानतोऽव्यात् कपिः ॥ १८३ ॥
कार्यैषा नृणा कपेऽतिकरुणा सर्वत्र वध्येष्वपि
प्रायः कोऽपि न नापराध्यति परं सन्नासते द्रुह्यति ।
मुञ्चैताः करुणा मदेकशरणा दुष्टाश्रयाद् दूषिता
इत्युक्त्वा गलदश्रुलोचनयुता सीतातिशीतावतु ॥ १८४ ॥
कान्ताद्रोहकृतोऽनुगानपि स ते कान्तोऽवधीत् क्रोधतो
यो वेदैर्निखिलैः कृपाजलनिधिर्योगीश्वरो गीयते ।
त्वद्द्रोहेऽपि धृतासु देवि दयसे माता त्वमेतासु चे-
द्वेदास्तेऽपि विदुर्न तेऽम्ब विभुतामित्यानतोऽव्यात् कपिः ॥ १८५ ॥
अस्नाता रणधूसरं धृतजटं वेणीभवन्मूर्धजा
चीराप्तं मलिनाम्बरा रिपुरणोऽकुण्ठं चिरोत्कण्ठिता ।
धीरं चापलवर्जिताद्य तमहं देवं दिदृक्षेऽसमं
रक्षोनाथ नयाशु मामिति वदन्त्यव्याजमव्यात् सती ॥ १८६ ॥
रक्षःकीर्तितकान्तवाक्यवशतासंप्राप्तभूषाम्बर-
स्रग्गन्धादिविभूषिताशरवधूस्तुत्यापि संहर्षिता ।
आशङ्क्याशुभमात्मनः प्रतिपदं दीनेन सा चेतसा
सौवर्णीं शिबिकामवाप्य महिता सीता हिताद्यास्तु मे ॥ १८७ ॥
दृष्ट्वा दीनतरं द्रुतं कपिकुलं रक्षोभटावज्ञया
वेत्राघातरुजा दधत्कलकलं सीतादिदृक्षाकुलम् ।
संतप्तः स्वजनान् वदन्नपि कपीन् संचार्य सीतां पदा
वात्सल्यं स्वजने परं विजयते विख्यापयन् राघवः ॥ १८८ ॥

पूतां पावनिना पुरापि विदितां नीतां परं रक्षसा
नीतां भूमिसुतां चिरादधिगतां कान्तां कृशाङ्गीं विभुः ।
क्रूरैर्वज्रखरैः प्रियां विजयते विध्यन् वचोभिः क्रुधा
ख्यातानामपि दर्शयन् क्षितितले लोकापवादाद्भयम् ॥ १८९ ॥
अम्भोदादिव चातकी कटुरवं वज्रं चिरोत्कण्ठिना
स्निग्धाद्रूक्षमवाप्य विप्रियवचो वह्निप्रवेशोद्यता ।
साध्वीनां समुपादिशत् क्षितिसुता संभावितानां प्रियै-
र्मिथ्यावादविदूषितात्मभरणान्मृत्युर्महीयानिति ॥ १९० ॥
पाणिश्चेद्विधितो धृतोऽपि न मतो भक्तेः प्रसक्तिः कुतः
शीलं चेत्परिशीलितं न विमलं का वा कथा मे कुले ।
स्त्रीत्वं हन्त पुरस्कृतं लघुतया चारित्रशङ्का कृते-
त्युक्त्वा सा विदधेऽश्रुणा बत गलद्बाष्पां च सर्वंसहाम् ॥ १९१ ॥
सीतां माङ्गलिकाप्लवाम्बुकणिकाशीतालकैरन्वितां
निष्यन्दन्मकरन्दमाल्यमधुरामोदानुगालिस्तुताम् ।
सौवर्णीं प्रतिमामिवामलतमां सप्तार्चिषा संस्तुतां
देवीं दाशरथेः पुरः स्मितमुखीं वन्दे विनीतां विभोः ॥१९२॥
त्रैलोक्यार्तिकृदाशराधमवधप्रीतेश्वराद्यर्थना-
भूमस्मारितभक्तवर्यभरताश्वासाधिकात्वरः ।
लङ्कानाथपदाभिषेचितसुहृत्संमानितात्मानुगो
हृष्यन्पुष्पकमास्थितो जिगमिषुः साकेतमव्याद्विभुः ॥१९३॥
पार्श्वस्थां परिदर्शयन्प्रमुदितां प्राप्तां कथञ्चित्प्रियां
तांस्तान्सेतुमुखाञ्जवेन परितः पूतान्प्रदेशान्बहून् ।
वाचा कर्णयुगे सुधारसमुचालीकं हरन्मानसं
वैदेह्या विहरन् विमानवरगो रामोऽभिरामोऽवतु ॥१९४॥
भारद्वाजमुनीश्वराश्रमसुखापेतातुलाजिश्रमो
मारुत्याप्तनिजागमालिहृषितोत्कण्ठानुजावेक्षितः ।
नन्दिग्रामगतो निजानपि जनानानन्दयन्निर्मलो
नक्षत्रान्तरगो निशाकर इव प्रेयान् स जीयाद्विभुः ॥१९५॥

चीराप्तं जटिलं सिराततततुं दृष्ट्वा चिरेणानुजं
पादान्ते पतितं प्रमोदविवशं श्लिष्यन् समुत्थाप्य तम् ।
आनन्दाश्रुभिरर्गलाविरहितैः सिञ्चन् शिरस्यानते
भक्तानामिव धुर्यमुं विजयते प्रेम्णाऽभिषिञ्चन् विभुः ॥१९६॥

विश्वानन्दकरं विशोधितजटं विद्युद्विशिष्टाम्बरं
त्वङ्गद्रङ्गतुरङ्गसूतभरतं तुङ्गं शताङ्गं गतम् ।
सौधोल्लासिसुदृक्कराब्जविगलल्लाजाभिवृष्टं विभुं
भूषोद्यन्मणिनिर्जिताम्बरमणिं सेवे स्वचिन्तामणिम् ॥ १९७ ॥

दिव्यस्त्रीकरमुक्तपुष्पनिकरासारामृतार्द्राङ्गणं
गायत्किन्नरकामिनीकुलघनं नृत्यन्निलिम्पाङ्गनम् ।
दूरादागतनिर्जरश्रमहरोत्तुङ्गध्वजाग्रांशुकं
सौधं तद्रघुपुङ्गवस्य कलये राज्याभिषेकोत्सवे ॥ १९८ ॥

उद्यद्भानुकरस्फुरन्मणिलसद्दीपे महामण्डपे
पीठे रत्नमये स्थितं रविसमे संसेवितं सीतया ।
सिक्तं वज्रिमुखैः सुरैर्मधुरया मन्दाकिनीधारया
सर्वैः सिन्धुजलैर्द्वयैश्च विमलैः पूतैर्वसिष्ठादिभिः ॥ १९९ ॥

वज्रिप्रेरितमारुतार्पितमहाहारस्फुरद्वक्षसं
सद्यः शोधितशातकुम्भरुचिभृत्पीताम्बरालङ्कृतम् ।
मन्दारादिमरुत्पुरीतरुसुमैरभ्यर्चितं निर्जरै-
र्वीणाद्यातुलवाद्यहृद्यनिनदैः संसेवितं वन्दिभिः ॥ २०० ॥

मन्वाद्यावनिपालमान्यमकुटालङ्कारशोभाभृतं
सेवातत्परतागतैरभिवृतं भूपैरलब्धान्तरैः ।
आनन्दाम्बुघनानिमेषनयनं कौसल्ययाऽवेक्षितं
सुग्रीवेण विभीषणेन चमरीवालेन संवीजितम् ॥ २०१ ॥

शत्रुघ्नार्पितचन्द्रमण्डललसच्छ्वेतातपत्रश्रियं
मन्दस्मेरमुखाम्बुजं मनुकुलालङ्कारमीडे विभुम् ।
सिञ्चन्तं करुणारसामृतझरीशीतैः कटाक्षैर्जनान्
दानावाप्तघनार्थिसार्थविनुतं संस्तूयमानं सुरैः ॥ २०२ ॥

संपूर्णमिदं काव्यम् ।

# काशिकराजकीयसंस्कृतमहाविद्यालयीय-
# सरस्वतीभवन-ग्रन्थमाला

(प्राप्तिस्थानम्—अधीक्षक, राजकीय मुद्रणालय, इलाहाबाद।)

(१) किरणावलीभास्करः (वैशेषिकम्) श्रीमदुदयनाचार्यकृतकिरणावली-द्रव्यप्रकरणटीकारूपः। पद्मनाभमिश्रविरचितः। म० म० प० गोपीनाथ-कविराजमहोदयैर्भूमिकादिभिः परिष्कृत्य सम्पादितः। १–१२–०

(२) अद्वैतचिन्तामणिः (अद्वैतवेदान्तः) रङ्गोजिभट्टविरचितः। भूमिकादिभिः परिष्कृत्य साहित्याचार्य प० नारायणशास्त्रिखिस्तेशर्मणा सम्पादितः। १–१२–०

(३) वेदान्तकल्पलतिका (अद्वैतवेदान्तः) मधुसूदनसरस्वतीस्वामिभिर्विरचिता। भूमिकादिभिः परिष्कृत्य व्याकरणाचार्य प०रामाज्ञापाण्डेयशर्मणा सम्पादिता। १–१२–०

(४) कुसुमाञ्जलिबोधनी (न्यायः) श्रीमदुदयनाचार्यकृतकुसुमाञ्जलिटीकारूपा, वरदराजविरचिता। म० म० प० गोपीनाथकविराजमहोदयैर्भूमिका-दिभिः परिष्कृत्य सम्पादिता। २–०–०

(५) रससारः (वैशेषिकम्) श्रीमदुदयनाचार्यकृतकिरणावलीगुणप्रकरणटीका-रूपः, भट्टवादीन्द्रविरचितः। म० म० प० गोपीनाथकविराजमहोदयै-र्भूमिकादिभिः परिष्कृत्य सम्पादितः। १–२–०

(६) भावनाविवेकः (प्रथमो भागः) (मीमांसा) श्रीमन्मण्डनमिश्रविरचितः, भट्टोम्बेककृतटीकासहितः। म० म० डा० गङ्गानाथझामहोदयैर्भूमिकादिभिः परिष्कृत्य सम्पादितः। ०–१२–०

„ (द्वितीयो भागः) „ „ ०–१२–०

(७) योगिनीहृदयदीपिका (प्रथमो भागः) (तन्त्रम्) वामकेश्वरतन्त्रान्तर्गत-योगिनीहृदयटीकारूपा। अमृतानन्दनाथविरचिता। म० म० प०गोपीनाथ-कविराजमहोदयैर्भूमिकादिभिः परिष्कृत्य सम्पादिता। १—८—०

" (द्वितीयो भागः) " " १—४—०

(८) काव्यडाकिनी (काव्यशास्त्रम्) गङ्गानन्दकवीन्द्रविरचिता, साहित्योपाध्याय-प० होशिङ्गजगन्नाथशास्त्रिशर्मणा भूमिकादिभिः परिष्कृत्य सम्पादिता। ०—१०—६

(९) भक्तिचन्द्रिका (प्रथमो भागः) (भक्तिशास्त्रम्) शाण्डिल्यभक्तिसूत्रटीका-रूपा। नारायणतीर्थविरचिता। म० म० प० गोपीनाथकविराजमहोदयैः प्रास्ताविकलेखपुरःसरं सम्पादिता। ०—१५—०

" (द्वितीयो भागः) प० अनन्तशास्त्रीफडकेमहोदयैः सम्पादिता। १—८—०

(१०) सिद्धान्तरत्नम् (प्रथमो भागः) (गौडीयवैष्णवदर्शनम्) बलदेवविद्या-भूषणविरचितम्। म० म० प० गोपीनाथकविराजमहोदयैः प्रास्ताविक-लेखपुरःसरं सम्पादितम्। १—०—२

" (द्वितीयो भागः) २—१२—०

(११) श्रीविद्यारत्नसूत्रम् (तन्त्रम्) गौडपादविरचितम्, शङ्करारण्यकृतटीका-सहितम्। साहित्याचार्यपण्डितनारायणशास्त्रिखिस्तेशर्मणा भूमिकादिभिः परिष्कृत्य सम्पादितम्। ०—६—०

(१२) रसप्रदीपः (अलङ्कारशास्त्रम्) प्रभाकरभट्टविरचितः। साहित्याचार्यप०-नारायणशास्त्रिखिस्तेशर्मणा भूमिकादिभिः परिष्कृत्य सम्पादितः। १—२—०

(१३) सिद्धसिद्धान्तसंग्रहः (नाथमार्गः) बलभद्रविरचितः। म० म० प० गोपीनाथकविराजमहोदयैर्भूमिकादिभिः परिष्कृत्य सम्पादितः। ०—१४—०

(१४) त्रिवेणिका (अलङ्कारशास्त्रम्) आशाधरभट्टविरचिता। प्रोफेसरबटुक-नाथ-एम०ए०शर्मणा, साहित्योपाध्यायहोशिङ्गजगन्नाथशास्त्रिणा च भूमिका-दिभिः परिष्कृत्य सम्पादिता। ०—१४—०

(१५) त्रिपुरारहस्यज्ञानखण्डम् (प्रथमो भागः) (तान्त्रिकदर्शनम्) म० म०

प० गोपीनाथकविराजमहोदयैः प्रास्ताविकलेखपुरःसरं सम्पादितम्। ०—१४—०
,, ( द्वितीयो भागः ) ,, २—४—०
,, ( तृतीयो भागः ) ,, २—०—०
,, ( चतुर्थो भागः ) सभूमिकः। ,, १—८—०

( १६ ) काव्यविलासः ( अलङ्कारशास्त्रम् ) चिरञ्जीवभट्टाचार्यविरचितः। प्रोफेसरबटुकनाथ—एम०ए०साहित्योपाध्यायेन, साहित्योपाध्यायहोशिङ्गजगन्नाथशास्त्रिणा च भूमिकादिभिः परिष्कृत्य सम्पादितः। १—२—०

( १७ ) न्यायकलिका ( न्यायः ) भट्टजयन्तविरचिता। म० म० डा० गङ्गानाथझामहोदयैर्भूमिकादिभिः परिष्कृत्य सम्पादिता। ०—१४—०

( १८ ) गोरक्षसिद्धान्तसंग्रहः ( प्रथमो भागः ) ( नाथमार्गः ) म० प० प० गोपीनाथकविराजमहोदयैः प्रास्ताविकलेखपुरःसरं सम्पादितः। ०—१४—०

( १९ ) प्राकृतप्रकाशः ( प्रथमो भागः ) ( प्राकृतव्याकरणम् ) वररुचिविरचितः। वसन्तराजकृतसञ्जीवन्या, सदानन्दकृतसुबोधिन्या च टीकया सहितः। प्रोफेसरबटुकनाथ—एम०ए०साहित्योपाध्यायेन, बलदेवोपाध्याय—एम०ए० साहित्योपाध्यायेन च प्रास्ताविकलेखपुरःसरं सम्पादितः। २—४—०
,, ( द्वितीयो भागः ) ,, ,, २—१२—०

( २० ) मांसतत्त्वविवेकः ( धर्मशास्त्रम् ) विश्वनाथपञ्चाननभट्टाचार्यविरचितः। म० म० प० गोपीनाथकविराजमहोदयैर्लिखितेन प्राक्कथनेन सह साहित्योपाध्यायहोशिङ्गप०जगन्नाथशास्त्रिणा भूमिकादिभिः परिष्कृत्य सम्पादितः। ०—१२—०

( २१ ) न्यायसिद्धान्तमाला ( प्रथमो भागः ) ( न्यायः ) जयरामन्यायपञ्चाननभट्टाचार्यविरचिता। डा० मङ्गलदेवशास्त्रि-एम्० ए०, डी० फिल०-महोदयैर्भूमिकादिभिः परिष्कृत्य सम्पादिता। १—२—०
,, ( द्वितीयो भागः ) ,, ,, २—०—०

( २२ ) धर्मानुबन्धिश्लोकचतुर्दशी ( धर्मशास्त्रम् ) श्रीशेषकृष्णविरचिता,

रामपण्डितकृतटीकासहिता, साहित्याचार्यखिस्तेप०नारायणशास्त्रिणा भूमिकादिभिः परिष्कृत्य सम्पादिता। १–०–०

(२३) नवरात्रप्रदीपः (धर्मशास्त्रम्) नन्दपण्डितधर्माधिकारिविरचितः। म० म० प० गोपीनाथकविराजमहोदयलिखितप्राक्कथनेन सह धर्मशास्त्रिणा बरकलेप०वैजनाथशास्त्रिणा भूमिकादिभिः परिष्कृत्य सम्पादितः। २–०–०

(२४) रामतापिनीयोपनिषद् (उपनिषद्) 'रामकाशिका', 'आनन्दनिधि'-नामिकाभ्याम् आनन्दवनविरचिताभ्यां पूर्वोत्तरतापिनीटीकाभ्यां सहिता। म०म० प० गोपीनाथकविराजमहोदयलिखितप्राक्कथनेन सह साहित्योपाध्यायानन्तरामशास्त्रिवेतालेन भूमिकादिभिः परिष्कृत्य सम्पादिता। ३–१२–०

(२५) सापिण्ड्यकल्पलतिका (धर्मशास्त्रम्) आपदेवापराभिधानसदाशिवदेवेन विरचिता, नारायणदेवकृतटीकासहिता। साहित्योपाध्यायजगन्नाथशास्त्रिहोशिङ्गेन भूमिकादिभिः परिष्कृत्य सम्पादिता। १–४–०

(२६) मृगाङ्करेखा (नाटिका) विश्वनाथदेवकविविरचिता। साहित्याचार्यखिस्ते-नारायणशास्त्रिणा भूमिकादिभिः परिष्कृत्य सम्पादिता। १–०–०

(२७) विद्वच्चरितपञ्चकम्। (चम्पूरूपश्चरितनिबन्धः) साहित्याचार्यखिस्ते-नारायणशास्त्रिणा प्रणीतम्। म० म० प० गोपीनाथकविराजमहोदय-लिखितभूमिकया सहितम्। २–०–०

(२८) व्रतकोशः (धर्मशास्त्रम्) साहित्योपाध्यायहोशिङ्गजगन्नाथशास्त्रिणा सङ्कलितः। म०म० प० गोपीनाथकविराजमहोदयलिखितप्राक्कथनेन सहितः। ४–०–०

(२९) वृत्तिदीपिका (व्याकरणम्) मौनिश्रीकृष्णभट्टविरचिता। व्याकरणसाहित्याचार्यभारद्वाजप०गङ्गाधरशास्त्रिभिर्भूमिकादिभिः परिष्कृत्य सम्पादिता। १–२–०

(३०) पदार्थमण्डनम् (वैशेषिकम्) श्रीवेणीदत्तविरचितम्। व्याकरणाचार्य-प० गोपालशास्त्रिनेनेमहोदयैर्भूमिकादिभिः परिष्कृत्य सम्पादितम्। ०–१४–०

(३१) तन्त्ररत्नम् (प्रथमो भागः) (मीमांसा) पार्थसारथिमिश्रविरचितम्।

म० म० डा० गङ्गानाथझामहोदयैः सम्पादितम् । १—१४—०

„ ( द्वितीयो भागः ) प० गोपालशास्त्रिनेनेमहोदयैः सम्पादितम् । २—४—०

( ३२ ) **तत्त्वसारः** (न्यायः) म०म० प० राखालदासन्यायरत्नविरचितः । काशी-विश्वविद्यालयाध्यापकैः प०हरिहरशास्त्रिभिर्भूमिकादिभिः परिष्कृत्य सम्पादितः । १—०—०

( ३३ ) **न्यायकौस्तुभः** ( प्रथमो भागः ) ( प्रत्यक्षखण्डम् ) ( न्यायशास्त्रम् ) महादेवपुणतामकरविरचितः । डा० उमेशमिश्रैर्भूमिकादिभिः परिष्कृत्य सम्पादितः । ३—४—०

( ३४ ) **अद्वैतविद्यातिलकम्** ( प्रथमो भागः ) ( शाङ्करवेदान्तः ) श्रीसमरपुङ्गव-दीक्षितविरचितम्, श्रीधर्मय्यदीक्षितविरचितटीकासहितम् । गणपति-लालझा-एम०ए०महोदयेन भूमिकादिभिः परिष्कृत्य सम्पादितम् । १—४—०

( ३५ ) **धर्मविजयनाटकम्** ( नाटकम् ) भूदेवशुक्लविरचितम् । श्रीप०नारायण-शास्त्रिखिस्तेसाहित्याचार्यमहोदयैर्भूमिकादिभिः संभूष्य सम्पादितम् । १—४—०

( ३६ ) **आनन्दकन्दचम्पूः** (चम्पूः) मित्रमिश्रविरचिता, महामहोपाध्यायैर्गोपीनाथ-कविराजमहोदयैर्लिखितेन प्राक्कथनेन समेता, साहित्याचार्येण प०नन्दकिशोर-शर्मणा सम्पादिता । ३—८—०

( ३७ ) **उपनिदानसूत्रम्** ( सामवेदीयच्छन्दोग्रन्थः ) डा० मङ्गलदेवशास्त्रिभि-र्भूमिकया संभूष्य सम्पादितम् । १—०—०

( ३८ ) **किरणावलीप्रकाशदीधितिः** ( गुणप्रकरणम् ) ( वैशेषिकम् ) रघुनाथ-शिरोमणिविरचिता । प० बद्रीनाथशास्त्रिणा सम्पादिता । १—१२—०

( ३९ ) **रामविजयमहाकाव्यम्** ( काव्यम् ) रूपनाथविरचितम् । प० गण-पतिलालझा-एम०ए०महोदयेन सम्पादितम् । २—०—०

( ४० ) **कालतत्त्वविवेचनम्** ( प्रथमो भागः ) ( धर्मशास्त्रम् ) रघुनाथ-भट्टविरचितम् । म० म० प० गोपीनाथकविराजमहोदयैर्लिखितेन प्राक्कथनेन समेतम् । साहित्याचार्येण प०नन्दकिशोरशर्मणा सम्पादितम् । ४—०—०

„ ( द्वितीयो भागः ) „ „ ३—८—०

(४१) सिद्धान्तसार्वभौमः (प्रथमो भागः) (ज्यौतिषम्) मुनीश्वरविरचितः। ज्यौतिषाचार्येण मुरलीधरठक्कुरमहोदयेन भूमिकादिभिः परिष्कृत्य सम्पादितः। ३-०-०

„ (द्वितीयो भागः) „ „ २-०-०

(४२) भेदसिद्धिः (न्यायः) विश्वनाथभट्टाचार्यविरचिता। व्याकरणन्यायाचार्येण प० सूर्यनारायणशुक्लेन टिप्पण्यादिभिरलङ्कृत्य सम्पादिता। १-१२-०

(४३) स्मार्तोल्लासः (प्रथमो भागः) (कर्मकाण्डम्) शिवप्रसादविरचितः। प० भगवत्प्रसादमिश्रवेदाचार्येण भूमिकया टिप्पण्यादिभिश्च परिष्कृत्य सम्पादितः। १-८-०

„ (द्वितीयो भागः) „ „ २-१२-०

„ (तृतीयो भागः) „ „ ०-१४-०

(४४) शूद्राचारशिरोमणिः (प्रथमो भागः) (धर्मशास्त्रम्) साहित्याचार्येण प० नारायणशास्त्रिखिस्तेमहोदयेन भूमिकादिभिः परिष्कृत्य सम्पादितः। २-४-०

„ (द्वितीयो भागः) „ „ ०-१२-०

(४५) किरणावलीप्रकाशः (गुणप्रकरणम्) (वैशेषिकम्) (प्रथमो भागः) वर्धमानविरचितः। म० म० प० गोपीनाथकविराजमहोदयैर्लिखितेन प्राक्कथनेन समेतः। एम०ए०प०बद्रीनाथशास्त्रिणा सम्पादितः। १-८-०

„ (द्वितीयो भागः) „ „ १-८-०

(४६) काव्यप्रकाशदीपिका (प्रथमो भागः) (अलङ्कारशास्त्रम्) श्रीचण्डीदासविरचिता। एम०ए० शिवप्रसादभट्टाचार्येण सम्पादिता। १-१२-०

(४७) भेदजयश्रीः (माध्ववेदान्तः) श्रीतर्कवागीशभट्टवेणीदत्ताचार्यविरचिता। एम० ए० इत्युपाधिधारिणा त्रिभुवनप्रसादोपाध्यायेन व्याकरणाचार्येण भूमिकादिभिः परिष्कृत्य सम्पादिता। १-४-०

(४८) सम्यक्सम्बुद्धभाषितं प्रतिमालक्षणम् (शिल्पशास्त्रम्) विश्वभारतीयशान्तिनिकेतनस्थेन एम०ए० हरिदासमित्रमहोदयेन संबुद्धभाषितप्रतिमा-

लक्षणविवरणयभिधेयया टीकयां समालोचनात्मिकया भूमिकया च परिष्कृत्य सम्पादितम् । १–४–०

( ४९ ) भेदरत्नम् ( न्यायः ) शङ्करमिश्रविरचितम् । पं० सूर्यनारायणशुक्लेन भूमिकादिभिरलङ्कृत्य सम्पादितम् । १–८–०

( ५० ) मातृकाचक्रविवेकः ( तन्त्रम् ) सटीकः । स्वतन्त्रानन्दनाथविरचितः । म० म० प० गोपीनाथकविराज–एम० ए०महोदयैर्लिखितेन प्राक्कथनेन समेतः । व्याकरणाचार्येण प० ललिताप्रसादडबरालमहोदयेन सम्पादितः । २–०–०

( ५१–५२ ) ( a ) अद्वैतसिद्धान्तविद्योतनम् ( वेदान्तः ) ब्रह्मानन्दसरस्वतीविरचितम् । ( b ) नृसिंहविज्ञापनम् (वेदान्तः) नृसिंहाश्रमविरचितम् । प० सूर्यनारायणशुक्लेन टिप्पण्या भूमिकादिभिश्च संभूष्य सम्पादितम् । १–१२–०

( ५३ ) नृसिंहप्रसादव्यवहारसारः ( धर्मशास्त्रम् ) दलपतिराजविरचितः । प० विनायकशास्त्रिटिल्लुमहोदयेन भूमिकादिभिः परिष्कृत्य सम्पादितः । ४–०–०

( ५४ ) नृसिंहप्रसादप्रायश्चित्तसारः ( धर्मशास्त्रम् ) दलपतिराजविरचितः । प० नन्दकिशोरशर्मणा साहित्याचार्येण सम्पादितः । ३–४–०

( ५५ ) नृसिंहप्रसादश्राद्धसारः ( धर्मशास्त्रम् ) म० म० प० विद्याधरमिश्रेण सम्पादितः । २–०–०

( ५६ ) भगवन्नाममाहात्म्यसंग्रहः ( भक्तिशास्त्रम् ) रघुनाथेन्द्रयतिविरचितः । प० अनन्तशास्त्रिफडकेकृतटीकायुतस्तेनैव सम्पादितश्च । २–१२–०

( ५७ ) गणितकौमुदी ( गणितम् ) (प्रथमो भागः) नारायणपण्डितविरचिता । प० पद्माकरद्विवेदेन सम्पादिता । १–१०–०

„ ( द्वितीयो भागः ) „ „ २–८–०

( ५८ ) ख्यातिवादः ( वेदान्तः ) शङ्करचैतन्यभारतीविरचितः । म० म० प० गोपीनाथकविराजमहोदयलिखितप्राक्कथनेन समेतः । स्वयं ग्रन्थकृतैव सम्पादितः । १–४–०

(५६) सांख्यतत्त्वालोकः (सांख्यम्) हरिहरानन्दविरचितः। म० म० प० गोपीनाथकविराजमहोदयलिखितेन प्राक्कथनेन समन्वितः। एम० ए० ज्ञानेश्वरघोषमहोदयेन भूमिकादिभिः परिष्कृत्य सम्पादितः। १–६–०

(६०) शाण्डिल्यसंहिता (प्रथमो भागः) (पाञ्चरात्रम्) प० अनन्तगोपालफडकेमहोदयेन सम्पादिता। १–८–०

„ (द्वितीयो भागः) „ „ २–१२–०

(६१) दक्षिणामूर्तिसंहिता (तन्त्रम्) प० नारायणशास्त्रिखिस्तेमहोदयेन सम्पादिता। १–०–०

(६२) नृसिंहप्रसादतीर्थसारः (धर्मशास्त्रम्) प० सूर्यनारायणशुक्लेन सम्पादितः। १–८–०

(६३) भक्त्यधिकरणमाला (भक्तिशास्त्रम्) (प्रथमो भागः) नारायणतीर्थविरचिता। प० अनन्तशास्त्रिफडकेमहोदयेन सम्पादिता। १–४–०

(६४) वसिष्ठदर्शनम् (वेदान्तः) डा० बी० एल० आत्रेयमहोदयेन संगृहीतम्, सम्पादितं च। ५–०–०

(६५–६७)—(a) त्रिस्थलीसेतुः (धर्मशास्त्रम्) भट्टोजिदीक्षितविरचितः।
(b) तीर्थेन्दुशेखरः (धर्मशास्त्रम्) नागेशभट्टविरचितः।
(c) काशीमोक्षविचारः। सुरेश्वराचार्यविरचितः। प० सूर्यनारायणशुक्लेन भूमिकया संभूष्य सम्पादितः। १–८–०

(६८) मध्वमुखालङ्कारः (माध्ववेदान्तः) वनमालिमिश्रविरचितः। म० म० प० गोपीनाथकविराजमहोदयलिखितप्राक्कथनसहितः। प० नृसिंहाचार्यवरखेडकरमहोदयेन सम्पादितः। १–८–०

* परिशिष्टम्—सारस्वतालोकः (प्रथमः किरणः, महाकविभारविपरिचयात्मकः)। म० म० प० गोपीनाथकविराजमहोदयैः सम्पादितः। १–४–०

(६९) संक्षेपशारीरकम् (प्रथमो भागः) (वेदान्तः) श्रीसर्वज्ञात्ममुनिविरचितम्, नृसिंहाश्रमविरचितया तत्त्वबोधिन्याख्यया व्याख्यया समन्वितम्। प० सूर्यनारायणशुक्लशास्त्रिणा सम्पादितम्। १–१२–०

„ (द्वितीयो भागः) „ „ १–८–०

संक्षेपशारीरकम् ( तृतीयो भागः ) " " १-८-०
" ( चतुर्थो भागः ) " " १-१२-०
" ( पञ्चमो भागः ) " " ०-१२-०

( ७० ) भास्करी ( प्रथमो भागः ) ( शैवदर्शनम् ), उत्पलकारिकाटीकाभूताया ईश्वर-प्रत्यभिज्ञाविमर्शिन्याष्टीकारूपा ( अभिनवगुप्तकृतविमर्शिनीसहिता ) भास्करकण्ठ-विरचिता। प्रो० के० ए० सुब्रह्मण्य-अय्यरमहोदयेन, डाक्टर के० सी०-पाण्डेयेन च सम्पादिता। ६-०-०

( ७१-७२ ) ( a ) भक्तिनिर्णयः ( भक्तिशास्त्रम् ), अनन्तदेवविरचितः।
( b ) नाममाहात्म्यम् ( माहात्म्यम् ), आश्रमस्वामिविरचितम्, अनन्त-शास्त्रिफडकेमहोदयेन सम्पादितम्। ०-१०-

( ७३ ) उपेन्द्रविज्ञानसूत्रम् ( वेदान्तः ) उपेन्द्रदत्तविरचितम्, सटीकम्। डॉक्टरमङ्गलदेवशास्त्रिभिः समालोचनात्मिकया भूमिकया सूच्या च परि-ष्कृत्य सम्पादितम्। १-०-०

( ७४ ) सिद्धान्तिभाष्यसहितम् आश्वलायनश्रौतसूत्रम् ( प्रथमो भागः ) ( वेदः ) डॉ० मङ्गलदेवशास्त्रिभिः ससमालोचनं सम्पादितम्। १-१-०
" ( द्वितीयो भागः ) द्वितीयाध्यायान्तम् "

( ७५ ) द्वैतनिर्णयसिद्धान्तसंग्रहः ( धर्मशास्त्रम् ) प० भानुभट्टमीमांसकविर-चितः, प० सूर्यनारायणशुक्लेन सम्पादितः। १-०-०

( ७६ ) मनोऽनुरञ्जननाटकम्, अनन्तदेवविरचितम्। प० अनन्तशास्त्रिफडके-महोदयेन सम्पादितम्। १-०-०

( ७७ ) सुभद्रापरिणयनाटकम्, रामदेवविरचितम्। प० नारायणशास्त्रिखिस्ते-महोदयेन सम्पादितम्।

( ७८ ) तत्त्वचिन्तामणिः ( न्यायः ) ( प्रथमो भागः ) आलोक-आलोकदर्पण-कण्टकोद्धार-प्रगल्भीतिटीकाभिः सहितः। प०सूर्यनारायणशुक्लेन सम्पादितः। १-४-०

( ७९ ) तौतातिकमततिलकः (मीमांसा) (प्रथमो भागः), भवदेवमिश्रविरचितः। म० म० प० चिन्नस्वामिशास्त्रि-प० पट्टाभिरामशास्त्रिभ्यां सम्पादितः। १-१२-०
" ( द्वितीयो भागः ) " " १-१०-०

,, (तृतीयो भागः) ,, ,, २-१२-०

(८०) चलराशिकलनम् (गणितम्) (प्रथमो भागः), म० म० प० सुधाकरद्विवेदविरचितम्। प० बलदेवमिश्रैः सम्पादितम्। ०-१४-०

(८१) दशपाद्युणादिवृत्तिः (व्याकरणम्) प० युधिष्ठिरमीमांसकेन भूमिकादिभिः परिष्कृत्य संपादिता। ३-४-०

(८२) विक्रमाङ्कदेवचरितमहाकाव्यम् (काव्यम्) महाकविश्रीविल्हण-विरचितम्। शास्त्रिमुरारिलालनागरसाहित्याचार्येण भूमिकादिभिः परिष्कृत्य सम्पादितम्। २-१२-०

(८३) भास्करी (द्वितीयो भागः) (शैवदर्शनम्) प्रो०के०ए०सुब्रह्मण्य-अय्यरमहोदयेन, डा० के० सी० पाण्डेयेन च संपादिता।

(८४) भास्करी (तृतीयो भागः) ,, डा०के०सी०पाण्डेयेन संपादिता।

---

# विनिमयेऽधिगम्यमानाः पत्रिकाः

१. ईस्ट एण्ड वेस्ट, इटली ।

२. भारतीय विद्या, भारतीय विद्याभवन, बम्बई ।

३. ब्रह्मविद्या, अड्यार लाइब्रेरी, अड्यार, मद्रास ।

४. जर्नल आफ दी त्रिवेन्द्रम् युनिवर्सिटी, त्रावणकोर ।

५. जर्नल आफ दी ओरियण्टल इंस्टीट्यूट, बड़ोदा ।

६. जर्नल आफ दी वेङ्कटेश्वर ओरियण्टल इंस्टीट्यूट, तिरुपति ।

७. लोकेल फ्रांसिस, हनोई, इण्डोचायना ।

८. जर्नल आफ दी अमेरिकन ओरियण्टल सोसाइटी, अमेरिका ।

९. जर्नल आफ दी बिहार रिसर्च सोसाइटी, पटना ।

१०. एनल्स आफ दी भण्डारकर ओरियण्टल रिसर्च इंस्टीट्यूट, पूना ।

११. बुलेटिन डेक्कन कालेज, पूना ।

१२. क्वार्टर्ली जर्नल आफ दी माइथिक सोसाइटी, बंगलोर ।

१३. फिलासफिकल क्वार्टर्ली, आमलनेर ।

१४. वेदवाणी, वाराणसी ।

१५. जर्नल एशियाटिक, पेरिस ।

१६. जर्नल आफ दी बम्बई युनिवर्सिटी, बम्बई ।

१७. दी इण्डियन हिस्टोरिकल क्वार्टर्ली, कलकत्ता ।

१८. दी विश्वभारती क्वार्टर्ली, शान्तिनिकेतन ।

१९. एपिग्राफिया इण्डिका, उटकमण्ड ।

२०. जर्नल आफ दी आन्ध्र हिस्टोरिकल सोसाइटी, राजमहेन्द्री ।

२१. जर्नल आफ दी रायल एशियाटिक सोसाइटी, ग्रेट ब्रिटेन ।

२२. संमेलन-पत्रिका, हिन्दी साहित्य संमेलन, प्रयाग ।

२३. आलोचना, राजकमल प्रकाशन, दिल्ली ।

२४. नागरी प्रचारिणी पत्रिका, नागरी प्रचारिणी सभा, वाराणसी ।

२५. संस्कृतम्, संस्कृतकार्यालय, अयोध्या ।

२६. वाक्, डेक्कन कालेज रिसर्च इंस्टीट्यूट, पूना ।

२७. भारतीय विद्याभवन बुलेटिन, बम्बई ।

२८. जर्नल आफ दी यू० पी० हिस्टोरिकल सोसाइटी, लखनऊ ।
२९. बुलेटिन एनालितिक, पेरिस ।
३०. दी पूना ओरियण्टलिस्ट, पूना ।
३१. जर्नल आफ दी ओरियण्टल रिसर्च, मद्रास ।
३२. सदर्न एशिया, कांग्रेस लाइब्रेरी, वाशिंगटन, अमेरिका ।
३३. संस्कृतसाहित्यपरिषत्पत्रिका, कलकत्ता ।
३४. मञ्जूषा, ८ भूपेन्द्रबोस एवेन्यू, कलकत्ता-४ ।
३५. एनल्स आफ दी ओरियण्टल रिसर्च, मद्रास ।
३६. महाराजसंस्कृतपाठशालापत्रिका, मैसूर ।
३७. दी इण्डो-एशियन कल्चर, दिल्ली ।
३८. भवितव्यम्, मोर हिन्दीभवन, नागपुर-१ ।
३९. संस्कृतरत्नाकरः, १७२-डी० कमलानगर, दिल्ली-६ ।
४०. जर्नल आफ दी सरस्वती महल लाइब्रेरी, तंजोर ।
४१. भारती, गोपालजी का रास्ता, जयपुर ।
४२. रोमांस फाइलोलॉजी, केलिफोर्निया ।
४३. वोस्टीको वेडिएनीय, मास्को ।
४४. जर्नल आफ दी गुजरात रिसर्च सोसाइटी, बम्बई ।
४५. वोन्न ओरियण्टिस, वियेना ।
४६. जर्नल आफ दी अन्नमलाई युनिवर्सिटी, अन्नमलाईनगर ।
४७. दी टोयो गकुहो, टोकियो, जापान ।
४८. समाज, काशी विद्यापीठ, वाराणसी ।
४९. जर्नल आफ दी रॉयल एशियाटिक सोसाइटी आफ बंगाल, कलकत्ता ।
५०. जर्नल आफ दी म्यूजिक एकेडमी, मद्रास ।
५१. मधुरवाणी, गदग, धारवाड़, कर्णाटक ।
५२. जैन-सिद्धान्त भास्कर, आरा ।
५३. इण्डियन फिलासफी एण्ड कल्चर, वृन्दावन ।
५४. राजस्थान भारती, बीकानेर ।
५५. शोधपत्रिका, राजस्थान विद्यापीठ, उदयपुर ।

# सारस्वती सुषमा

काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

१२ वर्षः { भाद्रपदः २०१४ } २ अङ्कः

## वासनानां विलसितम्

श्रीरघुनाथशर्मा, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी ।

अथातो वासनातत्त्वजिज्ञासा । यतो वासनात्रयमूलकः संसारः । तथा हि— प्रायणात्प्राक् परिग्रहीष्यमाणजन्मानुरूपाणां कर्मवासनानामुद्भवे प्रेत्य जन्तुस्तादृशमेव जन्म लभते । जातश्चानुभववासनाभिः प्राग्भवीयाभिस्तदानीमुद्भूताभिस्तज्जन्मानुरूपमेव चेष्टतेऽशिक्षितोऽपि । अविद्यावासनाभिश्चानादिभवसञ्चिताभिर्देहगेहादौ 'अहं मम' इत्यध्यस्यति । आत्मतत्त्वदृष्ट्या च वासनापरिक्षय एव मोक्षः । तथा हि—आत्मतत्त्वदृष्ट्याऽविद्यातद्वासनाकल्पितबाह्याध्यात्मिकाशेषप्रपञ्चाधिष्ठानतत्त्वसाक्षात्काररूपयाऽविद्यातद्वासनानां विनिवृत्तिः, अधिष्ठानरज्जुसाक्षात्कारेण सर्पादिवासनानामिव । तदुक्तं मुण्डकोपनिषदि—

> भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
> क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ इति ।

अत्र हृदयाश्रिता वासना हृदयग्रन्थिपदेनाभिधीयते । जात्यभिप्रायेणैकवचनम् । अत्र च हृदयग्रन्थिपदेनाऽविद्यावासनैवाभिप्रेता, "छिद्यन्ते सर्वसंशयाः" इत्येतत्समभिव्याहारात्; संशयस्याविद्यावासनामूलकत्वात् । अविद्यावासनानामात्मदर्शनेन प्रक्षये चेतरस्य वासनाद्वयस्य

कर्मानुभवजनितस्यापि प्रक्षयः, तस्य वासनाद्वयस्याविद्यावासनामूलकत्वात् । तत्र कर्मवासनानां धर्माधर्मरूपाणामविद्यावासनाजन्यत्वमुक्तं कारिकावल्याम्—"इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः" [१६४] इति । "इमौ धर्माधर्मौ मिथ्याज्ञानजन्यवासनाजन्यौ" इति व्याख्यातं मुक्तावल्याम् । मिथ्याज्ञानं त्वविद्या । तदेवोच्यते—"क्षीयन्ते चास्य कर्माणि" इति । अत्र च कर्मपदेन कर्मवासनाः पुण्यापुण्यरूपाः । अत्र चकारेण चानुक्ता अप्यनुभववासनाः समुच्चीयन्ते । इत्येवमात्मदर्शनेन वासनात्रयनाशः संगृहीतो भवति ।

वासनात्रयस्य संसारमूलत्वं तत्प्रक्षयस्य च मोक्षरूपत्वमभिहितं योगवासिष्ठे लघौ—"अशेषेण परित्यागो वासनानां य उत्तमः । मोक्ष इत्युच्यते सद्भिः स एव विमलक्रमः ॥" [वैरा० १।६] इति, "भोगभावनया याति बन्धो दार्ढ्यमवस्तुजः । तयोपशान्तया याति बन्धो जगति तानवम् ॥" [वैरा० ३।५७], "वासनातानवं राम मोक्ष इत्युच्यते बुधैः । पदार्थवासनादार्ढ्यं बन्ध इत्यभिधीयते ॥" [वैरा० ३।५८], "यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ।" [उत्पत्ति० १।६२], "मनसा भाव्यमानो हि देहितां याति देहकः । देहभावनया मुक्तो देहधर्मैर्न बाध्यते ॥" [उत्पत्ति० ५।३], "अविद्यया वासनया तयान्तश्चित्त-सत्तया । विलीनया त्यागवशात् परं श्रेयोऽधिगम्यते ॥" [उत्पत्ति० ६।२७], "बन्धो हि वासनाबन्धो मोक्षः स्याद् वासनाक्षयः । वासनां त्वं परित्यज्य मोक्षार्थित्वमपि त्यज ॥" [स्थिति० ५।२०], "विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः । संत्यक्तवासनान्मौ-नादृते नास्त्युत्तमं पदम् ॥" [स्थिति० ५।२६], "हे चित्त वासनाजालं बन्धाय भवतोऽभितः । यदि शाम्यसि तत् त्यक्त्वा तदाऽनन्तो जयस्तव ॥" [उपशम० ६।५७], "उन्मत्ततारण्डवस्थस्य चेतश्चेत् क्षीणवासनम् । तदस्योन्मत्तनृत्यं तु समं बुद्धसमाधिना ॥ अकर्तृ कुर्वदप्येतच्चेतः प्रतनुवासनम् । दूरंगतमना जन्तुः कथासंश्रवणे यथा ॥ अकुर्वदपि कर्त्रैव चेतः प्रघनवासनम् । निष्पन्दाङ्गमपि स्वप्ने श्वभ्रपातस्थिताविव ॥ अवासनं स्थिरं प्रोक्तं मनोध्यानं तदेव च । स एव केवलीभावः शान्ततैव च तत्सदा ॥ घनवासनमेतत्तु चेतःकर्तृत्वभावनम् । सर्वदुःखप्रदं तस्माद् वासनां तनुतां नयेत् ॥" [उपशम० ७।११, १३-१४, १७, १६] इति ।

बाह्या अप्येतदाहुः । तदुक्तं कर्मफलपरीक्षाप्रकरणे 'कार्यकारणभूताश्च तत्राविद्यादयो मताः' इति कारिकाव्याख्यावसरे तत्त्वव्याख्यायां पञ्जिकायाम्—"चित्तमेव हि संसारो रागा-दिक्लेशवासितम् । तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥" इति ।

## वासनानां विलसितम्

नन्वात्मविद्यया वासनाप्रक्षयस्वीकारे जीवन्मुक्तस्य भिक्षाटनाध्यात्मविद्योपदेशादिप्रवृत्तिर्न संभवति, प्रवृत्तेः कामनामूलकत्वात्, कामस्य वासनारूपरागमूलकत्वात्, "यद् यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्" इत्यभियुक्तोक्तेः । तथा हि— जानाति, इच्छति, यतते, चेष्टत इति क्रमः । तत्रापेक्षात्मकज्ञाने (इष्टसाधनत्वप्रकारकज्ञाने) सति तद्विषयेच्छा भवति नान्यथेत्यनुभवसिद्धम् । तादृशेन ज्ञानेन चावश्यं वासना जन्यते, अत एव तद्विषयविषया नियमेन स्मृतिरग्रे । तथा चेदमायातं ज्ञानं वासनासमुत्पादक्रमेण कामे हेतुरिति । वासनाकामयोः कार्यकारणभावसत्त्वादेव च "भिद्यते हृदयग्रन्थिः" [२।२।८] इति मुण्डकमन्त्रव्याख्यावसरे शाङ्करभाष्ये "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः" [२।३।१४] इति काठकवाक्यमुपन्यस्य कामपदेन वासना गृह्यत इत्युक्तम्, कार्यकारणयोरभेदात् । तथा च जीवन्मुक्ते वासनाऽभावात् कामाभावः, कामाभावात् प्रवृत्त्यभाव इति चेन्न; जीवन्मुक्तेऽपि संभृष्टबीजवद् वासनाऽस्तीति स्वीकारात् । तथा हि जीवन्मुक्तेऽविद्यावासनाप्रक्षयात्तन्मूलकसर्ववासनाप्रक्षयेण विषयेष्वपेक्षाबुद्धेरभावेऽपि जीवननिदानप्रारब्धजनितेच्छाधीनमिष्टसाधनत्वप्रकारकं ज्ञानमाहार्यं तस्योपजायते, तेन च ज्ञानेन वासनाप्यनुत्कटा उपजायते, अत एव सा न रागरूपा, स्वाश्रयारञ्जकत्वात् । तया च वासनया तदनुरूपा इच्छानुत्कटैव । ततश्च प्रवृत्तिरपि तादृश्येवेति न तस्याः प्रवृत्तेर्धर्माधर्मजनकत्वमिति । मिथ्याज्ञानापाये रागादिदोषापायः, तदपाये प्रवृत्त्यपाय इत्यभिप्रयतां न्यायसूत्रकृतां तदनुगामिनां च सर्वेषामत्रैव तात्पर्यं प्रतीयते । न तु जीवन्मुक्तिर्नास्तीत्यत्र, श्रुत्यादिषु तदुपलब्धेः । प्रवृत्त्यपाये धर्माधर्माभावेन जन्मापाय इत्यग्रिमवाक्येन च पूर्वत्र जन्महेतुप्रवृत्तेरेव निषेधोऽभिप्रेत इति गम्यते । शास्त्रान्तरे तु 'जीवन्मुक्तस्य वासनास्ति शुद्धा' इत्युक्तम् । तथा च लघुयोगवासिष्ठे—"भृष्टबीजोपमा भूयो जन्माङ्कुरविवर्जिता । हृदि जीवद्विमुक्तानां शुद्धा वसति वासना ॥" [उपशम० ४।१३२] । अत्र वासनाया भृष्टबीजोपमायां 'भूयो जन्माङ्कुरविवर्जिता' इति हेतुः । शुद्धत्वं च तस्या मिथ्याज्ञानजन्यवासनाऽननुविद्धत्वात् । एतदप्युक्तं लघुयोगवासिष्ठे—"वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा । मलिना जन्मनो हेतुः शुद्धा जन्मविनाशिनी ॥ अज्ञानसुघनाकारा घनाऽहङ्कारशालिनी । पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः ॥ पुनर्जन्माङ्कुरांस्त्यक्त्वा स्थिता संभृष्टबीजवत् । देहार्थं ध्रियते ज्ञातज्ञेया शुद्धेति चोच्यते ॥ [वैराग्य० १।१०-१२] । पुनर्जन्माङ्कुरान् अविद्याप्रत्ययजन्यवासनारूपानिति भावः ।

श्रीशङ्करभगवत्पदानुगास्तु जीवन्मुक्तस्य आत्मदर्शनरूपया विद्ययाऽविद्यातत्प्रत्ययानां यावत् प्रारब्धक्षयं बाध एव, न तु निवृत्तिः। यथैन्द्रजालिकप्रदर्शितवस्तुविषयप्रत्ययानां तन्मिथ्यात्व-निश्चयेऽपि न निवृत्तिः। तथा च बाधिता अविद्याप्रत्ययास्तज्जन्या वासनाश्च तत्र सन्तीति न काऽप्यनुपपत्तिः। तादृशप्रत्ययवासनाजनिताश्च प्रवृत्तयो न धर्माधर्मफलाः, जीवन्मुक्तस्य कर्तृत्वाभिमानराहित्यात्। तदुक्तं गीतासु—"यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते। हत्वापि स इमान् लोकान्न हन्ति न निबध्यते॥" [१८।१७] इति। श्रुतौ च "अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छं लोमाऽपि मे नाहीयत" [कौषी० ३।१] इति।

सिद्धान्तलेशे [चतुर्थे परिच्छेदे] तु जीवन्मुक्तिसत्त्वेऽविद्यालेशानुवृत्तिं प्रकारत्रयेणोक्त्वा जीवन्मुक्तिश्रुतेरर्थवादत्वमन्ते उक्तम्। तथा हि—"अथ कोऽयमविद्याया लेशो यदनुवर्तनात्। देहादेः प्रतिभासेन जीवन्मुक्तिरिहोच्यते ॥ १ ॥ ज्ञानेनावरणे नष्टे विक्षेपांशोऽनुवर्तते। प्रारब्धप्रतिबन्धेन स लेशस्तेन जीवनम् ॥ २ ॥ क्षालितेष्विव हिङ्ग्वादिपात्रेष्वन्ये तु वासना। नष्टानुवृत्तिमाचख्युरन्ये दग्धपटे यथा ॥ ३ ॥ विरोधिन्युदिते शेषासंभवादर्थवादताम्। सर्वज्ञात्मगुरुः प्राह जीवन्मुक्तिश्रुतेः स्फुटम् ॥४॥" इति।

अथ को नाम वासनापदार्थः। यस्मिन् सति पुरुषः साभिनिवेशं प्रवर्तते, असति तु नेति प्राप्ते उच्यते—कर्मभिः सुकृतदुष्कृतान्यतररूपैः पूर्वप्रज्ञया वा प्रमाभ्रमान्यतररूपयाऽऽत्मन्य-न्तःकरणे वा जनितः कश्चन संस्कारविशेषो वासना। वास्यते स्वरूपरूषितं क्रियते स्वाश्रयो यया सेति वासयतेः करणयुचा तत्सिद्धेः। यथा पुष्पादिना तैलादिकं वास्यते, स्वगन्धाधिवासितं क्रियते। दृश्यते च पूर्वप्रज्ञासंस्कारस्मृतीनां समानविषयकत्वेन कार्यकारणभावः। पूर्वप्रज्ञया हि स्वसमानविषयकः संस्कारस्तेन च मलिनसत्त्वाश्रितेन स्वसमानविषया स्मृतिर्जन्यते। शुद्धसत्त्वाश्रितेन तु योगिनामतीताद्यर्थविषयकः साक्षात्कार एव जन्यते। एषा च वासनासंस्कार इति, भावनेति, राग इति, आशय इति, प्रकृतिरिति, स्वभाव इति, शीलमिति च व्यवह्रियते तत्र तत्र। तथा हि—यथा मृद्गोमयाद्यनुलेपनेन भूमिः संस्कृता भवतीति तदेव तस्याः संस्कारः, तथा वासनया स्वाश्रयः संस्कृतो भवतीति वासना तस्य संस्कारः। भाव्यते साक्षात्कार्यतेऽर्थो यया सेति व्युत्पत्त्या भावनापदेनापि सोच्यते। "कृभ्वस्तयः क्रियासामान्यवचनाः" इत्यभ्युपगमेन भवतेरत्र साक्षाकारोऽर्थः, णिचस्तु तदनुकूलव्यापाररूपा भावनाऽर्थः। न च भावनया स्मृतिर्जन्यत इति कुतस्तस्याः साक्षात्कारानुकूलव्यापाररूपतेति वाच्यम्; योगिना-

मतीताद्यर्थप्रत्यक्षे, वियोगिनामविद्यमानकामिन्यादिप्रत्यक्षे, मणिरूप्यादिविदां प्रत्यक्षे च तस्याः हेतुत्वस्य क्लृप्तत्वाद् योग्यतया स्मृतिहेतावपि तत्पदप्रयोगः।

तदेतत्सर्वमुक्तं न्यायमञ्जर्यां ९७ पृष्ठे प्रमाणप्रकरणे—"इह विज्ञानजन्यस्तु संस्कारो व्यवतिष्ठते। क्रमोपचीयमानोऽसौ परातिशयकारणम्॥...यथानुवाकग्रहणे संस्थाभ्यसनकल्पितः। स्थिरः करोति संस्कारः पाठस्मृत्यादिपाटवम्॥ तथैव भावनाऽभ्यासाद् योगिनामपि मानसम्। ज्ञाने सकलविज्ञेयसाक्षात्कारे क्षमं भवेत्॥ अस्मदादेश्च रागादिमलावरणधूसरम्। मनो न लभते ज्ञानप्रकर्षपदवीं पराम्॥ प्रत्यूहभावनाऽभ्यासक्षपिताशेषकल्मषम्। योगिनां तु मनः शुद्धं कमिवार्थं न पश्यति॥" इति, "विरहोद्दीपितोद्दामकामाकुलितदृष्टयः। दूरस्थामपि पश्यन्ति कान्तामन्तिकवर्तिनीम्॥" [न्यायमञ्जर्यां प्रमाणप्रकरणे, ८३ पृष्ठे] इति च। अत्रोत्कटकामेन कान्तां भावयन्तस्तां पश्यन्तीति न विस्मर्तव्यम्। उक्तं च भामत्याम् - "शीतातुरकायकाण्डस्य गुञ्जापुञ्जे वह्निं भावयतो वह्निसाक्षात्कारो भवतीति मणिरूप्यादिविदामपि मणिरूप्यादिप्रत्यक्षं भावनाप्रकर्षजमेव। तदुक्तं हरिणा वाक्यपदीये ब्रह्मकाण्डे—'परेषामसमाख्येयमभ्यासादेव जायते। मणिरूप्यादिविज्ञानं तद्विदां नानुमानिकम्॥" [३५] इति। इयं च वासना रागपदेनापि व्यवह्रियते चेतसो रञ्जनाद् राग इति। अत एवोत्कटकामेन स्त्र्यादिविषयकरागप्रकर्षे पुरुषो रक्त इत्युच्यते।

अत एव च विविधवासनोपरक्तं चित्तं माहारजनपटेन्द्रगोपादिदृष्टान्तैरुपवर्णितं बृहदारण्यके। तथा हि—"यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तम्" [बृह० २।३।६] इति। अत्र भाष्यम्—"यथा लोके माहारजनं हरिद्रा तया रक्तं माहारजनं यथा वासो लोके। एवं स्त्र्यादिविषयसंयोगे तादृशं वासनारूपं रञ्जनाकारमुत्पद्यते चित्तस्य, येनाऽसौ पुरुषो रक्त इत्युच्यते वस्त्रादिवत्। यथा च लोके पाण्ड्वाविकम्, अवेरिदमाविकमूर्णादि। यथा च तत् पाण्डुरं भवति तथान्यद् वासनारूपम्। यथा च लोके इन्द्रगोपोऽत्यन्तरक्तो भवति, एवमस्य वासनारूपम्। क्वचिद् विषयविशेषापेक्षया रागस्य तारतम्यम्, क्वचित्पुरुषचित्तवृत्त्यपेक्षया। यथा च लोकेऽग्न्यर्चिर्भास्वरं भवति, तथा क्वचित् कस्यचिद् वासनारूपं भवति। यथा पुण्डरीकं शुक्लं तद्वदपि च कस्यचिद् वासनारूपं भवति। यथा सकृद्विद्युत्तं, यथा लोके सकृद् विद्योतनं सर्वतः प्रकाशकं भवति, तथा ज्ञानप्रकाशविवृद्ध्यपेक्षया कस्यचिद् वासनारूपमुपजायते। नैषामादिरन्तो मध्यं संख्या वा देशः कालो निमित्तं वाऽवधार्यते। असंख्येयत्वाद् वासनाया वासनाहेतूनामानन्त्यात्। दृष्टान्तास्त्विमे प्रकारप्रदर्शनार्थाः"

इति। अत्र भाष्ये रागस्य तारतम्यं क्वचिद् विषयविशेषापेक्षया, क्वचित्पुरुषचित्तवृत्त्यपेक्षये-त्युक्तम्। तस्यायमाशयः—यथा लोके काचिदनवद्या प्रकृतिसुन्दरी वनिता यथा वा तादृश एव पुरुषः, तत्र ममत्वाभिमानरहितस्यापि भवति रक्तं चेत इति तत्र विषयविशेषापेक्ष एव रागः। यत्र तु स्वभार्यापुत्रादौ प्रकृत्याऽशोभनेऽपि रक्तं चेतो भवति, तत्र रागे ममत्वालम्बना चित्तवृत्तिरेव हेतुरिति।

एवं विषयाणामपि सात्त्विकादिभेदेन चित्तवृत्तीनामपि तथाविधभेदेन रागतारतम्यं द्रष्टव्यम्। तथा च स्त्रीपुत्रादावविद्याकृतो रागः पुरुषचित्तवृत्त्यपेक्षः स्वाभाविको दुरपनोदः। तत्रेन्द्रगोपादिः सहजरक्तो दृष्टान्तः। शोभनेषु विषयेषु रागस्तु विषयविशेषापेक्षः कृत्रिमस्तत्र दोषदृष्ट्या निवर्तते। तत्र कृत्रिमराग उदाहरणं यथा माहारजनं वास इति। अत्र स्वभावशुद्धं वासो हरिद्रासम्बन्धाद् रक्तमुदाहरणम्। अत्र वाससो रागः कृत्रिमः। अत्र सहजरागस्य बहून्युदाहरणानि तु रागप्रकर्षाप्रकर्षद्योतनाय। यथा सकृद्विद्युत्तमित्युदाहरणं तु हिरण्यगर्भस्य वासनाप्रदर्शनाय। हिरण्यगर्भस्य हि बुद्धिसमष्टिरुपाधिरिति सर्वप्राणिनां बुद्धिवासनास्तत्र संस्थिता इति सकृत् सर्वार्थप्रकाशः संभवति। उक्तं चैतत् पञ्चदश्याम्—"अशेषप्राणिबुद्धीनां वासनास्तत्र संस्थिताः" [६।१६१] इति पद्येनेति। आशय इति व्यपदेशस्तु आ अतिशयेन अत्यन्तं शेते निर्व्यापारस्तिष्ठति अनभिव्यक्तिकाले स्वाश्रय इति व्युत्पत्त्या। अत्राङ् पूर्वात् शेतेः पचाद्यच्। अन्याऽप्याशयपदस्य व्युत्पत्तिरग्रे योगवैशारद्युक्ता प्रदर्शयिष्यते। आशयशब्दस्य वासनायां प्रयोगस्तु—"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" [१।२४] इत्यत्र योगसूत्रे। वासनायाः प्रकृतिपदेन व्यवहारस्तु प्रक्रियते जन्म ययेति व्युत्पत्त्या बाहुलकात् करणे क्तिन्प्रत्ययमाश्रित्य। तदुक्तं कविभिः—"सतीव योषित् प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि" [माघ० १।७२] इति।

वासनानां जन्मनिमित्तत्वं चोक्तं बृहदारण्यके—"तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" [४।४।२] इति। अत्र शाङ्करभाष्यम्—"तं परलोकाय गच्छन्तमात्मानं विद्याकर्मणी विद्या च कर्म च विद्याकर्मणी। विद्या सर्वप्रकारविहिता, प्रतिषिद्धा, अविहिताऽप्रतिषिद्धा च। तथा कर्म विहितं प्रतिषिद्धं चाविहितमप्रतिषिद्धं च। समन्वारभेते सम्यगन्वारभेते अन्वालभेते अनुगच्छतः। पूर्वप्रज्ञा च। पूर्वाऽनुभूतविषया प्रज्ञा पूर्वप्रज्ञा, अतीतकर्मफलानुभववासनेत्यर्थः। सा च वासनाऽपूर्वकर्मारम्भे कर्मविपाके चाङ्गं भवति। तेन ता अप्यन्वारभते। नहि तया वासनया विना केनचित् कर्म कर्तुं फलं चोपभोक्तुं शक्यते। न ह्यनभ्यस्ते विषये कौशलमिन्द्रि-

याणां भवति । पूर्वानुभववासनाप्रवृत्तानां त्विन्द्रियाणामिहाभ्यासमन्तरेण कौशलमुपपद्यते । दृश्यते हि केषाञ्चित् कासुचित् क्रियासु चित्रकर्मादिलक्षणासु विनैवेहाभ्यासेन जन्मत एव कौशलम् । कासुचिदन्यन्तसौकर्य्ययुक्तास्वप्यकौशलं केषाञ्चित् । तथा विपयोपभोगेषु स्वभावत एव केषाञ्चित् कौशलाकौशले दृश्येते । तच्चैतत् सर्वं पूर्वप्रज्ञोद्भवानुद्भवनिमित्तम् । तेन पूर्वप्रज्ञया विना कर्मणि वा फलोपभोगे वा न कस्यचित्प्रवृत्तिरुपपद्यते । तस्मादेतत्त्रयं शाकटिकसंभारस्थानीयं परलोकपथ्यदनं विद्याकर्म पूर्वप्रज्ञाऽऽख्यम् । यस्माद् विद्याकर्मणी पूर्वप्रज्ञा च देहान्तरप्रतिपत्त्युपभोगसाधनं तस्माद् विद्याकर्मादि शुभमेव समाचरेत् । यथेष्टदेहसंयोगभोगोपभोगौ स्यातामिति प्रकरणार्थः" इति ।

अत्र विद्यापदेनोपासनाजन्या वासना, कर्मपदेनापि तज्जन्या वासना धर्माधर्माख्या । पूर्वप्रज्ञापदेन च पूर्वानुभवजन्या वासना गृह्यते । देहान्तरपरिग्रहकाले तत्त्रयस्य स्वरूपेण स्थित्यसंभवात् । तृणजलूकेव च प्रायणात् प्राक् प्रतताभिर्वासनाभिरेष जीवः शरीरान्तरं गृहीत्वा ( साक्षात्कृत्य ) वासनाद्वारा प्रसृतमात्मानं पुनरुपसंहरति । सर्वात्मकानि तावत् करणानि, सर्वात्मकप्राणसंश्रयाच्च तेषामाध्यात्मिकाधिभौतिकपरिच्छेदः प्राणिकर्मज्ञानभावनानिमित्तः, अतस्तद्वशात् स्वभावतः सर्वगतानामनन्तानामपि प्राणानां ( इन्द्रियाणाम् ) कर्मज्ञानवासनानुरूप्येणैव देहान्तरारम्भवशात् प्राणानां वृत्तिः संकुचति विकसति च । तथा चोक्तम्—"समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण" इति । तथा चेदं वचनमनुकूलम्—"अथ यो हैताननन्तानुपास्ते" [बृह० १।५।१३] इत्यादि, "तं यथा यथोपासते इति च" [मुद्गलो० ३।३] इति । अत्रत्यया श्रुत्या तद्भाष्येण च विद्याकर्मपूर्वप्रज्ञाजनितवासनानां देहान्तरारम्भकत्वं स्फुटं प्रतीयते ।

इयं च वासना प्रकृतिपदेनेव स्वभावपदेनापि व्यपदिश्यते । स्वभावशब्दस्य प्रकृतिपर्यायत्वात् । एवं स्वभावपर्यायाः शीलशब्दादयोऽपि तत्र द्रष्टव्याः ।

यथा बृहदारण्यके प्रागुदाहृते वासनानां माहारजनादिरागसाम्यं दर्शितं तथा काठकमुण्डकादिषु ग्रन्थिरूपत्वमपि दर्शितम् । तथा हि काठकोपनिषदि—"यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः । अथ मर्त्योऽमृतो भवत्येतावद्ध्यनुशासनम् ॥" [ २।३।१५ ] । अत्र भाष्यम्—"हृदयस्य ग्रन्थयः = अविद्याप्रत्यया दृढबन्धरूपाः" इति । अत्रापि प्रत्ययजन्या वासना विवक्षिताः । मुण्डके च—"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥" [ २।२।८ ] । भाष्यमत्र—"भिद्यते हृदयग्रन्थिरविद्यावासनाप्रचयो

बुद्ध्याश्रयः कामः, 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः' [ काठक० २।३।१४; बृह० ४।४।७ ] इति श्रुत्यन्तरात्। हृदयाश्रयोऽसौ नात्माश्रयः'' इति। उपनिषद्भाष्ये चान्यत्र यथा मत्स्याऽऽनाय. ( मत्स्यग्रहणार्थं जालकम् ) सर्वतः सूक्ष्माभिस्तन्तुग्रन्थिभिरनुविद्धस्तथाऽन्तःकरणमपि वासनारूपग्रन्थिभिरित्युक्तम्। अत्र यद्यपि वासनानां नीलपीतादिरागरूपत्वं ग्रन्थिरूपत्वं च सादृश्येनाध्यारोपितं न तु वास्तवमिति भाष्यबलात् प्रतीयते, तथापि स्वरूपतोऽपि तासां ते संभवत इतीदानीमुपपादयितुं प्रयत्यते। तथा हि मनसोऽन्नविकारत्वम् "अन्नमयं सोम्य मनः" [ छा० ६।६।५ ], "यदणिष्ठं तन्मनः" इत्यादिश्रुतिषूपलभ्यते। अनुभूयते च भुक्तानां गीतोदाहृतसात्त्विकराजसतामसान्नानां मधुरकट्वम्लादिरसादिभेदभिन्नानां प्रभावो मनसि। अन्नस्य च पार्थिवस्य सर्वरूपवत्त्वसंभवेन तद्विकारे मनसि तद्विकारभूतासु वृत्तिषु तद्विकारभूतासु वासनासु च सर्वरूपसंभव इति। एवं ग्रन्थिरूपत्वं च वासनानामुपपद्यते, प्राणाघाताभिनिष्पन्नरेखारूपग्रन्थिमद्हृदयपिण्डपुण्डरीकसमाश्रितमनस्समवेतत्वाद् वासनानाम्। तथा हि—"वासनावशतः प्राणस्पन्दस्तेन च वासना। जायते चित्तबीजस्य तेन बीजाङ्कुरक्रमः॥" [ उपशम० १०।६५ ], "द्वे बीजे चित्तवृक्षस्य वृत्तिव्रततिधारिणः। एकं प्राणपरिस्पन्दो द्वितीयं दृढवासना॥" [ उपशम० १०।३८ ] इति।

अथेदानीं वासनानां भेदाः सह कारणभेदैः कार्यभेदैश्च सप्रमाणं प्रदर्श्यन्ते। यद्यपि वासनाभेदा अनन्ता इति स्वरूपतः संख्यातुमशक्या इति प्रागुपपादितम्, तथापि समासतः कथञ्चित् प्रदर्श्यन्ते। तत्र विद्यावासना, अविद्यावासना, कर्मवासना, पूर्वप्रज्ञावासनेति तस्याः प्रथमं चत्वारो भेदाः।

तत्र विद्या उपासना ध्यानमिति यावत्। तत्र प्रत्ययैकतानता ध्यानम्। नैरन्तर्येण सजातीयप्रत्ययप्रवाह इति यावत्। तत्र विद्याजन्यवासनया वस्तुसाक्षात्कारो भवति। यथाऽऽत्मविद्याजन्यवासनयाऽऽत्मसाक्षात्कारः। मणिरूप्यादिविद्याजन्यवासनया मणिरूप्यादिसाक्षात्कारस्तद्विदाम्। स्वरविद्याजन्यवासनया षड्जादिस्वरसाक्षात्कारो गान्धर्वशास्त्राभ्यासवताम्। विद्या च द्वेधा— सदर्थविषया, असदर्थविषया चेति।

तत्र गुञ्जापुञ्जे वह्निविद्याजन्यवासनया वह्निसाक्षात्कारः शीतातुरकायकाण्डस्य। मरुमरीचिकासु तोयविद्याजन्यवासनया उच्चलत्तुङ्गतरङ्गभङ्गेयमभ्यर्णमवतीर्णा मन्दाकिनीति प्रत्ययः पिपासितस्येति तत्र तत्र भामत्यां प्रदर्शितम्। क्वचित्तु अनागतार्थविषयकविद्याजन्यवासनया तद्विषयकं प्रातिभं ज्ञानं जायते प्रमाणभूतम्। यथा मुमूर्षोः कस्यचिन्मरणज्ञानम्।

यथा वा भगिन्या भ्रात्रागमनज्ञानम्—अद्य मे भ्राता आगमिष्यतीति। तथा योगिनामपि विद्याजन्यभावनाप्रकर्षादेवातीतानागताद्यर्थसाक्षात्कारः। तदुक्तं प्रमाणप्रकरणे न्यायमञ्जर्याम्—"तथैव भावनाभ्यासाद् योगिनामपि मानसम्। ज्ञाने सकलविज्ञेयसाक्षात्कारे क्षमं भवेत्॥···तदेवं क्षीणदोषाणां ध्यानावहितचेतसाम्। निर्मलं सर्वविषयं ज्ञानं भवति योगिनाम्॥ अपि चानागतज्ञानमस्मदादेरपि क्वचित्। प्रमाणं प्रातिभं श्वो मे भ्राताऽऽगन्तेति दृश्यते॥ नानर्थजं न संदिग्धं न बाधविधुरीकृतम्। न दुष्टकारणं चेति प्रमाणमिदमिष्यताम्॥ क्वचिद् बाधकयोगश्चेदस्तु तस्याप्रमाणता। यत्रापरेद्युरभ्येति भ्राता तत्र किमुच्यताम्॥ काकतालीयमिति चेन्न प्रमाणप्रदर्शितम्। वस्तुतत्काकतालीयमिति भवितुमर्हति॥" [पृ० ६८] इति। भावि भ्रात्रागमनं भावित्वेन गृह्णदिदं प्रातिभं ज्ञानं प्रमाणमित्यर्थः।

अथ साम्प्रतमवसरप्राप्ताऽविद्यावासना निरूप्यते। तत्र दर्शनान्तरेष्वनात्मन्यात्मख्यातिरविद्येति। अद्वैतदर्शने तु—"अनादि भावरूपं यद् विज्ञानेन विलीयते। तदज्ञानमिति प्राज्ञा लक्षणं संप्रचक्षते॥" इति चित्सुखोक्ताऽनादिभावरूपा। तत्कार्यभूताऽनात्मन्यात्मख्यातिरूपाः प्रत्यया अपि। क्वचित्तु तज्जन्यवासना अप्यविद्यापदेन व्यपदिश्यन्ते। तत्राद्या मूलाविद्येति। इतरत्त्वविद्याद्वितयं तूलाविद्या, अवस्थाऽज्ञानमिति च तत्र तत्र व्यवह्रियते। तत्राद्वैतदर्शने आत्मनो वाङ्मनसागोचरत्वान्निर्धर्मकत्वाच्च सर्वेऽप्यात्मविषयाः प्रत्यया अविद्याप्रत्यया एव। तत्र पूर्वः प्रत्ययो वासनासमुत्पादक्रमेणोत्तरप्रत्यये हेतुः। सर्वे च विभ्रमाः पूर्वानुभवजनितवासनामूलका एव। स च पूर्वानुभवो भ्रमः प्रमा वा भवत्वित्यत्र नाभिनिवेशोऽद्वैतवादिनां लाघवं पश्यताम्। अहं ममेत्याद्यविद्याप्रत्ययजन्यवासनैव प्रवृत्तिद्वारा धर्माधर्मजननेन संसारहेतुत्वाद् बन्ध इत्युच्यते। तदपायेऽपवर्ग इति सर्वसंमतः पन्थाः।

अथ कर्मवासनाः। तत्र कर्म तावत् त्रिविधम्—विहितम्, प्रतिषिद्धम्, अविहितमप्रतिषिद्धं चेति। तत्रान्तिमं न धर्माधर्मरूपवासनाजनकम्। स्वाभाविकत्वेन रागद्वेषादिरूपक्लेशानपेक्षया प्रवृत्तत्वात्। कर्माशयस्य तु क्लेशमूलकत्वं योगसूत्रोक्तमनुपदमेव प्रपञ्चयिष्यते। तत्र विहितं कर्म धर्मजनकम्, प्रतिषिद्धं त्वधर्मजनकम्। तत्र माधकर्षणेन यथा शालिक्षेत्रे कोऽप्यतिशयो जन्यते, तथाऽऽत्मनि विहितप्रतिषिद्धकर्मभिरित्यदृष्टसाधनावसरे कुसुमाञ्जल्यामुदयनाचार्याः। अत्र यदि कर्मादृष्टयोः सामानाधिकरण्यानुपपत्त्या कार्यकारणभावो नोपपद्यत इति संभाव्यते, तदा तत्तत्कर्मानुकूलकृतेरेव धर्माधर्मजनकत्वमस्तु। स्वानुकूलकृतिद्वारा वा सामानाधिकरण्यमुपपाद्यम्। कर्मणां धर्माधर्मजनकत्वं तु कामलोभमोहक्रोधरूपरागसत्त्व एव।

किञ्च धर्माधर्मयोर्जात्यायुर्भोगरूपस्वफलजनकत्वमपि तत्सत्त्व एव, नान्यथा; जीवन्मुक्तेषु तददर्शनात्। तथा च साधनपादे योगसूत्रम्—"क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः" [२।१२] इति। क्लेशास्तु – अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च। भाष्ये व्याख्यातं च—"तत्र पुण्यापुण्यकर्माशयः कामलोभमोहक्रोधप्रभवः। स दृष्टजन्मवेदनीयश्चादृष्टवेदनीयश्च। तत्र तीव्रसंवेगेन मन्त्रतपःसमाधिभिर्निर्वर्तित ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद्वा यः परिनिष्पन्नः स सद्यः परिपच्यते पुण्यकर्माशय इति। तथा तीव्रक्लेशेन भीतव्याधितकृपणेषु विश्वासोपगतेषु वा महानुभावेषु वा तपस्विषु कृतः पुनः पुनरपकारः। स चापि कर्माशयः सद्य एव परिपच्यते। यथा नन्दीश्वरः कुमारो मनुष्यपरिणामं हित्वा देवत्वेन परिणतः। तथा नहुषोऽपि देवानामिन्द्रः स्वकं परिणामं हित्वा तिर्यक्त्वेन परिणत इति। तत्र नारकाणां नास्ति दृष्टजन्मवेदनीयः कर्माशयः। क्षीणक्लेशानामपि नास्त्यदृष्टजन्मवेदनीयः कर्माशय इति" इति।

तत्र वैशारद्याम् - "क्लेशो मूलं यस्योत्पादे च कार्यकरणे च स तथोक्तः" इति क्लेशमूलपदस्य व्याख्यानम्। आशेरते देहगेहादावहं ममाभिमानवन्तो भवन्ति सांसारिकाः पुरुषा यस्मिन् सति स आशयः। कर्मणामाशयौ धर्माधर्मौ। कामात्काम्यकर्मप्रवृत्तौ स्वर्गादिहेतुर्धर्मो भवति, एवं लोभात् परद्रव्यापहारादावधर्मः, एवं मोहादधर्मे हिंसादौ धर्मबुद्धेः प्रवर्तमानस्याधर्म एव, न त्वस्ति मोहजो धर्मः। अस्ति तु क्रोधजो धर्मः, तद् यथा ध्रुवस्य जनकावमानजन्मनः क्रोधात् तज्जिगीषयाऽऽहितेन कर्माशयेन पुण्येनान्तरिक्षलोकवासिनामुपरि स्थानम्, अधर्मस्तु क्रोधजो ब्रह्मवधादिजन्मा प्रसिद्ध एव भूतानाम्। तस्य च पुण्यापुण्योभयरूपस्य कर्माशयस्य दृष्टजन्मवेदनीयत्वादृष्टजन्मवेदनीयत्वाभ्यां द्वैविध्यम्। तत्र दृष्टजन्मवेदनीयः सद्यः परिपाकी पुण्यरूपः कर्माशयो नन्दीश्वरस्योदाहृतो भाष्ये। तादृश एवापुण्यरूपः कर्माशय उदाहृतो नहुषस्य। येन कर्माशयेन कुम्भीपाकादयो नरकभेदाः प्राप्यन्ते तत्कारिणां तु नास्ति दृष्टजन्मवेदनीयः कर्माशयः, नहि मनुष्यशरीरेण तत्परिणामभेदेन वा सा तादृशी वत्सरसहस्रादिनिरन्तरोपभोग्या वेदना संभवति।

(सावशेषम्)

# आत्मतत्त्वविमर्शः

श्रीमुरलीधरमिश्रः, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी ।

## आत्मनः शेषित्वम्, अपरेषां शेषत्वम्

इह खलु जगति प्रतिभासमानेषु सकलेषु पदार्थेषु शेषशेषिभावं प्राप्तेषु कस्य शेषित्वम्, अपरेषां केषां शेषत्वमिति मीमांस्यमानेऽन्ततः इदमेवायाति यदात्मनः शेषित्वम्, अपरेषां शेषत्वमिति । अत एवात्मनोऽतिरिक्तान् पदार्थान् त्रिषु वर्गेषु विभज्य अर्थधर्मकामाख्याः संज्ञास्तेषां विधीयन्ते । तत्र पुरुषरूपस्यात्मन एवाङ्गित्वमङ्गीकुर्वाणा एते पुरुषार्थत्वेनात्मानं ख्यापयन्तो वर्तन्ते । अत एव सत्स्वपि पदार्थेषूच्चावचेषु स्वीयेष्यमाणपदार्थेष्वेव लोका यतन्ते । तथा चोक्तं कैश्चित् कविवरैः—"सर्वः स्वार्थं समीहते" [माघ० २।६५] इति । अन्येषु दर्शनेषु सर्वप्रमाणेषु धर्माधर्मयोरेव मूर्धन्यायमानाऽपि भगवती श्रुतिर्वेदान्तिनां सर्वेष्वेव पदार्थविषयेष्वतीव प्राधान्यं लभते । सा चात्मनः प्राधान्यं डिण्डिमघोषेणोद्घोषयति । यथा—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" [बृह० ४।५।६], "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवति" [बृह० ४।५।६] इत्यादिनोपनिषत्सु बहुवारम् । अतः स एव मुख्यतया मीमांस्य इति कृत्वा स एव जीवात्माऽस्माभिरिदानीं निबन्धविषयीक्रियते । तत्रापि कस्यचिन्मतस्य खण्डने नास्माकं परिकरः, केवलं समेषां मतानां परिचय एव विधास्यते प्रायेण ।

## चार्वाकमतम्

तत्रारोहणाय सोपानरीतिमनुसृत्य प्रथमं सर्वाधो वर्तमानेन लोकेष्वतीव प्रथमानेन लोकायतमिति संज्ञां लभमानेन चार्वाकदर्शनेनास्य समीक्षा क्रियते, यस्योपदेष्टा साक्षाद्देवानां गुरुर्गिरांपतिरेव । स हि देवानां विजयाय दैत्यानां पराजयाय बहुकालपर्यन्तं तपश्चरितुं गते शुक्राचार्ये दैत्यगुरौ तदीयं रूपं छद्मनासाद्य दैत्यान् मोहयित्वा मतमेतदुपदिदेश—इति हि पौराणिकी प्रसिद्धिः । एतन्मते पृथिवीजलतेजोवायवश्चत्वार्येव तत्त्वानि । तान्येव मिलित्वा आत्मत्वेनावतिष्ठन्ते । पार्थक्येन वर्तमानान्यचेतनान्यपि संघीभूय विलक्षणां शक्तिं लभमानानि चेतनानि भवन्ति, यथाऽनेकेषु पदार्थेषु पृथग्भूतेषु मादकत्वमलभमानेष्वपि संघीभवन्तस्ते मदशक्तिमाप्नुवन्ति तद्वत् । तत्र यथा यथापरिमाणं सर्वेषु पदार्थेषु सत्त्वेन मादकत्वं नान्यथा,

तथैव- प्राणन्नायुषु निःसरत्सु यथापरिमाणं वायोरभावेन मृतशरीरे चैतन्याभावः। तथा च शरीरस्यैव चैतन्यम्, तदेवात्मा। अत एव कृशोऽहं स्थूल इति सामानाधिकरण्यमुपपद्यते। ममायं देह इति वैयधिकरण्येन प्रतीतिस्तु 'राहोः शिरः' इतिवदौपचारिकी। तदुक्तं चार्वाकषष्ठौ—

अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः॥
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते।
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्॥
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः।
देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः॥
मम देहोऽयमित्युक्तिः संभवेदौपचारिकी। इति।

विषयजन्ये सुखदुःखे एव स्वर्गनरके। तत्राङ्गनालिङ्गनादिजन्यं सुखमेव परमपुरुषार्थः। विषयजन्यसुखस्य दुःखसंभिन्नत्वेऽपि मत्स्यकण्टकधान्यपलालन्यायेन दुःखात् सुखं पृथग्भूय पुरुषार्थेन स्थीयते। तदुक्तं पातञ्जलभाष्ये—"यथा मत्स्यार्थी सशल्यान् सकल्कान् सकण्टकान् मत्स्यानुपादत्ते स यावदादेयं तावदादाय निवर्तते। यथा वा धान्यार्थी सपलालानि धान्यान्याहरति स यावदादेयं तावादादाय निवर्तते" इति। शरीरपात एवैतन्मते मोक्षः। अत एवाभाणकः—

यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥ इति।

स चात्मा मध्यमपरिमाणः। अस्य मते कर्तुमकर्तुमन्यथाकर्तुं समर्थः लोकसिद्धो राजैव परमेश्वरः। प्रत्यक्षप्रमाणमन्तराऽन्येषां प्रमाणानामभावात्, स्वर्गादिषु धर्मादिषु च प्रमाणाभावात्, परलोके गमनागमनादीनामसंभवाच्च देहातिरिक्तस्यात्मनः स्वीकारोऽनावश्यकः। अन्येषां प्रमाणानामभावस्तु सामान्यादीनामभावेन सकलवह्निधूमयोर्व्याप्तिग्रहाभावात्, आप्तस्य च कस्यचिदभावेनाप्तोक्तरूपशब्दाभावात्, श्रुतीनां "शृणोत ग्रावाणः" इत्यादीनां प्रत्यक्षप्रमाणबाधितत्वात्, "एक एव रुद्रोऽवतस्थे", "शतं रुद्राः" इत्यादिविरुद्धार्थप्रतिपादकत्वाच्च। स चायमात्मा प्रतिशरीरं भिन्नोऽनन्तश्चेति।

## चार्वाकमतालोचनम्

अत्रेत्थं विचार्यते। यद्येवं स्वीक्रियते चार्वाकैर्यद् अविनाभावस्य सहचारादिज्ञानस्याशक्यकर्तव्यताया अनिर्धार्यत्वान्नानुमानं प्रमाणमिति। तत्र मा भूत् सहचारादिनाऽविनाभाव-

नियमः, तादात्म्यतदुत्पत्तिभ्यां तु संभवत्येव। तदुक्तम्—

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।
अविनाभावनियमो दर्शनान्तरदर्शनात्॥ इति।

मा भूदन्वव्यतिरेकाभ्यां तन्निश्चयः, वह्निधूमयोः कार्यकारणभावात् शिंशपात्ववृक्षत्वयोस्तादात्म्याच्च भवत्येष निश्चयः। अत्र नैवं व्यभिचारशङ्का कर्तुमर्हा—माभूत् कारणम्, अस्तु कार्यमिति; व्याघातात्। तदुक्तं खण्डनकारैः—"व्याघातावधिराशङ्का" इति। किञ्च 'इदं प्रत्यक्षं प्रमाणम् इदमप्रमाणाभासम्, तत्समानजातीयत्वात्' इति वदता चार्वाकेणाप्यनुमानस्य प्रामाण्यं स्वीकृतम्। तथा 'परगता विप्रतिपत्तिर्वचनलिङ्गेन भवति' इत्यपि तैरुक्तम्। तथा चागत्याऽनुमानप्रामाण्येऽङ्गीकृते सद्य उत्पन्नेषु सुखित्वदुःखित्वयोर्दर्शनेन कार्येण कारणानुमाने, इष्टसाधनताद्विज्ञानाल्लोके प्रवृत्तिदर्शनेन स्तन्यपानादिना बालके इष्टसाधनताद्विज्ञानस्यानुमानादिना स्वीकारे तस्य चेह जन्मन्यसंभवाद् जन्मान्तरीयस्यैव सत्त्वेन शरीरस्य चानेकेषु जन्मसु संबन्धादर्शनात् तदतिरिक्त आत्मा स्वीकार्य एव।

तत्र केचिदिन्द्रियाणामेवात्मत्वं स्वीकुर्वन्ति। तत्रैकस्मिन् शरीरेऽनेकेन्द्रियाणामात्मत्वस्वीकारे 'योऽयमहमद्राक्षम्, सोऽहं स्पृशामि' इति प्रत्यभिज्ञा न स्यात्, अन्येन दृष्टस्यान्येन प्रत्यभिज्ञानाभावात्। एकस्यैवेन्द्रियस्यात्मत्वस्वीकारे यस्यात्मत्वस्वीकारस्तस्मिन् विकले शरीरे चैतन्यमेव नश्येत्, आत्मनोऽभावात्।

## बौद्धमतम्

अतो बौद्धा अनुमानप्रमाणमपि स्वीकृत्य सुखदुःखादिभोगार्थं स्वीक्रियमाणानां पदार्थानां संतानं स्वीकुर्वन्ति। ते च चत्वारः, अधिकारिभेदाद् विनेयभेदाद्वा—माध्यमिकाः, योगाचाराः, सौत्रान्तिकाः, वैभाषिका इति। अलब्धस्यार्थस्य लब्धये पर्यनुयोगो योगः, गुरूक्तस्यादरणम् आचारः। तत्र भगवता बुद्धेन सर्वं क्षणिकं क्षणिकम्, शून्यं शून्यम्, दुःखं दुःखम्, स्वलक्षणं स्वलक्षणमित्युपदिष्टम्। एतस्माद्भावनाचतुष्टयान्निखिलवासनानिवृत्तौ परिनिर्वाणं शून्यरूपं सेत्स्यतीति वयं कृतार्थाः। परन्तु शिष्यैर्योगश्चाचारश्च कर्तव्यः। तत्र माध्यमिकेन शून्यमेव भावयता न कश्चिद् योगः कृतः, अत आचारस्य करणादुत्तमा योगस्याकरणादधमा इति मध्यमां वृत्तिमाश्रितवन्तः शिष्या माध्यमिकाः। आचारं कृतवन्तोऽपि मास्तु बाह्यं वस्तु स्यात्तु शून्यम्, परन्त्वान्तरं कथं शून्यं स्वयं संवेदनादिति योगं कृतवन्तः, अतो योगाचाराः। बौद्धसूत्रस्यान्तं पृष्टवन्तः सौत्रान्तिकाः। कथमेतान् प्रति विभाषया कथितवन्त आचार्या इति वन्दतो वैभाषिकाः। तत्र वैभाषिकसौत्रान्तिकौ बाह्यास्तित्ववादिनौ। सौत्रान्तिकमते

"ये यस्मिन् सत्यपि कादाचित्कास्ते तदतिरिक्तसापेक्षाः, कादाचित्कत्वात्, मध्यविवर्त्तिपुरुषान्तरसापेक्षवचनप्रतिभासवत्" इत्यनुमानगम्यं बाह्यम् । वैभाषिकमते प्रत्यक्षगम्योऽप्यर्थो भवति, प्रत्यक्षमन्तरा व्याप्तिग्रहाद्यभावेनानुमानासंभवात् । तत्रानयोर्मते प्रतीत्यसमुत्पादो जायते । प्रतीत्यसमुत्पादो नाम कारणे सति तत्प्रतीत्य प्राप्य समुत्पादः । स च प्रतीत्यसमुत्पादो हेतूपनिबन्धनतः प्रत्ययोपनिबन्धनतश्च भवति । हेतूपनिबन्धो नाम एकैककारणसंबन्धः । प्रत्ययोपनिबन्धो नाम कारणसमुदायसंबन्धः । प्रत्ययनं प्रत्ययः, हेतुसमवायः । प्रत्ययनं नाम हेतुं हेतुं प्रति हेत्वन्तराणामयनम् । तत्र हेतूपनिबन्धे बौद्धसूत्रम्—"उत्पादाद्वा तथागताना-मनुत्पादाद्वा स्थितैषा धर्माणां धर्मता" इति । तथागतानां बुद्धानाम्, धर्माणां कार्याणां कारणानां च । धरते इति धर्मः कारणम्, ध्रियते इति धर्मः कार्यम् । तत्र कार्याणामुत्पादात् कारणानामनुत्पादात् स्थितिधर्मता बोध्या । का नाम धर्मस्थितिता ? तत्र सूत्रम्—"धर्मस्थितिता धर्मनियामकता प्रतीत्यसमुत्पादानुलोमता" इति । कार्यरूपाणां धर्माणां कारणानतिप्रसङ्गेन कालविशेषे स्थितिः धर्मस्थितिता । स्वार्थिकस्तल् प्रत्ययः । कारणरूपाणां धर्माणां कार्यं प्रति नियामकता धर्मनियामकता प्रतीत्यसमुत्पादानुलोमता, तदनुसारितैवेति तदर्थः । तदुक्तं बुद्धेन—"इदं प्रत्ययफलम्" इति सूत्रेण । इदं कार्यरूपम्, प्रत्ययस्य कारणसमुदायस्य फलम् । तत्र नास्ति कस्यचिदन्यस्य स्थिरस्य चेतनस्य प्रयोजनमित्यर्थः । तत्राध्यात्मिकः प्रतीत्यसमुत्पादो हेतूपनिबन्धनतः, यथाऽविद्यादय एकैककारणमादाय निर्वर्तनीयाः । नहि कस्याप्येवं भवति 'अहमेनं निर्वर्तयामि, एतेनाहं निर्वर्तितः' इति । प्रत्ययोपनिबन्धनतः पृथिवीजलतेजोवाय्वाकाशविज्ञानधातूनां समवायाद् भवति कायः । तत्र पृथिवीधातुः कायस्य काठिन्यम्, जलधातुः स्नेहम्, तेजोधातुर्भुक्तस्य परिपाकम्, वायुधातुः श्वासादिकम्, आकाशधातुरन्तःसुषिरभावम्, विज्ञानधातुर्नामरूपाङ्कुरं शरीरस्य कललबुद्बुदादिरूपावस्थं शब्दादिविषयैर्पञ्चभिर्ज्ञानैः संयुक्तमभिनिर्वर्तयति । एवं प्रत्ययसमुत्पादेऽपरेऽपि चत्वारः प्रत्यया अपेक्ष्यन्ते कादाचित्कत्वनिर्वाहाय । ते चालम्बनसमनन्तरसहकार्यधिपतिरूपाः । तत्रालम्बनप्रत्ययाद् विज्ञानानां विषयाकारता, समनन्तरप्रत्ययात् प्राचीनज्ञानाद् बोधरूपता, चक्षुषोऽधिपतिप्रत्ययाद् रूपग्रहणनियमः, आलोकात् सहकारिप्रत्ययात् स्पष्टरूपता । तत्र निष्पन्नेष्वाध्यात्मिकेषु प्रत्ययसमुत्पादेषु रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पञ्च स्कन्धाः, एतेषां समाहार एवात्मा । तदुक्तं माघकाव्ये—

सर्वकार्यशरीरेषु मुक्त्वाऽङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्मान्यो नास्ति मन्त्री महीभृताम् ॥ [२।२८] इति ।

रूप्यन्त एभिरिति, रूप्यन्त इति च व्युत्पत्तिद्वयेन सविषयाणीन्द्रियाणि रूपस्कन्धः। अहमित्याकारक आलयविज्ञानरूपो रूपादिविषय इन्द्रियादिजन्यप्रवृत्तिविज्ञानरूपश्च विज्ञान-स्कन्धः। संज्ञास्कन्धः सविकल्पप्रत्ययो डित्थः कुण्डलीत्यादिः। वेदनास्कन्धः सुखदुःख-तद्रहितविशेषावस्था। रागादिक्लेशा धर्माधर्मौ च संस्कारस्कन्धः। तत्र विज्ञानस्कन्धो निर्विकल्पः, वेदनास्कन्धः सविकल्पः। तत्र सर्वेषां पदार्थानां क्षणिकत्वमनुमानाद्भवति। तथा हि सर्वं क्षणिकं सत्त्वात्। यद् यत् सत् तत्तत् क्षणिकं यथा जलधरपटलम्। सत्त्वं नामार्थ-क्रियाकारित्वम्। तच्च क्रमाक्रमाभ्यां व्याप्तम्। क्रमाक्रमौ च न स्थायिपदार्थेषु वर्तेते, अतस्तद्-व्यावृत्तावर्थक्रियाकारित्वरूपं सत्त्वं क्षणिकत्वपक्षे व्यवस्थापयतः। तथा हि स्थायिनोऽर्थ-क्रियाकारित्वलक्षणसत्त्वस्वीकारे वर्तमानार्थक्रियाकरणकालेऽतीतानागतयोरर्थक्रियाकरणे सामर्थ्य-मस्ति न वा? यद्यस्ति तदा समर्थस्य क्षेपायोगात् तस्मिन्नेव काले तादृशार्थक्रियाकारित्वमपि स्यात्, सामर्थ्याऽस्वीकारे कदापि तयोः कारित्वं न स्यात्। तस्मिन् वस्तुनि क्रमवत्सहकारिकारण-वशात् क्रमवदर्थक्रिया भवन्तीति तु न वक्तव्यम्, सहकारिभिर्मुख्यस्य कारणस्योपकारानुपकार-विकल्पासहत्वात्। तथा हि सहकारिणः कारणमुपकुर्वन्ति न वा? द्वितीयपक्षे तेषां न काचिदपेक्षा, इति व्यर्थैव तेषां सहकारिता। उपकारपक्षे स उपकारो भावाद्भिद्यते चेद् उपकारेणैव सिद्धे किं भावेन। अभेदपक्षे पूर्वस्माद्भावादेतदतिशयविशिष्टो भावो भिन्न इति क्षणिकत्वपक्ष एव पर्यवसानम्। अक्रमेण कारणेऽपि युगपत्सकलकार्यकरणसामर्थ्ये तदुत्तर-कालमपि सर्वा अर्थक्रियाः स्युः। तदुक्तं ज्ञानश्रिया –

यत्तत्सत्क्षणिकं यथा जलधरः सन्तश्च भावा अमी
सत्ताशक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा न सा।
नाप्येकैव विधाऽन्यथा परकृते नापि क्रियादिर्भवेत्
द्वेधाऽपि क्षणभङ्गसङ्गनिरतः साध्ये च विश्राम्यति॥ इति।

एवं च सर्वेषां पदार्थानां क्षणिकत्वे पञ्चस्कन्धरूप आत्माऽपि क्षणिक इति सिद्ध्यति। ननु क्षणिकत्वेऽन्येनानुभूतस्यान्येन स्मरणं न स्यादिति चेन्न; समानसन्तानिनां पदार्थाना-मेकप्रवाहपतितत्वेन पूर्वपूर्वानुभवजन्यवासनासंक्रमवशात्तदुपपत्तेः। यथा मधुररसभावितानामाम्र-बीजानां परिकर्षितायां भूमावुप्तायामङ्कुरकाण्डस्कन्धशाखापल्लवादिद्वारा फलेऽपि माधुर्यसंक्रमः, तथैवात्रापि वासनासंक्रमः। न चैवं देवदत्तेनानुभूतं यज्ञदत्तोऽपि स्मरेदिति वाच्यम्; कार्य-

कारणभावस्य नियामकत्वात् । अत एव लाक्षारसावसिक्तानां कार्पासबीजानामङ्कुरादिपारम्पर्येण कार्पासादौ रक्तिमोपपद्यते । तदुक्तम्—

यस्मिन्नेव हि सन्ताने आहिता कर्मवासना ।
फलं तत्रैव बध्नाति कार्पासे रक्तता यथा ॥ इति ।

योगाचारश्च बाह्यमर्थं नैव मनुते, किन्तु केवलं विज्ञानमेव । तदपि क्षणिकम् । तदेव चात्मा स्वयं संवेदनात् । नहि कश्चिदसंदिग्धोऽविपर्यस्तो नाहमिति निश्चिनोति, प्रत्युताहमेवेति । विज्ञानमस्वीकर्तुं न कश्चित् प्रभवेत्, जगदान्ध्यप्रसङ्गात् । तदुक्तं धर्मकीर्तिना—"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति" इति । बाह्यार्थस्तु केवलं स्वप्नगन्धर्वनगरादिवद् भ्रमविषय एव । तथा हि—अर्थो हि ज्ञानग्राह्यः परमाणुरूपो वा भवेत्, अणुरूपो वा ? प्रथमे स्तम्भादिप्रत्ययो न स्यात् । द्वितीये समवायस्यास्वीकारात् संयोगस्य तादात्म्यस्य च भवद्रीत्याऽसंभवाद् अवयवैरवयविनां संबन्धस्यैवासिद्धेः । तादात्म्यस्वीकारे कदाचित् परमाणुरित्यपि प्रत्ययः स्यात् । तस्मात् स्वव्यतिरिक्तग्राह्यविरहात् तदात्मिका बुद्धिः स्वयमेव स्वात्मरूपप्रकाशिका, प्रकाशवत् । तदुक्तम्—

नान्योऽनुभाव्यो बुद्ध्याऽस्ति तस्या नानुभवोऽपरः ।
ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते ॥ इति ।

यश्चायं ग्राह्यग्राहकसंवित्तीनां पृथगवभासः, स भ्रम एव, चन्द्रद्वित्वावभासवत् । अत्राप्यनादिरविच्छिन्नप्रवाहाऽभेदवासनैव निमित्तम् । तदुक्तम्—

सहोपलम्भनियमादभेदो नीलतद्धियोः ।
भेदश्च भ्रान्तिविज्ञाने दृश्येतेन्दाविवाद्वये ॥
अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ इति,
अवेद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते ।
विभक्तलक्षणग्राह्यग्राहकाकारविप्लवा ॥
तथाकृतव्यवस्थेयं केशादिज्ञानभेदवत् ।
यदा तदा न संचोद्या ग्राह्यग्राहकलक्षणा ॥ इति च ।

तत्र हि शुक्तिरूप्यादि प्रतीयमानं वस्तु सर्वैरविसंवादेन स्वीक्रियमाणम् । परन्तु तत्रेदन्तायाः, ज्ञानस्य, रजतस्य, तत्संबन्धस्य च सत्त्वं न केनापि स्वीक्रियते, तथैव जगति

प्रतीयमानस्य वस्तुनः कस्यापि सत्त्वं न स्वीक्रियते। तथा हि घटादिर्यदि सत्त्वस्वभावस्तदा कारकव्यापारवैयर्थ्यम्। अथासत्त्वस्वभावस्तदा सुतरां वैयर्थ्यम्। नहि खपुष्पोत्पादने कानिचित् कारणानि व्याप्रियन्ते। तदुक्तम्—

न सतः कारणापेक्षा व्योमादेरिव युज्यते।
कार्यस्यासंभवो हेतुः खपुष्पादेरिवासतः॥ इति।

सदसदुभयात्मकत्वं तु विरोधादेव न स्वीक्रियते। नापि तदुभयविलक्षणं सदसत्त्वम्, सदसद्बहिर्भूतस्य पदार्थस्य जगत्यप्रसिद्धत्वात्। अतः सदसदुभयानुभयात्मकचतुष्कोटिविनिर्मुक्तं शून्यमेव। तदुक्तं लङ्कावतारे—

बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते।
अतो निरभिलप्यास्ते निःस्वभावाश्च दर्शिताः॥ इति,
इदं वस्तुबलायातं यद्वदन्ति विपश्चितः।
यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा॥ इति च।

'विशीर्यन्ते तथा तथा' इत्यस्य न क्वचिदपि पक्षे व्यवतिष्ठन्त इत्यर्थः। दृष्टार्थव्यवहारस्तु स्वप्नव्यवहारवत् संवृत्या संगच्छते। तथा चोक्तम्—

परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ।
कुणपः कामिनी भक्ष्य इति तिस्रो विडम्बनाः॥ इति।

एवं चास्य मते आत्माऽपि विचार्यमाणः शून्यत्वमेवावलम्बते। तत्र सर्वं क्षणिकं शून्यं चेति स्थिरा वासनैव संसारोद्धरणायोत्तमो मार्गः, तस्मादेव च मोक्षः। तत्र स्थिरेत्यस्य संतानरूपेण वर्तमानेत्यर्थः।

## जैनमतम्

जैनमतावलम्बिनां मते सर्वे पदार्था उत्पादव्ययध्रौव्यशालिनो नित्यानित्याश्च। तथा हि वस्तुनः परिवर्तनशीलतया मृत्तिकया घटोत्पत्तिकाल एव पिण्डपर्यायो नश्यति मृत्तिका चावतिष्ठत इति घट उत्पद्यते पिण्डो नश्यति। एवं सुवर्णमवतिष्ठते, पिण्डो नश्यति, रुचकं चोत्पद्यत इति रीत्या सर्वेषामुत्पादविनाशध्रौव्यशालित्वम्। तदुक्तम्—

पयोव्रतो न दध्यत्ति न पयोऽत्ति दधिव्रतः।
अगोरसव्रतो नोभे तस्मात्तत्त्वं त्रयात्मकम्॥ इति।

तथा जीवद्रव्यमप्युत्पादव्ययध्रौव्यशालि। तत्र जीवलक्षणमुक्तं कुन्दकुन्देन—

अरसमरूपमगन्धमव्यक्तं चेतनागुणमशब्दम्।
ज्ञानमलिङ्गग्रहणं जीवमनिर्दिष्टसंस्थानम्॥ इति।

तथा च जीवश्चेतनः प्रभुः कर्ता भोक्ता च। एवं चैतेषां मते चैतन्यम्, बुद्धिः, अध्यवसायः, ज्ञानमित्यादिकं पर्यायाः, यतो न बुद्धिश्चैतन्यात् पृथक्। तस्यैव च रूपद्वयम्—एकमन्तर्मुखं दर्शनपदवाच्यम्, अपरं बहिर्मुखं ज्ञानपदवाच्यम्। ते च ज्ञानदर्शने जीवस्य स्वभावौ गुणौ च जीवेनापृथग्भूतौ। यदि च नैयायिकवद् ज्ञानात्मानौ पृथग्भूतौ तत्त्वे गुणगुणिनौ स्यातां तदात्मनो जडत्वप्रसङ्गः। ज्ञानसंबन्धाच्चेतनत्वं जीव इत्यपि न, जडेनापि संबन्धादचेतनत्वस्यापि प्रसङ्गात्। तथा चोक्तम्—

ज्ञानमात्मेति मतं ज्ञानं विना न आत्मा।
तथा ज्ञानमात्मा आत्मा ज्ञानमेव नान्यत्॥ इति।

जीवो हि स्वयमेव स्वस्योन्नतावनतौ च समर्थः। स हि स्वकर्मभिरधः पतित्वा कीटादियोनौ गच्छति। उन्नतकर्मद्वारा तीर्थङ्करपदवीं प्राप्नोति। अतः स प्रभुः समर्थः कर्ता भूत्वा स्वकर्मफलभोगकाल औपशमिकक्षयिकक्षायोपशमिकौदयिकपारिणामिकाख्यान् भावान् स्वयं करोति, कर्माणि तु केवलं निमित्तान्येव भवन्ति। जीवः कर्मजन्यभावानां भोक्ताऽपि भवति, अन्यथाऽऽत्मनः सुखदुःखानुभूतिर्न स्यात्। एतेषां मते शरीरसमो मध्यमपरिमाण आत्मा, तत्प्रदेशानां संकोचविकाशशालित्वाद् दीपप्रभावदणौ महति च शरीरे सुखेनावतिष्ठते। यथा दीपस्य प्रभा स्वल्पे महति वाऽवकाशे समानरूपेण वर्तते न तु न्यूनाधिकभावं गच्छति। अवयवानां संकोचविकाशशालित्वेन सावयवत्वाद् घटवदनित्यत्वं तु न, दृष्टान्तदार्ष्टान्तिकयोर्भेदात्। घटो हि नानापरमाणुभिर्निष्पन्नत्वादनेकद्रव्यात्मकः, आत्मा तु नित्यः शाश्वत एकोऽद्रव्यात्मक आकाशवदनन्तप्रदेशी। बालकशरीरेऽल्पपरिमाणोऽपि सर्पफणावद् युवादिशरीरे परिमाणान्तरं गृह्णाति। शरीरस्यैकदेशे नष्टेऽपि नात्मप्रदेशो नश्यति किन्तु संकुचत्येव। अत एव छागादिवधे शरीरावयवस्य पार्थक्येऽपि पूर्णरूपेणात्मनः संकोचाभावादितस्ततश्चलनादिरूपं

चेष्टादिकमवलोक्यते। आत्मनः कर्मभिः संपर्कस्त्वनादिकालादेव। अन्यथा कस्यचिदागन्तुकस्य कारणस्याभावात् तैः संसर्गस्यासंभव एव स्यात्। तत्र मुख्यतो जीवो द्विविधः—मुक्तः, संसारी च। तत्र मुक्तस्त्वेकविध एव। सांसारिकश्च तिर्यङ्नारकिमनुष्यदेवभेदाच्चतुर्विधः। तत्र तिर्यग्गतिरिक्तेषु पञ्च ज्ञानेन्द्रियाणि सन्ति। परन्तु तिर्यक्षु पृथिवीकायिक-जलकायिक-तेजोकायिक-वायुकायिक-वनस्पतिकायिकजीवानां केवलं स्पर्शनेन्द्रियम्। जैनानां मते पृथिव्यादिकमपि जीव एव। एते च स्थावराः कथ्यन्ते। तत्र केषु तिर्यक्षु द्वे इन्द्रिये—स्पर्शनं रसना च। पिपीलिकादिषु च त्रीणि—स्पर्शनं रसना घ्राणं च। भ्रमरादिषु चत्वारि स्पर्शनं रसना घ्राणं चक्षुरिति। सर्पादिषु गवादिषु च पञ्चेन्द्रियाणि। ते च जीवा अनन्ताः। तथा च सुखदुःखादिव्यवस्थोपपत्तिः। अस्य मते नास्ति कश्चित् संसारस्य कर्ता, किन्तु स्वभावादेव संसारस्य प्रवृत्तिः। यदि कश्चित्प्रबन्धकः स्यात् तदा पापिनां निम्नेषु वेश्यादिकुलेषु जन्म कथं विदधीत। नहि कश्चित् प्रबन्धकोऽपराधिने पुनरप्यपराधायावकाशं ददाति। तस्मात् स्वभावादेव कर्मणां प्रवृत्तिः।

नास्पृष्टः कर्मभिः शश्वद् विश्वदृश्वाऽस्ति कश्चन।
तस्यानुपायसिद्धस्य सर्वथाऽनुपपत्तितः॥

इत्युक्तिमनुसृत्य जीवानामेवावस्थाविशेष ईश्वरत्वम्। ते च मुक्तात्मानोऽनन्ता एव। तत्र मुक्तात्मनां मध्ये मुक्तेः पूर्वं जनानुपदिशन्ति मुक्तये। त एव तीर्थङ्करपदवाच्या भवन्ति। जीवानां स्वभावसिद्धस्य ज्ञानस्य ज्ञानावरणीयदर्शनावरणीयमोहनीयान्तरायैश्चतुर्भिर्घातिकर्मभिरावृतत्वादल्पज्ञत्वम्। तेषामपाकरणे सर्वज्ञत्वं केवलित्वापरपर्यायम्। यतः केवलमात्मानमेवापेक्षन्ते ज्ञानप्राकट्याय नान्यदतः केवलिनः, त एव च जीवन्मुक्ताः। यतश्चत्वारि घातिकर्माण्यरिरूपाणि हन्ति, तेनारिहन्तपदवाच्या भवन्ति। तीर्थङ्कराणां योपदेशसभा सा समवशरणमित्युच्यते, सर्वेषां शरणदातृत्वात्। अन्तकाले यानि चत्वार्यघातिकर्माणि तानि नाशयित्वा मुक्ता भवन्ति। एत ईश्वरपदवाच्या अपि जगत उत्पत्तिस्थितिलयेषु न किञ्चित्कुर्वन्ति। बन्धतत्त्ववशादेव जीवः संसारी। बन्धतत्त्वं च जीवकर्मणोः परस्परसंमिश्रणम्। तत्र जीवः कर्म चापि स्वीयं वास्तवरूपमपहाय तृतीयं रूपमाधत्ते। संवर-निर्जरतत्त्वयोः साहाय्येन मुक्तिः। तत्र संवरो नाम आस्रवतत्त्वानां जीवसमीपेऽनागमनम्, निर्जरो नाम जीवमिश्रितकर्मणां क्रमशः पार्थक्यम्। तत्र केवलं निर्जरस्तु कर्मणां भोगेनापि भवति,

परन्तु नूतनकर्मणामनागमनरूपसंवरपूर्वकनिर्जरेण परमपुरुषार्थो मोक्षः सम्पद्यते । कर्मसु तत्त्वमेकं विलक्षणं येन स्वनिष्ठरागद्वेषादिकं निमित्तीकृत्य जीवः संमिश्रितो भवति । तेन कर्मणो मूर्त्तत्वम्, जीवानाममूर्त्तत्वम् । तत्र येऽभव्यजीवा मोक्षार्थं नैव यतन्ते किन्तु संसारचक्रमेवानुवर्तन्ते, तदपेक्षया संसारोऽनादिरनन्तश्च । ये खलु स्वप्रयत्नद्वारा संसारचक्रमतिक्रम्य मुक्ता जाताः, तदपेक्षया संसारोऽनादिः सान्तश्चेति ।

## न्याय-वैशेषिकमतम्

न्यायवैशेषिकयोर्मते यथा घटादयः स्वगतरूपादिविशेषगुणवत्तया तद्द्वारा चक्षुरादिविषयत्वेन प्रत्यक्षसिद्धाः, तथैवात्माऽपि स्वगतसुखदुःखादिविशेषगुणवत्त्वेन तद्द्वारा मनोविषयत्वेन मानसप्रत्यक्षसिद्धः। तथाऽपि स्वात्मन्येवेदं प्रत्यक्षं प्रमाणं भवितुमर्हति। परात्मनि तु प्रामाण्यं नैव स्यादतस्तत्रानुमानं प्रमाणम्—"आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम्" [४७] इत्यादिना कारिकावल्यां प्रदर्शितम्। चक्षुरादीन्द्रियाणि करणानि सकर्तृकानि, फलोपधानात्मककारणत्वघटितकरणत्वाद् वास्यादिकरणवदिति । किञ्च, अहं सुखीत्यादिप्रत्ययः शरीराद्यात्मवादिसाधारणः, अतस्तेन स्वाभिमत आत्मा न प्रत्येतुं शक्यः । एवमनुमानादिवागमप्रमाणादपि तादृश आत्मा प्रत्येतुं शक्य एव । तथा चोक्तं गौतमसूत्रेऽपि —"इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्" [१।१ १०] इति। अत्राह न्यायभाष्यकारः–"यज्जातीयस्यार्थस्य सन्निकर्षात् सुखमात्मोपलब्धवान् तज्जातीयमेवार्थं पश्यन्नुपादातुमिच्छति, सेयमादातुमिच्छा एकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानाद्भवन्ती लिङ्गमात्मनः" इति, "सोऽयमेकसत्त्वस्य समाचारः, स्वयं दृष्टस्य स्मरणम्, नान्यदृष्टस्य नादृष्टस्येति। एवं खलु नानासत्त्वानां समाचारोऽन्यदृष्टमन्यो न स्मरतीति" [१।१।१०] इति च । न्यायवार्त्तिककारेणाप्युक्तम् –"कथमिच्छादि अनुपलभ्यमानमात्मानं गमयति, स्मृत्या सहैकविषयभावात्। यस्मादेवेच्छादयः स्मृत्या सहैकविषया भवन्ति, तस्मादेककर्तृकत्वं प्रतिपादयन्ति" इति, "अथवा देवदत्तस्य रूपरसस्पर्शप्रत्यया एकानेकनिमित्तकाः, स्मृत्या सह मयेति प्रतिसन्धानात्। कृतसङ्केतानां वृद्धानामेकस्मिन्नर्तकीभ्रूविक्षेपे युगपदनेकप्रत्ययवत्। यथा नानाकर्तृकाणां कृतसङ्केतानां नानाभूताः प्रत्यया निमित्तस्य भ्रूविक्षेपस्यैकत्वात् प्रतिसन्धीयते। तथेहापि नानाविषया निमित्तस्यैकत्वात् प्रतिसन्धास्यन्ते यत्तन्निमित्तं स आत्मेति" [१।१।१०] इति च ।

स च आत्मा विभुः परममहान्। अन्यथा विभुत्वस्य कालादावप्रत्यक्षत्वप्रयोजकत्वस्य दृष्टत्वादात्मनोऽपि प्रत्यक्षत्वं न स्यात्। अत एव नित्यः । तथा च स्तन्यपानादाविष्टसाधनताज्ञानेन

प्रवृत्तिः, जन्मान्तरानुभूतस्य तस्य स्मरणात्। आत्मनो जडत्वेऽपि स्वगतज्ञानगुणाश्रयतया चैतन्यम्। स च नैकः, किन्तु नाना। अत एव सुखदुःखादिव्यवस्थाऽऽञ्जस्येनोपपद्यते।

आत्मनि चतुर्दश गुणा भवन्ति। तदुक्तं श्रीविश्वनाथेन —

बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा।
धर्माधर्मौ गुणा एते ह्यात्मनः स्युश्चतुर्दश ॥ [कारिका० ३२] इति।

बुद्ध्यादिषट्कं बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः। संख्यादिपञ्चकं संख्यापरिमाणपृथक्त्वसंयोगविभागाः। तत्र बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नभावना धर्माधर्मौ च विशेषगुणाः, अन्ये सामान्यगुणाः। तत्र जीवानां प्रमाणप्रमेयादिपदार्थतत्त्वज्ञाने जाते मिथ्याज्ञानापायः, तदपाये च दोषापायः, दोषापाये प्रवृत्त्यपायः, प्रवृत्त्यपाये च जन्मापायः, जन्मापाये दुःखापायः। स एवात्यन्तदुःखापायो मोक्षः, अस्मिन्मत आत्मन आनन्दस्वरूपाभावात्। तत्र मिथ्याज्ञानम् आत्मादावात्मादिज्ञानाभावः। दोषा रागद्वेषौ। एतदधिकाराच्चासत्येर्ष्यामायालोभादयो द्वेषाः। प्रवृत्तिः पापात्मिकाऽधर्माय, पुण्यात्मिका धर्माय। जन्म उन्नतब्राह्मणादिषु, अवनततिर्यग्योनिषु चोत्पत्तिः। तदुक्तं गौतमसूत्रे — "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" [१।१।२] इति।

ननूभयोर्ज्ञानयोर्ज्ञानत्वेनाविशेषात् कथं तत्त्वज्ञानेन मिथ्याज्ञानं निवर्तत इति चेन्न, विरोधात्। वैपरीत्यं तु न, तत्त्वज्ञानस्य विषयसहायत्वेन ससहायत्वात्, मिथ्याज्ञानस्य चासहायत्वात्; आगमादिप्रमाणान्तरानुग्रहाच्च। तदुक्तं न्यायवार्त्तिककृता — "यदा ह्ययमनुमानागमयोः प्रतिसंहितयोर्विषयं भावयति, समाहितोऽनन्यमनाश्चिन्तयति, ततोऽस्य विपच्यमाने ध्याने विविक्तायां ध्यानभावनायां तस्मिन्नर्थे तत्त्वप्रतिबोधि ज्ञानं प्रत्यक्षमुपपद्यत इति" [१।१।२] इति।

## मीमांसकमतम्

मीमांसकानां मत आत्मा विभुः प्रतिशरीरं भिन्नः कर्ता भोक्ता द्रष्टा ज्ञानसुखदुःखेच्छादीनां समवायी न तु ज्ञानसुखादिरूपः, किन्तु ज्ञानशक्तिकः। तस्याश्च ज्ञानशक्तेर्न कदापि विनाशः। स्वकृतपुण्यपापैश्च जन्मजात्यायुर्भोगान् यथायथमिह परत्र च प्राप्नोति। योगेन प्रारब्धकर्माणि विनाश्य मुक्तो भवति। मोक्षश्च दुःखाभावमात्रं न सुखस्वरूपः। मुक्तस्य च स्वरूपमात्रमवतिष्ठते, नेन्द्रियादिकं नापि मनः। अतो मुक्तस्य न स्वरूपज्ञानं नातिरिक्तज्ञानं वा भवति। अत्र मते नास्ति जगतः कर्ता कश्चिदीश्वरः। जीवानां कर्मवशादेव तत्तदुपभोगार्थं

परमाण्वादिकारणसमुदायैर्घटादिरूपस्य जगत उत्पत्तिः। आत्माऽत्र मते द्रव्यम्। तेन साकं ज्ञानादिगुणानां भेदाभेद एव। तत्र द्रव्यत्वेन रूपेणाभेदः, ज्ञानादिरूपेण तु भेदः। एवं घटाद्यवयविनामपि स्वावयवेभ्यो भेदाभेद एव। नहि वस्तुद्वयप्रतीतिरेव भेदप्रतीतिः, तद्भावेऽपि भेदाप्रतीतेः। तथा हि देवदत्तमुपलभ्य कालान्तरे तत्सदृशं यज्ञदत्तं दूरादेव पश्यन् पूर्वोपलब्धं देवदत्तं च स्मरन् वस्तुतस्तद्विलक्षणमेव पुरुषद्वयं प्रत्येति। एवमपि भेदं नावधारयति। संशेते च किं स एवायं देवदत्तः किं वाऽन्यः? तस्माद्वस्तुद्वयप्रतीत्यभावेऽपि भेदप्रतीतिर्भवत्येव।

भट्टमते ज्ञानं न प्रत्यक्षं किन्त्वनुमेयम्। तत्र घटमहं जानामीति ज्ञाने ज्ञानात्पूर्वं विद्यमानघटापेक्षया ज्ञाते घटे कश्चिदतिशयो जायते। स चातिशय ऐन्द्रियकज्ञानजन्यमापरोक्ष्यं लिङ्गादिज्ञानजन्यं पारोक्ष्यम्। तादृशेन फलेन कार्यरूपेण कारणं ज्ञानमनुमीयते। अथवा ज्ञानक्रियाद्वारको ज्ञाने कर्तृभूतस्यात्मनः कर्मभूतस्यार्थस्य च परस्परं संबन्धो व्याप्तृव्याप्यत्वलक्षणः। स मानसप्रत्यक्षावगतो विज्ञानं कल्पयति। न ह्यागन्तुककारणमन्तरेणात्मनोऽर्थं प्रति व्याप्तृत्वमुत्पत्तुमर्हति। प्राभाकरास्तु ज्ञाने मितिमातृमेयाकारां त्रिपुटीं भासयन्ति। तन्मते ज्ञानं स्वयंप्रकाशम्, अर्थ आत्मा च ज्ञानद्वारेण। भाट्टमते त्वात्मा नैयायिकवदहमिति मानसप्रत्यक्षगोचरः। गुरुमते त्वात्मा घटादिज्ञानेष्विव विषयवदवभासते। एतन्मते ज्ञानकर्मसमुच्चयान्मोक्षः। प्रायश्चित्तेन संचितानाम्, काम्यकर्मणामननुष्ठानेन, प्रारब्धानां कर्मणामुपभोगेन, नित्यानां कर्मणां करणेन प्रत्यवायाभावान्मोक्षः। तत्राप्युपनिषजन्यं ज्ञानं दृष्टस्य यागादेरुपयोगि। उपासनाजन्यं ज्ञानं मोक्षसाधनम्—"सर्वान्कामान् समश्नुते" [तैत्ति० २।५], "न स पुनरावर्तते' [ना० प० ६।२०] इत्यादिवाक्यशेषात्। तदुक्तम्—

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः।
तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम्॥ इति।

## सांख्यमतम्

सांख्यमते आत्मा प्रतिशरीरं भिन्नः, चेतनो विवेकी प्रधानादिभ्य स्वतो विविच्यते, अप्रसवधर्मी उदासीनोऽकर्ता भोक्ता द्रष्टा मध्यस्थश्च। प्रकृतेरेव सर्वाणि कार्याणि, सत्त्वरजस्तमोगुणानां सर्वत्रानुस्यूतत्वात्। तदुक्तं सांख्यकारिकायाम्—

त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मी।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्॥११॥

ननु नास्ति काचित् प्रकृतिर्या जगतः सर्जनं करोति, अनुपलब्धेः। यदि स्यात्तत उपलभ्येत, इति चेन्न; अनुपलब्धावभावातिरिक्तानामपि कारणानां सद्भावात्। तानि च कारणानि अतिदूरम्, अतिसामीप्यम्, इन्द्रियघातः, मनोऽनवस्थानम्, सौक्ष्म्यम्, अभिभवः, समानाभिहारश्च। अतः सौक्ष्म्यान्न प्रकृतिरुपलभ्यते, किन्तु महदादिकार्यवशादनुमीयते। तथा हि कार्यं हि कारणगुणात्मकं भवति, प्रधानादीनां सुखदुःखमोहात्मकत्वात् सत्त्वरजस्तमोगुणात्मकत्वेन तदात्मकस्य कारणस्य प्रकृतिरूपस्य सिद्धिः। तत्र सत्त्वं लघु प्रकाशकं च। रज उपष्टम्भकं चलं च। तमो गुरु वरणकं च। एतेषां परस्परविरोधित्वेऽपि पुरुषार्थतः प्रदीपवत् प्रवृत्तिः सिद्धा, यथा वर्तितैले प्रबलविरोधिनी मिलिते प्रकाशलक्षणं कार्यं कुरुतः। नन्वेवं यदि प्रकृतिरेव सर्वाणि कार्याणि करोति तदा किमात्मनेति चेत्, अव्यक्तमहदादीनां संघातत्वेन परार्थत्वात्। ये हि संघातास्ते हि परार्थाः, शयनासनसंघातवत्। तथाऽधिष्ठानात्, त्रिगुणादिविपर्ययात्, सुखदुःखमोहादिभोक्तृभावात्, कैवल्यार्थं प्रवृत्तेश्च आत्मा सिद्ध्यति। नहि प्रकृत्यादीनां कैवल्यं भोक्तृभावश्च संभवति, अचेतनत्वात् स्वभावविरोधाच्च। तत्र प्रकृतिपुरुषयोः परस्परसंयोगात् पुरुषगतचैतन्येन प्रकृतिश्चेतनेव भाति प्रकृतिगतकर्तृत्वेन पुरुषः कर्तेव भाति। संयोगश्च पङ्ग्वन्धवत् पुरुषस्य कैवल्यार्थं प्रधानस्य दर्शनार्थं च भवति। तत्र प्रकृतिकृतेषु सत्त्वरजस्तमोविशालेषूर्ध्वाधोमध्यस्थितलोकेषु लिङ्गेन महदादिना पुरुषस्य भेदाग्रहाज्जरामरणजन्यं दुःखं पुरुषोऽनुभवति, पुरि लिङ्गे शेतेऽसौ पुरुष इति व्युत्पत्तेः। तत्र प्रधानस्याचेतनत्वेऽपि वत्सविवृद्ध्यर्थं क्षीरस्येव पुरुषविमोक्षनिमित्तं प्रवृत्तिर्भवति। नन्वेवं पुरुषार्थं प्रवृत्तावपि निवृत्तिः कथं स्यादिति चेन्न, नर्तकीवत् पुरुषायात्मानं प्रकाश्य निवृत्तिसिद्धेः। वस्तुतस्तु न कश्चिद् बध्यते न च मुक्तो भवति। केवलं प्रकृतिसंयोगवियोगाभ्यामेव बद्धो मुक्त इति व्यवहारः। तदुक्तं सांख्यकारिकायाम्—

> तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्।
> संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥६२॥
> दृष्टा मयेत्युपेक्षक एको दृष्टाहमित्युपरमत्यन्या।
> सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥६६॥ इति।

पातञ्जलयोगदर्शने च—"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" [१।२४] इतीश्वरतत्त्वमधिकं भवति। अत्र दर्शने योगमार्गः संप्रज्ञातासंप्रज्ञातसमाधिरूपः पुरुषार्थं मोक्षं

प्रत्युपयुज्यते। स च योग ईश्वरप्रणिधानादिना भवतीत्यादिना मोक्षोपायः प्रदर्शितः। आत्मतत्त्वे तु न किञ्चिद्वैलक्षण्यम्। केवलं प्रकृतिपुरुषयोर्भेदाग्रह एव संसारनिमित्तम्, तद्भेदग्रह एव मोक्षहेतुः।

## विशिष्टाद्वैतिमतम्

विशिष्टाद्वैतिनां मते आत्मा नाम देहेन्द्रियमनःप्राणबुद्धिभ्यो विलक्षणम्, चित्, अजडम्, आनन्दरूपम्, नित्यम्, अणु, अव्यक्तम्, अचिन्त्यम्, निरवयवम्, निर्विकारम्, ज्ञानाश्रयः, ईश्वरस्य नियाम्यम्, धार्यम्, शेषम्। इदङ्काराहङ्कारास्पदत्वेन देहादीनामात्मनश्च परस्परं वैलक्षण्यम्। तत्र चित् चिदाश्रयं वस्तु। अजडत्वं ज्ञानेन विना स्वयमेव प्रकाशमानत्वम्, तच्चानन्याधीनप्रकाशत्वम्। तथा च श्रुतिः—"यत्रायं पुरुषः स्वयंज्योतिर्भवति विज्ञानघनः", "तच्च ज्ञानमयं व्यापि" इत्यादि। आनन्दरूपत्वं सुखस्वरूपत्वम्, तच्च स्वापात्प्रबोधे सुखमहमस्वाप्समित्यनुसंधानानाद्भवति। तस्मिन् काले परागर्थाभावेनात्मातिरिक्तस्य कस्यचिदपि भानाभावेनात्मन एव सुखस्वरूपस्यानुभवाद् अनुभूतस्यैवानुसंधानात्। तदुक्तं श्रीभाष्ये—"एवं हि सुप्तोत्थितस्य परामर्शः सुखमहमस्वाप्सम्" इति, "आद्रं ज्वलति, निर्वाणमयमात्मा, आनन्दमयस्त्वात्मा" इत्यादिश्रुतिरत्र प्रमाणम्" इति। नित्यत्वं सर्वकालवर्तित्वम्। जन्ममरणादिव्यवहारस्तु देहादिसंयोगवियोगनिमित्तकः। अत्रापि—"द्वावजावीशानीशौ" [श्वेता० १।९], "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" [गीता० १३।१९] इत्यादिश्रुतिस्मृतयः प्रमाणम्। अणुत्वं तु "उत्क्रान्तिगत्यागतीनाम्" [२।३।२०] इति सूत्रयता व्यासेन, "तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः" [बृह० ४।४।२] इत्याद्युत्क्रमणादिबोधकश्रुत्यादिना च प्रतिपादितम्।

नन्वात्मनोऽणुत्वस्वीकारे समस्तशरीरे सुखदुःखानुभवानुपपत्तिरिति चेन्न; प्रभाद्वारा मण्यादिवद् ज्ञानद्वारा सर्वशरीरव्याप्तेः सुवचत्वात्। एवं ज्ञानद्वारेणैव योगयुक्तस्यात्मनोऽनेकशरीरोपलम्भो बोध्यः। उक्तोऽर्थः—"गुणाद्वालोकवत्" [२।३।२६] इति सूत्रे व्यासेनोक्तः, बृहदारण्यकेऽपि विस्तरेण प्रतिपादितश्च। ( सावशेषम् )

— —

# आत्मनोऽकर्तृत्वम्

श्रीदेवदत्तशर्मोपाध्यायः, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी।

को न जानाति यद् वेदान्तशास्त्रविचक्षणानामद्वैतरसास्वादसमुत्सुकानां ब्रह्मविद्यापरायणानां वेदविदुषाम् 'आत्मनोऽकर्तृत्वम्' इत्यनवरतमुच्चैर्घण्टाघोषो जगति बधिरयति सकलजननिवहम्। किञ्च नास्मिन् प्रसङ्गे तेषां प्रमाणमन्तरैव केवलं वाङ्मात्रप्रलापः, अपि तु भगवती श्रुतिरपि मुक्तकलकण्ठस्वरेण 'आत्मनोऽकर्तृत्वम्' शतशोऽनुगायति। दिग्दर्शनमात्रेण किञ्चिदेवात्र विदुषानां पुरतः प्रदर्श्यते। तथा हि—

"अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत्" [ श्वेता० १।६ ] इति श्वेताश्वतरीया श्रुतिः 'अकर्ता' इति पदं क्रोडीकृत्य नितरां ह्यकर्तृत्वमात्मनो बोधयतीति कस्य न विदितं सचेतसो महानुभावस्य। अस्याः श्रुतेरेष एवार्थो यत् त्रयं (भोक्तृभोगभोग्यरूपम्) मायात्मकत्वादधिष्ठानभूतब्रह्मव्यतिरेकेण नास्ति, किन्तु ब्रह्मैवेति यदा विन्दते तदा निवृत्तनिखिलविकल्पपूर्णानन्दाऽद्वितीयब्रह्मभाक् सन् कर्तृत्वादिसकलसंसारधर्मवर्जितो वीतशोकः कृतकृत्येऽवतिष्ठत इति। अथवा ज्ञाऽज्ञाऽजात्मकजीवेश्वरप्रकृतिरूपत्रयं ब्रह्मेति यदा विन्दते (लभते), तदा कर्तृत्वादिसकलसंसारधर्मवर्जितः सन् मुच्यत इति।

किञ्च—"साक्षी चेता केवलो निर्गुणश्च" [ श्वेता० ६।११ ] इति श्रुत्या ह्यात्मनः साक्षित्वमेव प्रत्यपादि, न तु कर्तृत्वमिति को न जानाति पण्डितप्रकाण्डः श्रीमान् वरेण्यः। अपि च—

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्।
अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्॥ [ श्वेता० ६।१९ ]

इति श्रुत्याप्यात्मनो निष्क्रियत्वमभाणि। यदि निष्क्रियत्वमात्मनस्तर्हि स्वाभाविकमकर्तृत्वमात्मनः समायातमेव। यतो हि क्रियामन्तरा न कर्तृत्वं कथञ्चिदपि संघटते। लोकेऽपि कुलालादिर्घटाद्युत्पादनादिक्रियां कुर्वन्नेव कर्तेति निगद्यते जनैः, न तु क्रियां विनैवेति सर्वजगत्प्रसिद्धमेतत्। करोतीति कर्तेति व्युत्पत्त्याऽपि क्रियावत एव कर्तृत्वमुपयुज्यते, न तु निष्क्रियस्य (निर्व्यापारस्य)। निष्क्रियत्वं च वदति श्रुतिः, अतोऽकर्तृत्वमात्मनो निर्विवादमेव संपद्यते।

अपि च—"एको वशी निष्क्रियाणां बहूनाम्" [ श्वेता० ६।१२ ] इति श्रुतौ जीवानां 'निष्क्रियाणाम्' इति विशेषणप्रदानमप्यात्मनोऽकर्तृत्वप्रसाधने प्रबलं प्रमाणमुपलभ्यते। अत एव भगवच्छङ्कराचार्यमहोदया अप्येतच्छ्रुतिभाष्ये लिखन्ति—"सर्वा हि क्रिया नात्मनि समवेताः, किन्तु देहेन्द्रियेषु। आत्मा तु निष्क्रियो निर्गुणः सत्त्वादिगुणरहितः कूटस्थः सन्ननात्मधर्मान् आत्मन्यध्यस्याऽभिमन्यते कर्ता, भोक्ता, सुखी, दुःखी, कृशः, स्थूलः, मनुष्यः, अमुष्य पुत्रः, अस्य नप्तेति। उक्तं च—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते॥
तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते॥
प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु।" इति।

[ गीता० ३।२७-२९ ]

अनेन ज्ञायते यन्निष्क्रियत्वेनाकर्तृत्वं भगवच्छङ्कराचार्यस्यापि संमतम्।

परमहंसपरिव्राजकाचार्यः श्रीविद्यारण्यो मुनिरपि स्वकीयविवरणप्रमेयसंग्रहे प्रथमसूत्रस्य चतुर्थवर्णके लिखति यत्—

"तमेतमात्मानमवैदिका देहादिबुद्ध्यन्तपदार्थरूपत्वेन प्रतिपन्नाः। मीमांसकादयस्तु तस्य देहादिव्यतिरेकं प्रतिपद्यापि कर्तारं भोक्तारं तमिच्छन्ति। तदेतत् सांख्या न सहन्ते। तथा हि न तावदात्मनः कर्तृत्वं स्वाभाविकम्, सर्वगतस्य निरवयवस्यात्मनः परिस्पन्दपरिणामलक्षणक्रियावेशायोगात्। स्वाभाविकत्वे चैतन्यवत् क्रियावेशो न कदाचिदपि व्यभिचरेत्। नापि कर्तृत्वमागन्तुकं भवितुमर्हति, निरवयवे कर्तृत्वहेतूपरागायोगात्। नापि बुद्धेः कर्तृत्वमात्मन्यारोपयितुं शक्यम्, अख्यातिवादे भ्रान्त्यभावात्। तस्मान्नास्ति कर्तृत्वम्" [४।२२] इति।

अनेन सुस्पष्टं यदात्मनोऽकर्तृत्वमेवेति।

यदाऽऽत्मज्ञानिपुरुषोऽपि सुस्पष्टं स्वात्मानमकर्तारं मनुते, तदा पुनः का कथाऽऽत्मनोऽकर्तृत्वप्रकाशनस्य, स त्वकर्ता सिद्ध एव। अत एव विद्यारण्यस्वामिना पञ्चदश्याश्चतुर्दशप्रकरणे

लिखितम्—

व्यवहारो लौकिको वा शास्त्रीयो वाऽन्यथापि वा ।
ममाऽकर्तुरलेपस्य यथारब्धं प्रवर्तताम् ॥ ५४ ॥
विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयताम् ।
साक्ष्यहं किञ्चिदप्यत्र न कुर्वे नापि कारये ॥ ५७ ॥ इति ।

"सर्वं खल्विदं ब्रह्म" [छान्दोग्य० ३।१४।१], "नेह नानास्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥" [ बृहदा० ४।४।१९ ] इत्यादिश्रुतिशतैरद्वैतमेव ये श्रद्दधति, तन्मते त्वात्मा कर्ता भवितुमर्हतीति शङ्काऽपि नोदेति, अतः सिद्धमकर्तृत्वमात्मन इति ।

विषयमेनमवलम्ब्य केचिदित्थमालपन्ति यन्निर्गुणत्वसगुणत्वविषयकविचारवद् अत्रापि (आत्मनोऽकर्तृत्वमिति विषयेऽपि) शङ्कासमाधानमनुष्ठेयम्, अर्थाद् यथा तत्र विषये समुत्थितानां शङ्कानां समाधानं विधाय व्यवस्था व्यवस्थापिता, श्रुतीनां च प्रामाण्यं सामञ्जस्यं च समुपस्थापितम्, तथेहापि विधातव्यमिति । तथा हि—आत्मनः (ईश्वरस्य) निर्गुणत्वसगुणत्वविषयमधिकृत्य कैश्चिदित्थं संभण्यते यत् काश्चिच्छ्रुतय आत्मनो निर्गुणत्वं प्रतिपादयन्ति, काश्चिच्च सगुणत्वं प्रतिपादयन्ति । तत्र निर्गुणत्वोपासिकासु श्रुतिषु प्रामाणिकरूपेण जगति जाग्रतीषु सगुणत्वोपासिकाः श्रुतयो विफला भवेयुः, सगुणत्वोपासिकासु च श्रुतिषु विश्वविदितासु प्रामाणिकरूपेण विद्यमानासु सतीषु निर्गुणत्वोपासिकाः श्रुतयः सर्वथापि निष्फला जायेरन् । परं विद्यन्ते चोभयविधा अपि श्रुतयः, अतः समबलत्वेन परस्परविरोधाद् उभयविधानामपि श्रुतीनां जीवनं प्रामाण्यं च प्रभज्ज्येत । न चैनं विचारं वयं स्वोत्प्रेक्षयैवोत्कलयामः, अपि तु न्यायशास्त्रप्रणेत्रा तत्रभवता गौतमेन मुनिनापि न्यायदर्शनीयद्वितीयाध्यायप्रथमाह्निकस्थषट्पञ्चाशत्तमे—"तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः" [ २।१।५६ ] इति सूत्रे संव्यभाणि यद् व्याघातदोषादप्रामाण्यं प्रसज्ज्यते । अर्थाद् यत्र व्याघातदोषः समापतति, तत्राप्रामाण्यं भवति । यदि चोपनिषत्सु व्याघातदोषः समुज्जृम्भते, तर्हि तासामप्याप्रामाण्यं नूनं समवतिष्ठेतेत्यादीति ।

अपि चापरोऽप्येको दोषः समायाति यत् सुन्दोपसुन्दन्यायेन परस्परं विहन्यमाना उभयविधा अपि श्रुतयो विनश्येयुः । एवं चोपनिषदामप्रमाणत्वेनाध्यात्मविद्याया विनाशाज्जगदान्ध्यमापद्येत । अपि च तदनुसरणशीलानां गीताप्रभृतिप्रकृष्टग्रन्थानां ब्रह्मविद्याविशिष्टविचारविज्ञापकानामपि प्रामाण्यमपगच्छेत् । तथा च गार्ग्यजातशत्रुजनकयाज्ञवल्क्यादीनां ब्रह्मविद्यादिविषयकसंवादादीन् न कश्चिदपि वरीयान् विचक्षणो विश्वसेत् । एवं प्रकारेणानेके दोषाः

प्रादुःष्युः । अतस्तत्र पूर्वोक्तदोषपरिजिहीर्षुभिरुपनिषदां प्रामाण्यं चाभिलषद्भिरित्थमत्र वक्ष्यमाणप्रकारेण व्यवस्था व्यवस्थाप्यते, तदर्थं प्रोच्यते च तैः—

नास्त्युपनिषत्सु परस्परव्याघातदोषलेशगन्धोऽपि । यतो हि सत्त्वरजस्तमोरूपा ये प्रकृतेर्गुणाः, ये च रूपरसस्पर्शगन्धादयो भूतगुणाः सन्ति, ये च रागद्वेषक्लेशाऽविद्याऽल्पज्ञतादयो गुणा जीवस्थाः सन्ति, ते सर्वेऽपि तस्मिन् भगवति जगन्नियन्तृजगदीश्वरे न भवन्त्येव, अतः 'गुणेभ्यो निष्क्रान्तो निर्गतो वा निर्गुणः' इति व्युत्पत्त्या जीवप्रकृतिगुणेभ्यो बहिर्भावादीश्वरस्य निर्गुणत्वं सिद्धयति । अत एवोपनिषदि प्राभणितम्—"अशब्दमस्पर्शमरूपमव्ययम्" [कठो० १।३।१५] इत्यादि । किञ्च योगशास्त्रेऽपि च व्यलेखि तत्रभवता पतञ्जलिमुनिना—"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" [ योग० १।२४ ] इति । इत्थमेव ये चानन्तज्ञानबलैश्वर्यपराक्रमपवित्रताप्रभृतयो गुणाः परमेश्वरे संविराजन्ते, तैर्गुणैः 'गुणैः सह वर्तते सगुणः' इति व्युत्पत्त्या स विश्वविभूतिर्विश्वम्भरो भगवान् सगुण इति संप्रोच्यते बुधैः । अत एवोपनिषदि समुट्टङ्कितम्—"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" [ श्वेताश्व० ६।८ ] इति ।

अपि च वैदिकपरम्परापुनरुज्जीवकस्वामिदयानन्देनापि सत्यार्थप्रकाशप्रथमसमुल्लासे पूर्वोक्तसामञ्जस्यप्रक्रियैवात्र विषय उररीकृतेति को न जानाति सहृदयः सचेतस्को बरीयान् विद्वान् । इत्थमेव पृथिव्यादयोऽपि गन्धादिगुणसहितत्वेन सगुणाः, ज्ञानादिगुणरहितत्वेन च निर्गुणा इत्येककालावच्छेदेन कथयितुं पार्यते सर्वैरपि विदुषां वरैः ।

एवं च निर्गुणत्वसगुणत्वविषयकः कश्चिदपि दोषो विवादो वाऽऽत्मनि नोपस्थितो भवति । न चोपनिषदामप्रामाण्यमापद्यते । तथा च यथाऽत्र समाधानं विहितम्, तथैव 'आत्मनोऽकर्तृत्वम्' इति विषयेऽपि समाधानमास्थेयम् । अर्थाद् आत्मा परमेश्वरो ब्रह्म वा जगदुत्पादनादिरूपाणि कार्याणि संविधाति, अतस्तस्य सकर्तृकत्वं प्रसिध्यति । किञ्चैतस्मिन् विषये वेदादयोऽपि प्रमाणीभूताः सन्ति । यथा—

"सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥" [ऋ० १०।१९०।१] इति, "विश्वस्य कर्ता भुवनस्य गोप्ता" [मुण्डको० १।१।१] इति, "एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति" [कठो० २।२।१२] इत्यादि, "बहूनां यो विदधाति कामान्" [कठो०२।२।१३] इति, "सर्वकर्मा सर्वकामः सर्वगन्धः" [छान्दोग्य० ३।१४।४] इति, "आत्मा देवानां जनिता प्रजानाम्" [छान्दोग्य० ४।३।७ ] इति, "तया मामद्य मेधयाग्ने मेधाविनं कुरु स्वाहा" [यजु० ३२।१४] इति, "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः"

[यजु० ४०।२] इत्यादिमन्त्रैर्जीवस्यात्मनः कर्तृत्वं तु सर्वत्र जगति विद्योततेतराम्। नैयायिक-वैशेषिकमीमांसकानुयायिप्रभृतयस्तु सुतरामेवात्मनः कर्तृत्वं व्याभणन्ति। तेषां च सिद्धान्तोऽप्येष यत् 'आत्मा कर्ता भोक्ता' इत्यादीति। अपि च वेदान्तदर्शनप्रणेता भगवान् व्यासोऽपि चात्मनोऽर्थाद् ब्रह्मणः कर्तृत्वं प्रतिपादयत्येव। अत एव वेदान्तशास्त्रे ब्रह्मलक्षणविज्ञापनवेलायाम्—"जन्माद्यस्य यतः" [ब्रह्म० १।१।२] इति सूत्रेण ब्रह्मणोऽर्थादात्मनो जगदुत्पत्त्यादिरूपकार्यकर्तृत्वं निश्चप्रचं समुद्घोषयत्येव प्रवरो मुनिः। एवमेवान्येषामपि बहूनां रामानुजप्रभृतीनां विवेचकानां मत आत्मनः कर्तृत्वादिकं सुप्रकाशितं सुव्यवस्थितं च प्रद्योततेतराम्।

किञ्च यानि चौर्यच्छलच्छिद्रादिरूपाणि दुष्कर्माणि सन्ति तानि स आत्मा (परमेश्वरः) परमपवित्रस्वभावत्वान्न करोति, अतस्तस्यात्मनोऽकर्तृत्वं चापि प्रद्योतितं भवति। अत एव पूर्वोक्तासु—"अनन्तश्चात्मा विश्वरूपो ह्यकर्ता" [श्वेता० १।९] इत्याद्युपनिषच्छ्रुतिषु 'आत्मनोऽकर्तृत्वम्' शतशः समुद्घोषितं वरीवर्ति। मन्ये यत् परमहंसपरिव्राजकाचार्येण तत्रभवता विश्वविदितेन शङ्कराचार्येणापि चेत्थमेव चेतसि समाकलय्य ह्यात्मनोऽकर्तृत्वं प्रकाशितमिति। कथमन्यथा कर्तृत्वप्रतिपादिकासु श्रुतिषु विद्यमानासु सतीषु तादृशो महीयान् विद्वानात्मनोऽकर्तृत्वं प्रतिपादयेत्।

एवमेव लोकेऽपि दरीदृश्यते यद् यो यस्य कार्यस्य कर्ता, तेन कार्येण तस्मिन् कर्तृत्वमायात्येव। यस्य कार्यस्य च सोऽकर्ता, तेन कार्येण तस्मिन्नकर्तृत्वमापतत्येव। यथा लोके पाचकः पचनादिरूपक्रियाकरणात् कर्ता, अर्थात् पचनकर्तेति व्यवह्रियते। परं सुवर्णकुण्डलनिर्माणादिरूपक्रियाया अकरणाच्च 'अकर्ता' अर्थात् सुवर्णकुण्डलाऽकर्ता च समुद्घोषितो भवति। इत्थं चैकस्मिन्नेव काले सः 'कर्ता, अकर्ता' इत्युभयथापि प्रकाशितः संविज्ञातश्च भवति समेषां जनानां सिद्धान्तेन।

एतेन पूर्वोक्तेन समुदितेन वागाडम्बरेण प्रकृत इदमायातं यद् आत्माऽपि याः क्रिया विदधाति, ताभिस्तस्य कर्तृत्वं नूनं संभवत्येव; याश्च नानुतिष्ठति ताभिश्च तस्याकर्तृत्वमपि समुद्योतितं भवत्येव। एवंप्रकारेणोभयविधश्रुतिसामञ्जस्यव्यवस्थाव्यवस्थापनेन न काचिद् दोषापत्तिरापतततितरामिति।

परमद्वैतवादिनां मते तु पूर्वोक्तप्रक्रियया 'आत्मनोऽकर्तृत्वम्' एव व्यवस्थापितं भवतीति विनिश्चिन्वन्तु तत्रभवन्तो भगवन्तो जगति जागरूका महामहनीयमहीयांसो विद्वांसः॥

—— —

# स्फोटविस्फोटः

श्रीबदरीनाथशुक्लः, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी ।

शाब्दिकाः शब्दश्रवणसमनन्तरं जायमानस्य विजातीयस्यार्थानुभवस्योपपादकतया स्फोटमभ्युपगच्छन्ति । तेषामयमाशयः—'घटमानय' इत्येतद्वाक्यं श्रुतवता पुंसा क्रियमाणं घटानयनं निरीक्ष्य तत्कारणतया श्रोतृप्रवृत्तिः, तत्कारणतया च श्रोतुर्घटानयने कार्यताज्ञानं क्रमेणानुमीयते । घटानयने कार्यताज्ञानं चेदं स्मरणात्मकं नाङ्गीकर्तुमर्हम्, तत्पूर्वं तद्वतः पुंसस्तत्समानाकारस्यानुभवस्याजातत्वात्, स्मरणस्य च समानाधिकरणसमानाकारानुभवपूर्वकत्वनियमात् । अनुभवात्मकत्वेऽपि तत्पूर्वोक्तवाक्यघटकतत्तत्पदाधीनतत्तदर्थस्मरणरूपज्ञानलक्षणसन्निकर्षसाध्यालौकिकमानसप्रत्यक्षरूपमपि स्वीकर्तुं न शक्यम्, तथा सति "घटः, कर्मत्वम्, आनयनम्, कृतिः" इति पदकदम्बप्रसूततत्तदर्थस्मृतितोऽपि तादृशबोधप्रसङ्गेन शब्दश्रवणानन्तरभाविनि बोधे शब्दोपस्थाप्यस्यैव शब्दानुपस्थाप्यस्यापि कारणान्तरोपस्थाप्यस्यार्थस्य भाने बाधकाभावेन च शब्दश्रवणसमनन्तरभाविनोऽनुभवस्य साकाङ्क्षशब्दानुपस्थाप्यार्थाविषयकत्वनियमभङ्गप्रसङ्गात् । तस्यानुमित्याद्यात्मकत्वमपि न स्वीकारयोग्यम्, व्याप्तिविशिष्टपक्षधर्मताज्ञानादिलक्षणमनुमित्यादिकारणमन्तरेणापि जायमानत्वात् । अतोऽगत्या तद्बोधस्य प्रत्यक्षानुमित्यादिविजातीयविशिष्टानुभवत्वमवश्यमभ्युपेयम् । यथोक्तं शब्दशक्तिप्रकाशिकायां जगदीशतर्कालङ्कारेण—

साकाङ्क्षशब्दैर्यो बोधस्तदर्थान्वयगोचरः ।
सोऽयं नियन्त्रितार्थत्वान्न प्रत्यक्षं न चानुमा ॥ २॥ इति ।

तत्कारणताऽप्यन्वयव्यतिरेकानुविधानानुरोधवशात् श्रूयमाणस्य 'घटमानय' इति वाक्यस्यैवाङ्गीकार्या । वाक्यं चैतत् 'घटम्' इति सुबन्तस्य 'आनय' इति तिङन्तस्य च मिथः समभिव्याहारेण, 'घटम्' इति पदं घटप्रकृतेरम्प्रत्ययस्य च नियतेन पौर्वापर्येण, 'आनय' इति पदं च आङ्पसृष्टनीप्रकृतेर्लोट्लकारमध्यमपुरुषैकवचनसिप्स्थानिकहितिङात्मकप्रत्ययस्य च योगेन निर्वाह्यम् । घटादिप्रकृतयोऽमादिप्रत्ययाश्च घकाराकारादितत्तद्वर्णानां नियतानुपूर्व्या निर्वर्त्याः । वर्णाश्च ते ते क्रमिकाः क्षणिकाश्चेत्युक्तवाक्यस्य स्वरूपतः प्रतीतितश्च दुर्घटतया तदाकर्णनानन्तरं जायमानस्यार्थानुभवस्य लोकेन वाक्यतया व्यवह्रियमाणाद् विन्यासविशेषशालिनस्तस्माद्

## स्फोटविस्फोटः

वर्णराशिरूपाद् वाक्यादुत्पत्तिस्वीकृतिर्न कथञ्चिदपि घटत इत्यकामेनापि तादृशानुभवप्रभावक-तद्वाक्यरूपरूपितः कश्चन शाश्वतः शब्दोऽभ्युपेतव्यः, यश्च तादृशः शब्दः स एव "स्फुटत्यनुभव-पथमारोहत्यर्थो यस्मात्" इति व्युत्पत्त्या स्फोटशब्देन व्यपदिश्यते। स एव च तत्तदर्थबोधकता-रूपायास्तत्तदर्थनिरूपिताया शक्तेराश्रयः, तदतिरिक्तस्य वर्णसमूहात्मनः शब्दस्य निष्पत्त्यन-र्हतया तदाश्रयत्वानुपपत्तेः। तथा हि धनादिशब्दघटकः प्रत्येकं वर्णो यदि शक्त्याश्रयस्तदा धवर्णेनैव विवक्षितार्थबोधप्रभवसंभवेन द्वितीयादिवर्णोच्चारणस्य वैयर्थ्यं प्रत्येकं वर्णस्यार्थवत्त्वेन प्रातिपदिकसंज्ञाऽऽस्पदतया प्रातिपदिकान्तत्वेन धनादिशब्दघटकनकारस्य प्रातिपदिकान्तलोपा-पत्तिश्च स्यात्। यदि चैतद्दोषभिया वर्णसमूहस्य शक्त्याश्रयत्वमास्थातुमिष्येत तदा तदप्य-संभाव्यम्, वर्णानां क्रमिकक्षणिकत्वाभ्यां तत्समूहस्य संघटनायोगात्। इत्थं च विवक्षितार्थस्य प्रतिपादकतया शक्त्याश्रयतया च स्फोटात्मा शब्दः सिध्यति।

### को नाम स्फोटः

स्फोटो हि मूलाधारोत्थपवनेन परां प्रणोद्य नाभिं गतेन जातक्षोभाया मध्यमाया वाचः समुद्गतेन सूक्ष्मतरेण नादेन हृदयेऽभिव्यज्यमानं नित्यं निरवयवं शब्दब्रह्मैव। अयं भावः — यद् बृहद् बृंहणं च तद् ब्रह्म, बृहत्त्वं नाम देशतः कालतः स्वरूपतश्चाविच्छिन्नत्वम्। बृंहणत्वं च जगदाकारेण विवर्तमानत्वम्। तथा च सर्वस्य जगत उपादानभूतं व्यापकं नित्यमद्वयं च यत्तत्त्वं तदेव ब्रह्म। यथोक्तं हरिणा वाक्यपदीये —

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।<br>
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ [१।१] इति।

तच्च स्वप्रकाशसंविद्रूपतया स्वोपादेयभूतस्य निखिलस्यार्थजातस्य शब्दनाद् विज्ञापनात् सर्वप्रथमं शब्दात्मना विवर्तनाद् वा शब्दब्रह्मशब्देन व्यवह्रियते। तदेव च "वक्ति बोधयत्यर्थं या सा वाक्" इति व्युत्पत्त्या 'वाक्' इति शब्देनापि व्यवह्रियते। सा च वाक् सर्वव्यापकतया कृत्स्ने शरीरे समवतिष्ठमानाऽप्युपाधिविशेषवशात् परा-पश्यन्ती-मध्यमा-वैखरीभेदाच्चतुर्धा प्रथते। यथोक्तं ऋग्वेदे—

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।<br>
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥

[ ऋ० १।१६४।४५ ]

अत्र श्रीमाधवाचार्येण ऋग्वेदभाष्ये 'चत्वारि पदानि' इत्यनेन परा-पश्यन्ती-मध्यमा-वैखरीरूपाणि दर्शितानि। नन्दिकेश्वरेणाप्युक्तम्—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः।
आद्यमन्तेन संयोगादहमित्येव जायते॥
इकारादिहकारान्ता वर्णाः समभवंस्ततः।
सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत्॥
ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः परम्।
वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः॥

अयमर्थो नागेशभट्टेन लघुमञ्जूषायां विस्तरेण परमलघुमञ्जूषायां च संक्षेपेण वर्णितः। तद् यथा परमलघुमञ्जूषायाम्—

"कोऽयं स्फोटः? उच्यते। चतुर्विधा हि वागस्ति—परा, पश्यन्ती, मध्यमा, वैखरी च। तत्र मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परा वागुच्यते। नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता मनोगोचरीभूता पश्यन्ती वागुच्यते,···ततो हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते, तत आस्यपर्यन्तमागच्छता वायुनोर्ध्वमाक्रामता मूर्धानमाहत्य परावृत्य च तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्राह्या वैखरी वागुच्यते। तदाह—

परा वाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥ इति,
वैखर्या हि कृतो नादः परश्रवणगोचरः।
मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते॥ इति च।

···तत्र मध्यमानादोऽर्थवाचकस्फोटात्मकशब्दव्यञ्जकः। वैखरीनादो ध्वनिः सकलजनश्रोत्रमात्रग्राह्यो भेर्यादिनादवन्निरर्थकः। मध्यमानादश्च सूक्ष्मतरः कर्णपिधाने जपादौ च सूक्ष्मतरवायुव्यङ्ग्यः शब्दब्रह्मरूपस्फोटव्यञ्जकश्च। तादृशमध्यमानादव्यङ्ग्यः शब्दः स्फोटात्मको ब्रह्मरूपो नित्यश्च" [पृ० २५-२७] इति।

ननु नेयं स्फोटनिरुक्तिर्निरवद्या। यतो हि यदि मध्यमानादेन हृदयदेशे व्यज्यमानस्य शब्दब्रह्मण एव स्फोटत्वमर्थबोधकत्वं च तदा श्रोतुरर्थबोधः कथं स्यात्? मध्यमानादस्य वक्तृ-

येनैवोत्पन्नतया तेन वक्तुर्हृदयदेश एव स्फोटाभिव्यक्तेः। एकस्य पुंसः स्फोटाभिव्यक्तेरन्यस्य पुंसोऽर्थबोधकत्वे चातिप्रसङ्गात्। यद्येवमुच्येत यन्मा भवतु मध्यमानादः श्रोतरि, वैखरीनाद एव श्रोत्रद्वारेण श्रोतुर्हृदयदेशं गतस्तत्र स्फोटमभिव्यनक्ति, तदभिव्यक्तेनैव च स्फोटेन श्रोतुरर्थबोधो भवतीति; तन्न युक्तम्, तथा सति "मध्यमानादेन हृद्देशे व्यज्यमानं शब्दब्रह्म स्फोटः" इति स्फोटपरिभाषोपपीडनप्रसङ्गात्। यद्येवं समाधीयेत यत् सा परिभाषा वक्तुरर्थबोधकस्य स्फोटस्यैव न तु स्फोटसामान्यस्य, स्फोटसामान्यस्य परिभाषा तु "नादेन हृदयदेशे व्यज्यमानं शब्दब्रह्म स्फोटः" इत्येवंरूपेति; तदपि न शोभनम्, वैखरीनादस्यापि स्फोटव्यञ्जकत्वे तेन श्रोत्रदेश एव स्फोटाभिव्यक्तेरुपगमस्यौचित्येन हृदयदेशपर्यन्तं तन्नादगतेः स्वीकारस्यानावश्यकत्वात्। तथा सति तत्स्फोटस्य बाह्यताया अप्यधिकतरमुपपन्नत्वात्। श्रोत्रदेशे शब्दब्रह्मणोऽभावान्नैतत्संभवमिति तु रिक्तं वचः, विभुतया तत्रापि तत्सत्ताया अनिवार्यत्वात्। न चेष्टापत्तिः, तथा सति श्रोत्रस्थाया वाचोऽपि वक्तव्यत्वापत्त्या वाचश्चातुर्विध्यव्यवस्थाभङ्गप्रसङ्गात्। तस्या वैखर्यामेवान्तर्भावान्नैष दोष इति तु शून्यः शब्दः, वैखर्या मूलाधारोत्थेन मूर्ध्नः परावृत्तेनास्यादिदेशाभिहन्त्रा पवनेनैवाभिव्यज्यमानतायाः स्वीकारेणाऽतथाभूतायाः श्रोत्रस्थायास्तत्रान्तर्भावायोगादिति चेन्न; श्रोत्रदेशे सतोऽपि शब्दब्रह्मणो न तद्गतेन नादेनाभिव्यक्तिः, अभिव्यक्तावपि वा न तस्य स्फोटत्वोपगतिः, हृदयस्थस्य नादाभिव्यक्तशब्दब्रह्मणो वक्तुर्बोधानुरोधेन स्फोटरूपताया अवश्यमभ्युपगमनीयत्वेन वैखरीनादस्य श्रोतुर्हृदयदेशे गमनमात्रस्वीकारान्निर्वाहस्य संभवेन श्रोत्रस्थशब्दब्रह्मणोऽपि तत्स्वीकारे गौरवापत्तेः।

अत एवोक्तं नागेशेन परमलघुमञ्जूषायाम्—"अत्रेदं बोध्यम्। केनचिद् घटमानयेति वैखरीनादः प्रयुक्तः। स केनचिच्छ्रोत्रेन्द्रियेण गृहीतः। स नाद इन्द्रियद्वारा बुद्धिहृद्गतः सन्नर्थबोधकं शब्दं स्वनिष्ठकत्वादिना व्यञ्जयति। तस्मादर्थबोधः" [पृ० ३१-३२] इति।

अत्रेदं विभावनीयम्—तत्तच्छब्दजतत्तदर्थबोधे तत्तच्छब्दरूपरूषितस्फोटव्यक्तेः कारणतया स्फोटे तद्व्यक्तौ वा हृदवच्छेद्यत्वस्य श्रोत्रावच्छेद्यत्वस्य वा कारणतावच्छेदकघटकतयाऽप्रवेशेनोक्तगौरवसंभावनाया दूरपराहततया वैखरीनादस्य हृदि गमनोपगमो निरर्थक एव, वैखरीनादेनाभिव्यक्तात् श्रोत्रस्थशब्दब्रह्मण एवार्थबोधस्य संभवात्। तत्स्वीकारे प्रथमं श्रोत्रे ततो हृदि द्विधा शब्दव्यक्तिस्वीकारेण सकृदुच्चरितस्य सकृदेव श्रुतिरिति सार्वजनीनानुभवविरोधाच्च।

## स्फोटस्य भेदाः

स्फोटो यद्यप्येक एव वस्तुगत्या, तथापि व्यञ्जकोपाधिभेदाद् भिद्यमान इवाभ्युपेयते। व्यञ्जकाश्च वर्ण-वर्णजाति-पद-पदजाति-वाक्य-वाक्यजाति-अखण्डपद-अखण्डवाक्यान्यष्टाविति तत्तद्व्यङ्ग्यः स्फोटोऽप्यष्टधा। तद् यथा वैयाकरणभूषणसारे कौण्डभट्टेनाभाणि—"वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, अखण्डपदवाक्यस्फोटौ, वर्णपदवाक्यभेदेन त्रयो जातिस्फोटा इत्यष्टौ पक्षाः सिद्धान्तसिद्धाः" [का० ६१, पृ० ३८६] इति। लघुमञ्जूषायां नागेशभट्टभणित्यनुसारी स्फोटभेद इत्थमभ्युपगतः प्रतिभाति—स्फोटो द्विविधः - आन्तरो बाह्यश्च। तत्रान्तरो बुद्ध्यनुपातिरूपः। बाह्यश्च द्विविधः—जातिस्फोटो व्यक्तिस्फोटश्च। तत्र व्यक्तिस्फोटो वर्णपदवाक्यानां त्रैविध्येन, पदवाक्ययोश्च सखण्डाखण्डभेदाद् द्वैविध्येन पञ्चविधः। जातिस्फोटश्च वर्ण-सखण्डपद सखण्डवाक्यगतानां जातीनां त्रैविध्येन त्रिविधः। इत्थं बाह्यस्फोटोऽष्टधा कल्प्यते।

उत्तरप्रदेशशासनेन वाराणसेये सरस्वतीभवने गवेषणाकार्यार्थं नियुक्तेन श्रीरामाज्ञा-पाण्डेयमहोदयेनात्मनो व्याकरणदर्शनभूमिकायां स्फोटस्याष्टविधत्वमवधूय मतभेदेन स्फोट-बोध्ययोर्व्यक्तिजात्योर्भेदात् स्फोटस्य मुख्यतया द्वैविध्यमवान्तरभेदविवक्षया च षोडश-विधत्वं प्रत्यपादि। तद्यथा—

"अस्यां स्थितौ वाक्यार्थज्ञानामस्माकं कृते वाक्यस्फोटस्य विलय एव स्यात्। नापि 'पचति' इत्यादौ पदस्फोटव्यवहारः। तथा चायं विभागो नहि युक्तियुक्तः। अत एव नागेशभट्टो नह्यष्टौ स्फोटान् मञ्जूषायां निरदिक्षत्, किन्तु केवलमान्तरबाह्यभेदेन द्वावेव··· भेदौ प्रादर्शयत्। तथा च व्यवहारदृष्ट्या बाह्यस्फोटप्रदर्शने प्राप्ते वक्ष्यमाणरीतिरेवास्माभि-रवलम्बनीया। तथा हि व्यक्तिः पदार्थ इति व्याडिमते व्यक्तिस्फोटः = व्यक्तिबोधकः स्फोटः, जातिपदार्थवादिनो वाजप्यायनस्य मते जातिस्फोटः = जातिबोधकः स्फोट इत्येवंरूपेण द्वौ स्फोटावभ्युपगन्तव्यौ। यदि चावान्तरस्फोटप्रतिपादन आग्रहस्तर्हि कल्पितानि पदानि, कल्पितपदेषु कल्पितौ प्रकृतिप्रत्ययावादाय वक्ष्यमाणपद्धत्या स्फोटः स्वीकार्यः। एवं सति (१) प्रकृतिस्फोटः, (२) प्रत्ययस्फोटः, (३) प्रकृतिजातिस्फोटः, (४) प्रत्ययजातिस्फोटः, (५) पदस्फोटः, (६) पदजातिस्फोटः, (७) वाक्यस्फोटः, (८) वाक्यजातिस्फोटः, (९) अखण्डपदस्फोटः, (१०) अखण्डपदजातिस्फोटः, (११) अखण्डवाक्यस्फोटः (१२) अखण्डवाक्यजातिस्फोट इति द्वादश स्फोटा

भविष्यन्ति। तत्तदवयवविवक्षाऽविवक्षाभेदेन प्रकृतिप्रत्ययादिकल्पनाऽकल्पनाभ्यां सर्वेषां कृत एते द्वादश स्फोटा युक्तियुक्ता भवेयुः। एतदेव विचार्य मञ्जूषायां नागेशभट्टो द्वावेव स्फोटौ प्रत्यपादयत्। यच्च भट्टनागेशो लघुमञ्जूषायाम् "तत्र प्रकृतिप्रत्ययनिपातानामेकवर्णानामर्थवत्त्वदर्शनात्' इत्यादिना प्रत्याहाराह्निके भाष्ये उक्तः प्रकृतिप्रत्यययोर्वाचकत्वमित्येवंरूपो वर्णस्फोटः शास्त्रीयप्रक्रियोपयोग्येव न वास्तवः" [पृ० ४५७] इत्याद्यवोचत्, तद् वक्ष्यमाणभाष्यानुरोधाद्धेयमेव। वस्तुतस्तु वर्णस्फोटोऽप्यधिकस्तत्र निवेशयितुं शक्यते, प्रत्याहाराह्निके "ऐऔच्" इति सूत्रोपरि "अथवोभयतः स्फोटमात्रं निर्दिश्यते" इति भाष्योक्त्या शुद्धेषु ऋकारादिवर्णेषु स्फोटसत्ताया अभ्युपगमात्। तथा च जातिव्यक्तिभेदेन द्वौ वर्णस्फोटावधिकौ तत्र सन्निवेश्याविति चतुर्दश स्फोटाः सम्पन्नाः। प्रकृतिप्रत्ययविषयेऽप्यखण्डसखण्डभेदेन द्वयोरपरयोरपि संमेलनेन षोडश स्फोटाः सम्पद्यन्ते" [पृ० ४८-५०] इति।

कौण्डभट्टादिमततः श्रीपाण्डेयमते मौलिकमन्तरमेतदस्ति यत् कौण्डभट्टादयः स्फोटव्यञ्जकभेदेन स्फोटभेदं मन्यन्ते, श्रीपाण्डेयस्तु स्फोटबोध्यार्थभेदेन स्फोटभेदं ब्रवीति। अतस्तदुक्तेषु षोडशस्फोटभेदेषु प्रकृतिस्फोटादिशब्दस्य प्रकृतिव्यङ्ग्यव्यक्तिस्फोट इत्याद्यर्थः, प्रकृतिजातिस्फोट इत्यादिशब्दस्य च प्रकृतिव्यङ्ग्यजातिस्फोट इत्याद्यर्थोऽवसेयः।

अथ श्रीपाण्डेयप्रस्फोटिते स्फोटभेदे विस्फोटः कश्चन स्फुरति—श्रीपाण्डेयेन वाक्यार्थज्ञानां पदार्थज्ञानां च कृते वाक्यस्फोटपदस्फोटयोर्विलयं संभाव्य कौण्डभट्टाद्युक्तं स्फोटस्याष्टविधत्वं यन्निराकृतं तस्यायमेवाशयो भवितुमर्हति यद् यदि प्रकृतिप्रत्ययजन्यबोधाभावे सति पदस्फोटेन बोधेऽखण्डपदस्फोटः, एवं पदजन्यबोधाभावे सति वाक्यस्फोटेन बोधेऽखण्डवाक्यस्फोटो भवेत्तदा व्याकरणज्ञानशून्यानां पदवाक्यस्फोटयोः संभवेऽपि वैयाकरणानां प्रकृतिप्रत्ययजन्यबोधपूर्वकमेव पदस्फोटेन, पदज्ञानजन्यबोधपूर्वकमेव वाक्यस्फोटेन च बोधस्य जननात्तेषां कृते स्फोटाविमौ नैव संभवेताम्। तथा च स्फोटस्य कथितोऽष्टधा विभागः सर्वान् प्रति नोपपद्येत। अत्रोच्यते—

स्फोटविभागस्योक्तरीत्या श्रीपाण्डेयेनायुक्तत्वप्रतिपादनं न संगच्छते। यतो हि नायं विभागः सर्वान् प्रति संभवाभिप्रायेण वर्णितः, किन्तु व्यञ्जकभेदेन स्फोटभेदिका यावत्यो दृष्टयः संभवन्ति तासां सङ्कलनया वर्णितः। अन्यथा सर्वान् प्रति संभवाभिप्रायेण विभागस्य विवक्षितत्वे

जातिव्यक्तिरूपार्थभेदेन तदुक्तो विभागोऽपि न संगच्छते; जातिपदार्थवादिनो व्यक्तेः, व्यक्ति-पदार्थवादिनश्च जातेः स्फोटावाच्यतया तद्भेदप्रयुक्तस्य स्फोटभेदस्य दुर्घटत्वात्।

किञ्च, प्रकृतिप्रत्यययोरपि सखण्डाखण्डभेदमुपगम्य यद् व्यक्तिस्फोटजातिस्फोटयोः षोडशविधत्वमुक्तं तदपि न युज्यते। तथा सति सखण्डप्रकृतिस्फोटः, सखण्डप्रकृतिजातिस्फोटः, अखण्डप्रकृतिस्फोटः, अखण्डप्रकृतिजातिस्फोट इत्येवं प्रकृतिव्यङ्ग्यस्फोटस्य; एवं सखण्डप्रत्यय-स्फोटः, सखण्डप्रत्ययजातिस्फोटः, अखण्डप्रत्ययस्फोटः, अखण्डप्रत्ययजातिस्फोट इत्येवं प्रत्यय-व्यङ्ग्यस्फोटस्य च चातुर्विध्येन प्रकृतिप्रत्ययव्यङ्ग्यस्फोटयोरष्टविधतया इतरैः सखण्डपदस्फोटः, सखण्डपदजातिस्फोटः, अखण्डपदस्फोटः, अखण्डपदजातिस्फोटः, सखण्डवाक्यस्फोटः, सखण्ड-वाक्यजातिस्फोटः, अखण्डवाक्यस्फोटः, अखण्डवाक्यजातिस्फोटः, वर्णस्फोटः, वर्णजातिस्फोट इत्यमीभिर्दशभिः स्फोटैः सह संकलनयाऽष्टादश स्फोटाः स्युः, न तु षोडशैव। किञ्चैतन्मते स्फोटव्यञ्जकभेदेन स्फोटवाच्यभेदेन च द्विधा स्फोटभेदकल्पने गौरवम्। कौण्डभट्टादिमते तु केवलं स्फोटव्यञ्जकभेदेनैव स्फोटभेदोपगमेन लाघवम्। उभयथा स्फोटभेदाभ्युपगमेऽपरोऽपि दोषः। तथा हि वर्णादीनां वाचकत्ववादिनां मतेऽष्टभिर्वर्णादिभिर्व्यङ्ग्यानामष्टानां व्यक्तिस्फोटाना-मष्टानां जातिस्फोटानां च संकलनया यथा स्फोटस्य षोडशविधत्वं जायते, तथैव येऽर्थगत-जातेर्वाच्यत्वमिव वर्णादिगतजातीनामेव वाचकत्वं मन्यन्ते तेषां मतेऽष्टाभिर्वर्णादिगतजातिभि-र्व्यक्तिस्फोटस्य जातिस्फोटस्य च व्यङ्ग्यत्वेन वर्णादिगताष्टजातिव्यङ्ग्यानामष्टानां व्यक्ति-स्फोटानामष्टानां जातिस्फोटानां च संकलनया जातिव्यङ्ग्यः स्फोटोऽपि षोडशविधः स्यात्। इत्थं च वर्णादिव्यङ्ग्यानां व्यक्तिजातिस्फोटानां वर्णादिगतजातिव्यङ्ग्यानां व्यक्तिजातिस्फोटानां च संकलनया द्वात्रिंशद्विधत्वं स्फोटस्य स्यान्न तु षोडशविधत्वमेव। अतो वाच्यभेदस्य स्फोट-भेदकत्वमनङ्गीकृत्य व्यञ्जकभेदेनैव स्फोटभेदो यः कौण्डभट्टादिभिरभ्युपगतः स समीचीन एव।

इदं त्ववधेयम्—प्रकृतिप्रत्ययव्यतिरिक्तस्य विशुद्धस्य ऋकारादिवर्णस्यापि स्फोटव्यञ्जक-ताया भाष्यकृतामभिप्रेतत्वे तु कौण्डभट्टादिभणितो विभागोऽपि नूनं न्यून एव। श्रीपाण्डेयो-क्तस्य षोडशविधत्वस्योपलक्षणत्वे तु तदुक्तिरपि युक्तियुक्तैवेति कृतमनपेक्षितविस्तरेण।

## स्फोटेनार्थप्रतिपत्तेरुन्मीलनप्रकारः

'घटमानय' इति वाक्योच्चारणे श्रूयमाणो वाक्यध्वनिर्न घटकर्मकानयनकार्यत्वबोधकः, किन्तु तदभिव्यङ्ग्यः स्फोट इति प्रागुक्तम्। अथ स्फोटाभिव्यक्तिः कथं भवतीति प्रणिगद्यते।

उक्तवाक्यघटका घकारादयो वर्णाः क्रमेणैव श्रूयन्ते, न तु युगपत्। अतो घटकीभूतानां वर्णानां श्रवणस्य यौगपद्येन स्फोटव्यञ्जकत्वं न स्वीकर्तुं शक्यमिति क्रमिकेण तत्तद्वर्णश्रवणेन क्रमिकैव स्फोटाभिव्यक्तिरुपेयते। तत्र पूर्वपूर्ववर्णश्रवणेन जायमानायाः स्फोटाभिव्यक्तेरपेक्षया उत्तरोत्तर-वर्णश्रवणसाध्या स्फोटाभिव्यक्तिः स्फुटतरा, अतिस्फुटतराभिव्यक्त एव च स्फोटोऽर्थप्रत्यायक इति न प्रथमवर्णेनैवापेक्षितायाः स्फोटाभिव्यक्तेर्जाततया द्वितीयादिवर्णवैयर्थ्यम्, न वा चरम-वर्णमात्रेणैव वाञ्छनीयायाः स्फोटाभिव्यक्तेः संभवेन पूर्वपूर्ववर्णवैयर्थ्यम्, पूर्वपूर्ववर्णसाध्यानां स्फोटाभिव्यक्तीनां चरमवर्णसाध्यायां स्फुटतमस्फोटाभिव्यक्तौ प्रयोजकत्वोपगमात्।

अत्रेदं जिज्ञास्यते - स्फोटाभिव्यक्तिस्तावत् का? सांख्यानामिवाभिव्यक्ताऽवस्थालक्षणः कश्चन परिणामविशेषः, वेदान्तिनामिवावरणभङ्गः, नैयायिकादीनामिवाऽवगमो वा? नाद्यः, अवस्थालक्षणपरिणामपात्रत्वे कौटस्थ्यभङ्गात्, कौटस्थ्यस्य च तस्य भाष्यकारादिभिः स्पष्टमुक्तत्वात्। न द्वितीयः, तस्य घकारादिश्रवणमात्रसाध्यत्वे घटादिशब्दसंकेतशून्यस्यापि घटादिशब्दश्रवणे स्फोटस्य भग्नावरणत्वेन घटादिबोधापत्तेः। संकेतग्रहोऽप्यावरणभङ्गे हेतु-रिति तु न युक्तम्, स्फोट एव संकेतस्य ग्रहणीयतयाऽऽवृते तस्मिन् तद्ग्रहणायोगात्। अन्यथा-ऽऽवरणभङ्गकल्पनाया अनावश्यकत्वात्। न तृतीयः, विकल्पासहत्वात्। तथा हि नादसाध्या स्फोटव्यक्तिर्यदि ज्ञानं तदा तद् अनुमितिः, अर्थापत्तिः, प्रत्यक्षं वा? नाद्यः, अन्योन्याश्रय-प्रसङ्गात्। तथा हि जातेऽर्थबोधे तत्कारणतया स्फोटानुमितिः, अनुमिते च तस्मिन् तत्र संकेतादिग्रहणेनार्थबोध इति। अत एव नार्थापत्तिरूपताऽपि तज्ज्ञानस्य मन्तुमुचिता, जातेऽ-र्थबोधे तस्यान्यथानुपपत्तिप्रतिसन्धानेन स्फोटप्रत्ययः, प्रतीते च स्फोटे ततोऽर्थबोध इति। एवं प्रत्यक्षत्वमपि स्फोटज्ञानस्य न विचारक्षमम्। यतो हि स्फोटज्ञानं यदि प्रत्यक्षरूपं तदा तन्मानसं वा स्यात् श्रौत्रं वा? न प्रथमम्, ग्रहीतुर्ग्रहणार्हयोस्तदीयगुणधर्मयोरेव च ग्रहणे मनसः सामर्थ्यस्य क्लृप्ततयाऽतदात्मनः स्फोटस्य मनसा ग्रहणासंभवात्। स्फोटो ग्रहीतुरात्मैवेति न मनसा तद्ग्रहणं दुरुपपन्नमिति तु नोचितम्, तथा सति घत्वादिना स्फोटस्य मनोग्राह्यत्वे सुखादि-मत्त्वेन मनोग्राह्यत्वेऽहं सुखीतिवद् अहं घकार इत्यादिप्रतीत्यापत्तेः, 'शब्दं श्रुत्वाऽर्थं प्रत्येमि' इत्यनुभवापलापस्य 'शब्दं मत्वाऽर्थं प्रत्येमि' इत्यनुभवस्यापत्तेश्च। एवं स्फोटस्य श्रोत्रग्राह्यत्व-मपि नोचितम्, वर्णात्मनो नादात्मन एव वा शब्दस्य श्रोत्रग्राह्यतया वर्णनादाऽनात्मनः स्फोटस्य तेन ग्रहणायोगात्। स्फोटस्य श्रोत्रग्राह्यतायाअप्रामाणिकत्वाच्च।

न च 'घटम्' इति पदं 'घटमानय' इति वाक्यं वा शृणोमीत्यनुभवसाक्षिका पदवाक्य-

श्रुतिर्दुरपलापा। सा च न वर्णसमुदायात्मकं पदं वाक्यं वा विषयीकर्तुमर्हति, वर्णानां क्रमिकक्षणिकत्वतः सर्वेषां तेषां युगपत्समवधानासंभवात्, प्रत्यक्षस्य च विद्यमान एव विषये प्रसृमरस्वभावत्वात्। अतस्तद्विषयतया वर्णनादाभ्यां व्यतिरिक्तं स्फोटात्मकं पदं वाक्यं वा नूनमभ्युपेयमिति वाच्यम्; घटपदस्फोटस्यापि घकारादिरूपरूषितस्यैव प्रत्यक्षताया अङ्गीकरणीयतया घकाराकारादीनां चायौगपद्येन तन्निखिलरूपरूषिततया स्फोटप्रत्यक्षासंभवात्। घकाराकाराद्यनुभवाहितसंस्काराणां तदायत्तस्य तेषां स्मरणस्य वा बलेन घकारादिरूपरूषितस्फोटप्रत्यक्षमुपपाद्यते चेत्तदा नदीदीनशब्दयोः पर्यायत्वापत्तिः। येन क्रमेण नदीशब्दश्रवणं तेनैव क्रमेण नदीस्फोटव्यक्तिरिति पक्षोऽपि न क्षमो दोषोपलोपप्लवपरिहाराय, क्रमिकाणां नकाराकारादिरूपप्रकारकस्फोटव्यक्तीनां यौगपद्यासंभवेन मिलितानां तासामर्थबोधे हेतुत्वायोगात्। पूर्वपूर्ववर्णात्मना स्फोटव्यक्तेः क्रमेण जायमानायाश्चरमवर्णात्मना स्फोटव्यक्तेरर्थबोधकत्वेन न दोष इत्यपि न युक्तम्, तद्गताया अर्थबोधकताया अवच्छेदकस्य दुर्वचत्वात्। नदीबोधे स्पष्टा नदीस्फोटव्यक्तिः कारणमित्येवं कल्पना न सकलुषेत्यपि न रम्यम्, आद्यायाः स्फोटव्यक्तेरपि स्वविषयांशे स्पष्टत्वात्। या प्रत्यक्षव्यक्तिर्यमंशमवगाहमाना जायते सा तदंशे स्पष्टैवेति सर्वसंमतत्वात्।

न च यद्वस्तुनो यद् यद् रूपं येनेन्द्रियेण ग्रहणार्हं तदिन्द्रियजन्यस्य तत्तन्निखिलरूपप्रकारकतद्वस्तुग्रहणस्यैव स्पष्टत्वम्। नदीस्फोटस्य च नदीशब्दघटको निखिलो वर्णो नत्वादिकं कृत्स्नं वाऽऽरोपितं रूपम्। आद्यादिवर्णमात्ररूपरूषिततया स्फोटव्यक्तिश्च न तथेति न सा स्पष्टा, अतः स्पष्टाया नदीस्फोटव्यक्तेर्नदीबोधकत्वं निर्दोषमेवेति वाच्यम्; तथा सति नदीशब्दघटकचरमवर्णमात्ररूपेण स्फोटं गृह्णन्त्या अभिव्यक्तेरप्यस्पष्टत्वेन नकाराकारादिसर्ववर्णविषयिण्या एकस्या एव स्फोटव्यक्तेरपेक्षणीयत्वात्, तथाभ्युपगमे च नदीस्फोटव्यक्तेर्दीनस्फोटव्यक्त्यपेक्षया वैलक्षण्यस्य दुर्वचत्वात्। नकारादिक्रमेण जायमानां नदीशब्दघटकचरमवर्णज्ञप्तिं दकारादिक्रमेण जायमानाया दीनशब्दघटकचरमवर्णज्ञप्तेर्विलक्षणां कथञ्चिदभ्युपेत्य यदि तस्या नदीस्फोटव्यक्तौ कारणत्वम्, तथाजातायाः स्फोटव्यक्तेश्च नदीशब्दबोधं प्रति कारणत्वं च कल्पयित्वा दीनशब्दान्नदीबोधापत्तिर्वार्यते, तदा दीनस्फोटव्यक्तिकारणीभूतदीनशब्दज्ञप्तिव्यावृत्तेन रूपेण नदीबोधकनदीस्फोटव्यक्तिकारणीभूतनदीशब्दज्ञप्तेर्नदीशब्दबोधं प्रत्येव कारणत्वमङ्गीक्रियताम्, किमन्तर्गडुना स्फोटेन तज्ज्ञानेन वा।

वस्तुतस्तु वैजात्यकल्पनां विनैव नकारादिनिखिलवर्णविषयकनदीशब्दप्रत्यक्षं दीन-

शब्दप्रत्यक्षविलक्षणं भवितुमर्हति। तथा हि नदीशब्दघटकेषु नकारादिषु क्रमेणोच्चार्यमाणेषु पूर्वं नकारस्य प्रत्यक्षम्, ततोऽकारस्याव्यवहितोत्तरत्वसंबन्धेन नकारप्रकारकं प्रत्यक्षमकारांशे लौकिकं नकारांशे चालौकिकम्, तदुत्तरं दकारप्रत्यक्षं नकारविशिष्टाकारप्रकारकम्, तदन्तरं चेकार-प्रत्यक्षं नकाराकारदकारप्रकारकं विशेषणांशेऽलौकिकं विशेष्यांशे च लौकिकम्, तस्य चाव्यव-हितोत्तरसंबन्धावच्छिन्ननत्वावच्छिन्नप्रकारतादिनिरूपितेत्वावच्छिन्नविशेष्यताकज्ञानत्वेन तादृश-ज्ञानोत्तरजायमाने नदीविषयकशाब्दबोधे कारणतेति न दीनशब्दज्ञानान्नदीबोधापत्तिः, न चाव्यवहितोत्तरत्वस्यातीन्द्रियलक्षणघटिततया नोक्तप्रत्यक्षविषयता युक्तेति शङ्क्यम्, स्वध्वंसा-धिकरणशब्दध्वंसाधिकरणत्वे सति स्वध्वंसाधिकरणत्वस्य स्वाव्यवहितोत्तरत्वरूपत्वस्वीकारात् तस्य च केनाप्यतीन्द्रियेणाघटितत्वात्।

न च स्फोटानङ्गीकारे शब्दस्य शक्त्याश्रयत्वमनुपपन्नम्, प्रत्येकं वर्णस्य शक्तत्वे प्रथम-वर्णेनैव कृतकृत्यतया द्वितीयादिवर्णवैयर्थ्यापत्त्या क्रमिकक्षणिकत्वाभ्यां वर्णसमूहस्य च दुरुपपन्न-तया वर्णात्मकशब्दस्य तदभ्युपगमासंभवादिति वाच्यम्; तत्तदर्थबोधजनकत्वनिष्ठप्रकारता-निरूपितविशेष्यतासंबन्धेनेश्वरेच्छायास्तदीयतादृशविषयताया वा शक्तित्वोपगमेन तदाश्रयत्वस्य क्रमिकेष्वपि वर्णेषु संभवात्, तत्तन्निरूपितविषयतायास्तत्तदसमानकालिकेष्वपि सत्तायाः सर्व-संमतत्वात्। भगवत इच्छाया इव तदीयस्य ज्ञानस्य प्रयत्नस्य वाऽपि शक्तित्वापत्तिस्तु नोद्भाव्या; इष्टापत्तेः, तत्तदर्थबोधजनकत्वप्रकारकनित्यसविषयकत्वेन तेषां समेषां तत्संभवात्। अनीश्वरवादिनां शाब्दबोधानुपपत्तिरपि न शङ्काऽऽस्पदम्, कारणतावच्छेदकगर्भ इच्छाद्यंश ईश्वरीयत्वस्याप्रवेशेन दोषाभावात्।

न च स्फोटानङ्गीकारे 'घटम्' इत्येकं पदम्, 'घटमानय' इत्येकं वाक्यमित्यादिव्यव-हारानुपपत्तिरिति वाच्यम्; बुबोधयिषीयबोधनिष्ठविषयतागतैकत्वस्य परम्परयाऽवगाहनेन तदुप-पत्तिसंभवादिति कृतं बहुविस्तरेण॥

---

# शब्दशक्तिविमर्शः

श्रीबालकृष्णशर्मा पञ्चोली, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी ।

प्रमाकरणभूतेषु पदार्थेषु शब्दस्यापि प्रमाकरणत्वमङ्गीकुर्वन्ति शास्त्रतत्त्वविदः, करणस्य व्यापारवत्त्वनियमात् । तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारवत्त्वं च प्रकृतायां पदार्थोपस्थितौ । उपस्थित्या च शाब्दबोधरूपं फलं जायते । तत्र शक्तिविषयकं ज्ञानं सहकारिकारणम् । तदुक्तं कारिकावल्याम् —

पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥ ८१ ॥ इति ।

शक्तिश्च पदेन साकं पदार्थसंबन्धरूपा । स च संबन्ध ईश्वरेच्छारूपः । ईश्वरेच्छा च द्विविधा –१. पदविशेष्यिका, २. अर्थविशेष्यिका च । साऽपि प्रत्येकं द्विधा । तत्राद्या— 'गोपदमेतदर्थविषयकबोधजनकतावद् भवतु' इत्येवंरूपा, 'गोत्वावच्छिन्नविषयतानिरूपकबोधजनकत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविषयतावद् गोपदम्' इत्यर्थबोधिका 'गोपदं गां वक्ति' इत्येवंरूपा, 'गोपदं गोर्वाचकम्' इत्येवंरूपा वा । द्वितीया च 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इत्येवंरूपा, 'गोपदनिष्ठा या बोधजनकत्वनिष्ठप्रकारतानिरूपितभगवदिच्छीयविषयता तन्निरूपिका या बोधजनकत्वनिष्ठप्रकारतान्तःपातिबोधनिष्ठविषयतानिरूपकविषयित्वसंबन्धावच्छिन्नप्रकारता तदाश्रयो गौः' इत्यर्थिका 'पदेन गौरुच्यते' इत्येवंरूपा वा । तदुक्तं शक्तिवादे—"ईश्वरसंकेतः शक्तिः" [ पृ० ३ ] इति ।

ननूक्तेश्वरेच्छारूपसंकेतस्य शक्तित्वे गङ्गादिपदात् तटादिबोधो न स्यात्, सहकारिकारणीभूततटविषयकशक्तिज्ञानस्य गङ्गादिपदेऽभावादिति चेन्न; शक्यसंबन्धरूपलक्षणाया अपि शाब्दबोधसहकारित्वेनाभ्युपगमात् । अत एव 'गङ्गायां घोषः' इत्यादिस्थले शाब्दबोध उपपद्यते । तात्पर्य्यानुपपत्तिरेव लक्षणायां बीजं न त्वन्वयानुपपत्तिः, गङ्गापदस्य नौकायां लक्षणाप्रसङ्गात् । घोषपदस्य मीने लक्षणापत्तिस्तु न, "न विधौ परः शब्दार्थः" इति न्यायात् । तत्रेश्वरेच्छारूपसंकेतस्य शक्तित्वे शक्तिज्ञानस्यैव सहकारिकारणत्वं वाच्यम्, अन्यथा स्वरूपतः सत्या एव शक्तेर्बोधकारणत्वे तज्ज्ञानाभावेऽपि बोधापत्तेः । यदि सामान्यतः शक्तिज्ञानं कारणं

अत एव "'वषट्कर्तुः प्रथमभक्षः' [ आप० श्रौ० १२।२४।६ ] इत्यत्र भक्षमुद्दिश्य न प्राथम्यविधानं युक्तम्, मिलितार्थविषयकबोधजनकत्वरूपैकार्थीभावात्मकशक्तिभङ्गापत्तेः" इति मीमांसकोक्तिः संगच्छते, वैयाकरणाभिमताया एवैकप्रसरतायास्तैः स्वीकारात्।

## वैशेषिकमतम्

अत्र कणादः—(शब्दार्थयोः संबन्धो न संयोगरूपः) "गुणत्वात्" [ ७।२।१४ ]। अयं भावः—घटपटादिशब्दो गुणः, तदर्थश्च द्रव्यरूपः, द्रव्यगुणयोश्च सतोस्तयोर्युतसिद्ध्यभावात् संयोगाभाव इति।

किञ्च—"गुणोऽपि विभाव्यते" [७।२।१५]। गुणोऽपि = गुणपदार्थोऽपि, विभाव्यते = शब्देन प्रतिपाद्यते, प्रतिपाद्यप्रतिपादकयोरुभयोरपि गुणत्वात्, अतो गुणयोरपि संयोगसंबन्धाभाव एव। ननु गुणयोरपि संयोगस्वीकारे दोषाभाव इति शङ्कायामुक्तम्—"निष्क्रियत्वात्" [७।२।१६] इति। क्रियाशून्यत्वादर्थेन संयोगासंभवः, संयोगस्य क्रियाजन्यत्वनियमात्।

किञ्च, अविद्यमानेऽपि घटादिपदार्थे 'घटो नास्ति' इति, 'घटो भविष्यति' इत्यादिप्रयोगदर्शनात् शब्दार्थयोः संयोगासंभवः। तदुक्तम्—"असति नास्तीति च प्रयोगात्" [७।२।१७] इति। तदुत्तरम्—"शब्दार्थावसंबन्धौ" [ ७।२।१८ ] इत्यभिहितम्। ननु शब्दार्थयोः संबन्धाभावे शब्दादर्थप्रत्ययानुपपत्तिरित्याशङ्कायाम्—"सामयिकः शब्दादर्थप्रत्ययः" [७।२।२०] इति। समयः = संकेतः। स च "अस्माच्छब्दादयमर्थो बोद्धव्यः" इति नैयायिकोक्तरूप एव। तथा चैतन्मतेऽपि संकेतस्यैव शक्तित्वं सिद्धम्।

## योगमतम्

पातञ्जलयोगदर्शनेऽपि—"तस्य वाचकः प्रणवः" [ १।२७ ] इति सूत्रमुपक्रम्य व्यासभाष्ये निगदितम्—"वाच्य ईश्वरः प्रणवस्य। किमस्य संकेतकृतं वाच्यवाचकत्वम्, अथ प्रदीपप्रकाशवदवस्थितमिति? स्थितोऽस्य वाच्यस्य वाचकेन सह संबन्धः। संकेतस्त्वीश्वरस्य स्थितमेवार्थमभिनयति। यथाऽवस्थितः पितापुत्रयोः संबन्धः संकेतेनावद्योत्यते 'अयमस्य पिता, अयमस्य पुत्रः' इति। सर्गान्तरेष्वपि वाच्यवाचकशक्त्यपेक्षस्तथैव संकेतः क्रियते। सम्प्रतिपत्तिनित्यतया नित्यः शब्दार्थसंबन्ध इत्यागमिनः प्रतिजानते" इति। एतेन बोधजनकतावच्छेदकधर्मरूपायां नित्यायाः शक्तेरीश्वरसंकेतस्य व्यञ्जकत्वं द्योतितम्।

किञ्च, "शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम्" [ योग० ३।१७ ] इति सूत्रभाष्ये—"तदेतेषामर्थसंकेतेनावच्छिन्नानामुपसंहृतध्वनिक्रमाणां य एको बुद्धिनिर्भासस्तत्पदं वाचकं वाच्यस्य संकेत्यते" इत्युक्तम्। एतेनापि वाच्यवाचकभाव-रूपापरपर्यायायाः शक्तेर्द्योतकत्वं संकेतस्य सूचितम्।

## वैयाकरणमतम्

वैयाकरणास्तु नैयायिकोक्तेश्वरेच्छा न शक्तिः। तथा हि—

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥

इति शक्तिग्राहकेषु व्यवहारस्य मुख्यतया व्यवहाराच्छक्तिग्रहः। व्यवहारश्च—आज्ञापकोक्तवाक्यानुसारेण कार्यकरणमेव। यथा केनचिद् 'घटमानय' इत्युक्ते घटकर्मकानयनं कुर्वन्तमाज्ञाप्यं पश्यता शक्तिजिघृक्षुणा बालेनानुमीयते—अयं घटानयनकर्ता घटानयनं मत्कार्यमिति ज्ञानवान्, घटानयनविषयकचेष्टावत्त्वादिति। तदनन्तरं च—इदं ज्ञानं 'घटमानय' इति वाक्यजन्यम्, तद्वाक्यश्रवणाव्यवहितोत्तरमेव तत्प्रवृत्तेरिति तादृशज्ञानजनकत्वं वाक्येऽ-नुमीयते। तत आवापोद्वापाभ्यामन्वयव्यतिरेकेण पदादिष्वपि पदार्थविषयकबोधजनकत्वं निर्धार्यते।

ननु सर्गाद्यकाले प्रयोज्यप्रयोजकवृद्धयोरभावेन तद्व्यवहाराभावात् कथं जीवानां शक्तिग्रहः? इति चेदत्रोच्यते—ईश्वर एव तदानीं प्रयोज्यप्रयोजकवृद्धरूपं विधाय व्यवहारद्वारा जीवेभ्यः शक्तिमुपदिदेशेति।

वस्तुतस्त्विदमसंगतम्। तथा हि—ईश्वरः किं तदानीं निखिलजीवानेकत्राहूय शक्तिं ग्राहयामास, उत तत्तज्जीवेभ्यः? नाद्यः, चतुरशीतिलक्षयोनिगतजीवानामेकत्र संमेलनाऽ-संभवात्; मनुष्येतरेषां पशुपक्ष्याद्यनन्तजीवानामनन्तशब्दभेदेन शक्तिग्राहकत्वासंभवाच्च। नान्त्यः, चतुरशीतिलक्षयोनिगततत्तच्छरीरधृत्या शक्त्युपदेशे जीवापेक्षयाऽपीश्वरस्याधःपातापत्तेः, "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" [ १।२४ ] इति पातञ्जलसूत्रविरोधा-पत्तेश्च। तस्मात् सृष्ट्यारम्भे शक्तिग्रहस्तु सृष्टेरानन्त्यात् पूर्वसृष्टावभ्यस्तवेदानां सृष्ट्यन्तरे ऋषिकृतस्मरणमिव जीवानामदृष्टवशाद् जन्मान्तरज्ञातशक्तिस्मरणेन प्रकारान्तरेण वोपपाद्य इति विभावयन्तु सुधियः।

तत्र पदे बोधजनकत्वं बोधकारणीभूतपदस्यार्थेन सह संबन्धाभावे नोपपद्यते। विषयैः सह संबद्धानामेव चक्षुरादिप्रमाणानां ज्ञानोत्पादकत्वदर्शनात्। न हि घटेन संबन्धमन्तरा चक्षुरादीन्द्रियं घटादिविषयकचाक्षुषादिज्ञानं जनयति।

एवं च पदपदार्थयोर्बोधजनकत्वानुपपत्त्या कल्प्यमानः पदपदार्थयोः संबन्धो ज्ञानरूप-कार्योत्पत्तेः पूर्वमेवापेक्ष्यते, कारणस्य कार्याव्यवहितप्राक्क्षणावच्छेदेनोपस्थितेरावश्यकत्वात्। तदानीं नैयायिकाभिमतस्य बोध्यबोधकत्वघटितस्येश्वरेच्छारूपसंबन्धस्य ज्ञातुमशक्यतया ज्ञाताया एव शक्तेर्बोधकत्वेन बोधात् प्राक् तज्ज्ञानासंभवः। शब्दनिष्ठबोधजनकत्वस्यो-पपत्तये कल्प्यमानस्य संबन्धस्य स्वयमनुपपद्यमानत्वेन बोधात् प्राग् बोधजनकत्वाभाववदिदं पदमिति निश्चयसत्त्वेन तद्वत्ताज्ञानं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वेन बोधजनकत्व-घटितेच्छात्मकस्य बोधजनकत्वरूपस्य वा शक्तिपदार्थस्य ज्ञानमसंभव्येव।

किञ्च, पदनिष्ठशाब्दबोधजनकताया अर्थबोधजनकत्वरूपशक्तेरवच्छेदकत्वं दुरुपपादम्, आत्माश्रयेण स्वस्यैव स्वावच्छेदकत्वासंभवात्। किञ्च, ईश्वरेच्छायाः शक्तित्ववदीश्वरीययत्नस्य ज्ञानस्य वा विनिगमनाविरहेण शक्तित्वस्वीकारे गौरवापत्तिः। किञ्च, नैयायिकाभिमतानां शब्देतरेषां त्रयाणां चक्षुरादीनां प्रमाणानां जनकत्वतद्घटितसंबन्धातिरिक्तसंयोगादिसंबन्धेनैव प्रमेयसंबद्धानां ज्ञानजनकत्वदर्शनेन जनकत्वघटितेश्वरेच्छायाः संबन्धत्वानौचित्यम्। अन्यथा 'धूमाद् वह्निज्ञानं जायताम्', 'दण्डाद् घटो जायताम्' इतीच्छारूपशक्तेर्धूमे दण्डे च स्वीकारे व्याप्त्युच्छेदः, दण्डेघटजनकत्वसामर्थ्योच्छेदश्च स्यात्।

किञ्च, 'द्विष्ठः संबन्धः' इति, 'विशिष्टबुद्धिनियामकश्च' इति चाभियुक्तव्यवहाराद् इच्छाया बोधजनकत्वस्य चोभयवृत्तित्वासंभवः। इच्छाविषयबोधीयविषयतायां संबन्धत्वं तु न संभवति, आश्रयतानियामकस्यैव संबन्धत्वात्। अन्यथा ज्ञाने विषयस्य कर्तुश्च कारणत्वेऽपि तयोः परस्परं विशिष्टबुद्ध्यापत्तिः।

यो ह्याधाराधेयभावनियामकत्वेन दृष्टः स एव संबन्धः। प्रकृते चेच्छीयविषयता-श्रयबोधनिष्ठजन्यतानिरूपितजनकताऽऽख्यविषयतासंबन्धेन 'अयमर्थः, अयं शब्दो वा इच्छा-वान्' इति व्यवहारादर्शनेनेश्वरेच्छायाः संबन्धत्वासंभवः। तस्मात् पदपदार्थयोरीश्वरेच्छा-भिन्नसंबन्धान्तरमेव शक्तिः। सा चानादिबोधजनकतावच्छेदकधर्मरूपैव। बोधजनकत्वेन च सानुमीयते।

वैयाकरणनये बौद्धशब्दशब्दार्थयोस्तादात्म्येन यस्य शब्दस्य येनार्थेन तादात्म्यं तदर्थनिरूपिता तत्र शब्दे शक्तिरिति तादात्म्यस्यापि शक्तिज्ञानजनकत्वम् ।

संकेतस्तु न शक्तिः, "संकेतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मकः योऽयं शब्दः सोऽर्थः, योऽर्थः स शब्दः" इति भाष्योक्तेः ? संकेते शक्तिज्ञापकत्वस्यैव लाभात् । तदुक्तं वाक्यपदीये—

व्यवहारस्तु यत्रास्ति धर्मस्तत्रानुगम्यते ।
शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः ॥ [३।३।५] इति ।

किञ्च, संकेतस्य शक्तित्वे 'अयमेतच्छक्यः, अस्यात्र शक्तिः' इत्यस्य संकेतस्य लोके दर्शनेनेश्वरेच्छारूपसंकेतस्य शक्तित्व उक्तसंकेतत्वानुपपत्तिः, तस्य शक्तिघटितत्वात् ।

संकेतश्च आप्तोपदेशवृद्धव्यवहारापरपर्य्यायः । अत एव न्यायभाष्यकाराः "सामयिकत्वाच्छब्दार्थसंप्रत्ययस्य" [ २।१।५५ ] इति गौतमसूत्रे—"कः पुनरयं समयः ? अस्य शब्दस्येदमर्थजातमभिधेयमित्यभिधानाभिधेयनियमनियोगः" इत्याहुः । नियोगश्चाप्तोपदेश एव । "सामयिकः शब्दादर्थप्रत्ययः" [७।२।२०] इति कणादसूत्रव्याख्यातृभिश्च—"नकुलदंष्ट्राग्रस्पृष्टा च या काचनौषधिः सा सर्पविषहन्त्री" [ उपस्कारे ] इत्यादिनाऽऽप्तोपदेशस्य समयत्वमुक्तम् । तस्मात् संकेतस्य शक्तिग्राहकत्वमेव, न तु शक्तित्वम् ।

## शक्त्याश्रयत्वविचारः

शक्त्याश्रयत्वं तार्किकैः प्रकृतिप्रत्यययोरेवेष्यते, न तु वैयाकरणाभिमतासु कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपासु वृत्तिषु । शाब्दिकैश्च तास्वप्येकार्थीभावात्मिका शक्तिरभिप्रेयते । अत एव 'पदविधिः सामर्थ्याश्रितः' इत्येतदर्थकम् "समर्थः पदविधिः" [ २।१।१ ] इति सूत्रं संगच्छते । अत्र पदविधिशब्देन न सुप्तिङन्तरूपपदसंबन्धिविधित्वं ग्राह्यम्, सनाद्यन्तधातुष्वव्याप्त्यापत्तेः । किन्तु पदत्वप्रयोजकप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकसंज्ञीयोद्देश्यतावच्छेदकसंपादकविधित्वरूपमेव । तच्चोक्तासु वृत्तिष्वक्षतम् । एकशेषस्य च "उत्सर्गसमानदेशा अपवादाः" इति न्यायेन द्वन्द्वविषयकतया, द्वन्द्वस्य च पदविधित्वेन तस्यापि पदविधित्वं फलतीति फलितार्थमादायैकार्थीभावात्मकवृत्तित्वव्यवहारः । तदुक्तं भाष्ये—"अनवकाश एकशेषो द्वन्द्वं बाधिष्यते" [१।२।६४] इति ।

नैयायिकमते समासादिवृत्तौ शक्त्यस्वीकारेऽवयवशक्तेरेव बोधप्रयोजकत्वे भूयांसि दूषणानि गौरवं च। तथा हि— 'सुन्दरस्य राज्ञः पुरुषः' इतिवत् 'सुन्दरस्य राजपुरुषः' इति प्रयोगापत्तिः। विशिष्टशक्तिवादिनये तु "पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन" इति सिद्धान्तान्न दोषः, तद्दोषवारणाय "सविशेषणानां वृत्तिर्न, वृत्तस्य विशेषणयोगो न" इति स्वीकारे गौरवम्। अत एव "अथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्यः" [२।१।१] इति भाष्योक्तिः संगच्छते।

किञ्च, धवखदिरौ, निष्कौशाम्बिः, गोरथः, घृतघटः, गुडधानाः, केशचूडः, सुवर्णालङ्कारः, द्विदशाः, सप्तपर्ण इत्यादिष्वनेकेषां पदानां लोपः, वीप्साद्यर्थश्च वचनेन साध्य इत्यतिगौरवं स्यात्। अपि चोक्तस्थलेषु यथाकथञ्चिल्लक्षणया निर्वाहेऽपि चित्रगुः, प्राप्तोदक इत्यादौ लक्षणाया असंभवात्।

अपि च "वर्षासु रथकारोऽग्नीनादधीत" इत्यत्राप्यवयवशक्त्यैव ब्राह्मणादिविषयतयैवोपपत्तौ समुदायशक्तिकल्पनां कृत्वा जातिविशेषस्याधिकारित्वं प्रकल्प्यापूर्वविद्याकल्पनं मीमांसकानामयुक्तं स्यात्। अत एवोक्तं वैयाकरणभूषणसारे—

समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ॥३२॥
बहूनां वृत्तिधर्माणां वचनैरेव साधने।
स्यान्महद् गौरवं तस्मादेकार्थीभाव आश्रितः ॥३३॥ इति।

अत एव समासस्य 'अर्थवत्'-सूत्रेण प्रातिपदिकत्वं सिद्ध्यति, अन्यथा तस्यानर्थक्यात् तदनुपपत्तिः। कृत्तद्धितसूत्रे समासग्रहणेन न तत्सिद्धिः, तस्य नियमार्थत्वात्।

किञ्च "प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानाम्" इत्यभियुक्तोक्त्या समासस्य प्रकृतित्वे तच्छक्यार्थाभावेन प्रत्ययार्थान्वयानुपपत्त्या निरुक्तार्थिका व्युत्पत्तिर्विरुद्ध्येतेत्यन्यत्र विस्तरः।

शब्दनिष्ठशक्तताया अर्थनिरूपितत्वात् कस्मिन्नर्थे शब्दानां शक्तिरित्यत्रापि मीमांसकानां वैमत्यम्। "गवादिशब्दानां जातावेव शक्तिः" इति जैमिनीयाः। गोपदस्य गोत्वे शक्तिग्रहादेव गोत्वप्रकारेण व्यक्तिस्मृतेस्तत्प्रकारकव्यक्तिबोधस्योपपत्तिरिति तेषामाशयः।

"जातावेव शक्तिः, व्यक्तिभानं तु लक्षणया" इति भाट्टाः। अत्र ब्रूमः—पदानां जातावेव शक्तौ तत्रैव मुख्या वृत्तिर्वाच्या। तथा च जातावेव गवादिशब्दानां प्रयोगप्राचुर्येण भवितव्यम्, मुख्यार्थ एव पदानां प्रचुरप्रयोगदर्शनात्। यथा गङ्गापदस्य प्रवाहे, अग्निशब्दस्य ज्वलने। किञ्च, यदि जातिरेव मुख्योऽर्थस्तर्हि तद्बोधनाय त्वतलादेर्निरपेक्षतापत्तिः। किञ्च, जातौ शक्तावपि

तदाश्रयतया व्यक्तिबोधस्येष्टत्वे 'जातिः, सामान्यम्' इत्यादिपदादपि व्यक्तिबोधापत्तिः। यदि तु शब्दशक्तिस्वाभाव्याज्जातिप्रकारकव्यक्तिबोधसामर्थ्यं गवादिपदानामेव, न तु जात्यादिपदानामित्युच्यते; तदा जातिविशिष्टव्यक्तिनिरूपितैव शक्तिः, न तु केवलजातिनिरूपितेति सिद्धं नः समीहितम्।

यदप्युक्तम्—"आकृतिरिति वाजप्यायनः", "द्रव्याभिधानं व्याडिः" [महा० १।२।६४] इति च; तयोरपि जातिव्यक्त्युभयनिरूपितशक्तावेव तात्पर्यम्। इयान् विशेषः—तयोः प्राधान्याप्राधान्ये भेदः। तदुक्तं सरूपसूत्रे भाष्ये—"नह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः, द्रव्यपदार्थकस्य वाऽऽकृतिर्न पदार्थः। उभयोरुभयं पदार्थः। कस्यचित् किञ्चित् प्रधानभूतम्, किञ्चिद् गुणभूतम्। आकृतिपदार्थस्याकृतिः प्रधानभूता, द्रव्यं गुणभूतम्। द्रव्यपदार्थकस्य द्रव्यं प्रधानभूतम्, आकृतिर्गुणभूता" [१।२।६४] इति।

यत्तु संबन्धविशिष्टतत्तत्पदार्थनिरूपितैव तत्तत्पदानां शक्तिरित्यन्विताभिधानवादिनः, तदपि न; गौरवात्, तदुपपत्तेर्वक्तुमशक्यत्वाच्च।

संबन्धो यदि सामान्यतो गृह्यते, तदा तत्तद्विशेषसंबन्धानां बोधानुपपत्तिः। यदि विशेषसंबन्ध एव गृह्यते तदा सर्वेषां शब्दानां नानार्थतापत्तिः, तत्तद्विशेषसंबन्धानामानन्त्यात्, शक्यतावच्छेदकभेदेन शक्तेरानन्त्यात्।

वैयाकरणनिकाये परस्परविशेषणविशेष्यभावरूपान्वयनिरूपिता वाक्येऽपि शक्तिः। यद्यपि विभक्तिप्रकृत्यर्थगतविशेषणत्वमपि विभक्तिशक्यमेव, तथापीतरपदार्थनिष्ठविशेषणतानिरूपितविशेष्यनिष्ठं विशेष्यत्वं वाक्यशक्यमेव। अत एव प्रातिपदिकार्थसूत्रे, "षष्ठी शेषे" इति सूत्रे च भाष्ये—"'राज्ञः पुरुषः' इत्यादौ विशेष्यविशेषणभावरूपं यदाधिक्यं स वाक्यार्थः" [२।३।५०] इत्युक्तम्।

एवं च विशेष्यविशेषणभावरूपसंसर्गस्य वाक्यार्थत्वं स्पष्टमेवाभिहितम्। अत एव कृत्तद्धितसूत्रे समासग्रहणस्य नियमार्थत्वम्, 'राज्ञः पुरुषः' इत्यादिवाक्यानां प्रातिपदिकत्वाभावरूपं फलं च संगच्छते। अन्यथा वाक्यस्यार्थवत्त्वाभावेन प्रातिपदिकत्वाप्राप्त्या नियमत्वानुपपत्तिः, तत्फलप्रदर्शनासंगतिश्चेति दिक्।

## अपभ्रंशे शक्तिविचारः

तत्तत्पदार्थनिष्ठप्रकारतानिरूपिततत्तद्विशेष्यताशालिशाब्दबोधं प्रति तत्तत्प्रकारकतत्तद्विशेष्यकशक्तिज्ञानजन्योपस्थितेः कारणत्वमवश्यं वाच्यम्, अन्यथा यथाकथञ्चि-

दुपस्थितस्य शाब्दबोधे भानस्वीकारे 'घटं पश्य' इत्यादौ शब्दाश्रयतयोपस्थितस्याकाशस्यापि शाब्दबोधापत्तिः। तथा चासाधुशब्दादपि लोके बोधदर्शनेनापभ्रंशेष्वपि तत्तदर्थनिरूपिता शक्तिः स्वीकार्या, शक्तिग्राहकशिरोमणेर्व्यवहारस्य साधुष्विवापभ्रंशेषु तुल्यत्वात्। अत एव—"समानायामर्थावगतौ शब्देन चापशब्देन च धर्मनियमः क्रियते" [पस्पशाह्निके] इति भाष्योक्तिः, "वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः" [३।३।३०] इति हरिवचनं च संगच्छते।

यत्तु तार्किकाः—"नापभ्रंशानां शक्तत्वम्, ततः शाब्दबोधस्तु साधुशब्दस्मरणादेव। तदुक्तं वाक्यपदीये—

ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः। [ ।१५१] इति,

अम्बाम्बेति यदा बालः शिक्ष्यमाणोपभाषते।

अव्यक्तं तद्विदां तेन व्यक्ते भवति निश्चयः॥ [१।१५३] इति च;

तन्न, साधुशब्दमन्तराऽपि बोधानुभवात्, तद्वाचकसाधुशब्दमजानतां ततो बोधानापत्तेश्च। अत एव स्त्रीशूद्रबालानां साधुशब्दप्रयोगे सत्यर्थसंशये तदपभ्रंशेन निर्णयः। वाचकस्य व्यञ्जकत्व आलङ्कारिकाणाम्—

पंथिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे।

उण्णअ पओहरं पेक्खिऊण जइ वससि ता वससु॥

इति प्राकृतभाषोदाहरणस्यासंगत्यापत्तेः। यद्यपि वाच्यस्य व्यञ्जकत्व उदाहरणमिदम्, तथापि शब्दस्य वाचकत्वं विना तदर्थस्य वाच्यत्वासंभवेन तथोक्तं नागेशेन।

नन्वपभ्रंशे शक्तिस्वीकारे काव्ये च्युतसंस्कृतेर्दोषत्वं न स्यात्, तद्बीजस्य शाब्दबोधाजनकत्वस्याभावादिति चेन्न; तत्र नहि शाब्दबोधाजनकत्वं बीजम्, किन्तु साधुपदसमुदायेऽसाधुपददर्शनेन श्रोतॄणां चेतस्युद्वेगकरत्वमेव। तल्लक्षणं तु काव्यप्रकाशकृता—"यद्भाषासंस्कारकव्याकरणलक्षणविरुद्धं यत् तत् तद्भाषायां च्युतसंस्कृतिः" [ ७ उल्लासे ] इत्युक्तम्। तदुदाहरणं यथा—

"गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषयविलोचनस्य वक्षः" इति।

[ किरा० १७।६३ ]

नन्वपभ्रंशैः पामराणां शक्तिभ्रमादेव बोधः। न चान्यप्रकारत्वेन ज्ञातस्यैव तदभाववत्तत्प्रकारकज्ञानरूपभ्रमसंभवेन पामराणां शक्तिप्रकारकघटादिसाधुपदविशेष्यकज्ञानासंभवेन गगर्यादिशब्दे तद्भ्रमत्वानुपपत्तिरिति वाच्यम्; यस्य घटपदं घटत्वावच्छिन्ननिरूपित-

शक्तिमदिति ज्ञानं विद्यते, तस्यैव यथाकथञ्चिद् गगरीपदं घटत्वावच्छिन्ननिरूपितशक्तिमदिति भ्रमो जातः, तदनन्तरं गगरीपदं घटत्वावच्छिन्ने शक्तमिति पामराणां ज्ञानपरम्परा जातेति प्राथमिकज्ञानगतभ्रमत्वमादायैव साजात्याद् उत्तरोत्तरस्मिन् ज्ञाने भ्रमत्वसंभवादिति चेन्न; घटत्वादिविशिष्टघटादिरूपार्थनिरूपिताया घटपदवृत्तित्वेन ज्ञातायाः शक्तेर्गगर्यादिपदे विभिन्नानुपूर्वीकत्वरूपविशेषधर्मदर्शनसत्त्वेन, साधारणधर्मदर्शनाभावेन, तदुत्तरकाले बाधज्ञानाभावेन च गगरीशब्दादौ भ्रमत्वानुपपत्तेः।

न चापभ्रंशे शक्तिस्वीकारे तेषां शक्तत्वेन साधुत्वापत्तिः, व्याकरणव्यङ्ग्यस्यार्थविशिष्टशब्दनिष्ठपुण्यजनकतावच्छेदकजातिविशेषरूपस्य साधुत्वस्य तत्राभावात्; शक्तत्वापेक्षया साधुत्वस्य वैजात्यस्वीकारात्। अत्र पुण्यजनकतावच्छेदक इत्यस्य समवायसंबन्धावच्छिन्नपुण्यविशेषत्वावच्छिन्नकार्य्यतानिरूपितस्वाभिव्यञ्जककण्ठाद्यभिघातजनककृतिमत्त्वसंबन्धावच्छिन्नव्याकरणबोधितशिष्टप्रयुक्तशब्दनिष्ठकारणतावच्छेदकेत्यर्थ इत्यलं पल्लवितेन॥

---

# संज्ञानिष्पादकसूत्रालोचनम्

श्रीरामशङ्करभट्टाचार्यः, हिन्दूविश्वविद्यालयः, वाराणसी ।

पाणिनीयसूत्रेष्वन्तराऽन्तरा 'संज्ञायाम्' इति पदं दृश्यते । संज्ञापदघटितसूत्रनिष्पन्नाः शब्दाः 'संज्ञाशब्दाः' इति व्यवह्रियन्ते । तान्येव संज्ञापदघटितसूत्राण्यालम्ब्य कश्चिद् विचारोऽत्र प्रस्तूयते ।

संज्ञाशब्दः सम्पूर्वकस्य ज्ञाधातोरङ् प्रत्ययेन निष्पन्नो भवति । अयमङ् प्रत्ययः कर्मणि, करणे, भावे च यथाविवक्षं भवतीति व्याख्यातृभिर्निपुणमुपपादितम् । एतेषु पृथगर्थेषु संज्ञा-शब्दे निष्पन्ने सति तस्य त्रयोऽर्था भवन्ति । तदेतदुपरिष्टात् प्रवेदयिष्यामः ।

यथैव केषुचित् सूत्रेषु पाणिनिना 'संज्ञायाम्' इत्युक्तम्, तथैव केषुचित् सूत्रेषु 'असंज्ञायाम्' इत्यपि प्रोक्तम् । यथा—"भृञोऽसंज्ञायाम्" [३।१।११२], "धिप्रसंभ्यो ड्वसंज्ञायाम्" [ ३।२।१८० ], "असंज्ञायां तिलयवाभ्याम्" [ ४।३।१४६ ] इत्यादि । असंज्ञापदघटितानि सूत्राणीदं ज्ञापयन्ति—संज्ञाऽसंज्ञात्मकौ द्विविधावर्थौ शब्दानां स्तः (ततश्च संज्ञाशब्दोऽसंज्ञाशब्द इति द्वौ भेदौ शब्दस्यापि भवतः ) । अत एवाऽसंज्ञायां सत्यामेव पूर्वोक्तानां त्रयाणां सूत्राणां प्रवृत्तिर्भवति नान्यथेति स्पष्टमेव ।

सन्ति च सूत्राणि येषां प्रवृत्तिः संज्ञायामसंज्ञायां च भवति । तथा च सूत्रम्—"प्रनि-रन्तः···असंज्ञायामपि" [८।४।५] इति । अत्राऽपिशब्देन संज्ञाऽपि गृह्यत इति व्याख्यातारः ( संज्ञायामसंज्ञायामपीति काशिका ) । यद्यत्राऽसंज्ञायामपीति नोक्तं स्यात् तर्हि ८।४।३ सूत्रतः संज्ञाशब्दस्यानुवृत्तिः स्यादेव, येनानिष्टः प्रसज्येत । अत एव 'असंज्ञायाम्' इत्युक्तम् ।

येषु च सूत्रेषु 'संज्ञायाम्' इति पदं न प्रयुक्तम्, तेषां प्रवृत्तिः संज्ञायामसंज्ञायां च निर्बाधं भवति । यथा "इको यणचि" [ ६।१।७७ ] इति सूत्रं यथैव संज्ञाशब्देषु प्रवर्तते, तथैवाऽसंज्ञा-शब्देष्विति सिद्धमेव ।

अत्रेयं विचारणा जायते यत् "अकर्तरि च कारके संज्ञायाम्" [ ३।३।१९ ] इति सूत्रं संज्ञायामसंज्ञायां च प्रवर्तते (अत्र चकारः संज्ञाव्यभिचारार्थ इति सर्वेषां व्याख्यातॄणां मतम्) । यद्येवं स्यात् तर्हि कथं न सूत्रकारः—"अकर्तरि च कारके" इत्येतावन्मात्रमेवोक्तवान्, येन

सूत्रशरीरे लाघवमपि स्यात्, संज्ञासंज्ञयोः प्रवृत्तिरपि भवेद् यत्नान्तरमन्तरेण। यदि चकारबलेनाऽसंज्ञापि समुच्चीयेत, तर्हि संज्ञायामिति कथनं निःसारं भवेत्, संज्ञासंज्ञयोरस्य सूत्रस्य प्रवृत्त्यभ्युपगमात्। प्रश्नममुमाश्रित्य न्यासकारः समाधत्ते – "संज्ञायां चेति चार्थं द्योतयन्नसौ संज्ञाव्यभिचाराय भवति। तेनासंज्ञायामपि भवति। यद्येवं संज्ञाग्रहणमकृत्वा सामान्येनैव प्रत्ययो विधेयः। तत्रायमप्यर्थः – संज्ञाव्यभिचारार्थश्चकारो न कर्तव्यो भवति। सत्यमेतत्। तथापि बाहुल्येन संज्ञायां भवति, असंज्ञायां तु क्वचिदेवेत्यमुमर्थं सूचयितुं संज्ञाग्रहणं कृतम्" [न्यासे, ३।३।१९] इति। अत्रेदमपि विज्ञेयं यद् यतो हि कर्तृभिन्ने कारके यदा घञ् प्रत्ययो भवति, तदा बाहुल्येन स संज्ञायां भवतीति सिद्धमेव, अतः समाधानमिदं समीचीनम्। बहुलप्रवृत्तिनिदर्शनसापेक्षाणि बहूनि सूत्राणि पाणिनिना कृतानीति विज्ञायते, अतः संज्ञाबाहुल्यप्रदर्शनाय संज्ञाग्रहणं पाणिनिना कृतमिति कथनं नासंगतम्।

संज्ञापदघटितसूत्राणां प्रवृत्तिरसंज्ञायां न प्रवर्तत इति विज्ञायते। यथा—"दिक्संख्ये संज्ञायाम्" [ २।१।५० ] इत्यस्य प्रवृत्तिरसंज्ञायां न भवति। अत एव "संज्ञायामिति किम्? उत्तरा वृक्षाः, पञ्च ब्राह्मणाः" इति प्रत्युदाहरणानि प्रदत्तानि प्राचार्यैः (काशिका)।

येषु सूत्रेषु संज्ञायामित्युक्तम्, तेषु सप्तमीविभक्तेः किं तात्पर्यमिति विचारणीयम्। भाष्यकृताऽयं विषयो विशदीकृतः। यथा—"अथवा य एते संज्ञायां विधीयन्ते, तेषु नैवं विज्ञायते संज्ञायामभिधेयायामिति। किं तर्हि? प्रत्ययान्तेन चेत् संज्ञा गम्यत इति" [ ३।१।११२ ] इति। अत्र 'गम्यते' इत्यस्योच्यत इत्येवार्थः। एतद्व्याख्याने कैयटेनाभ्यधायि—"संज्ञायामिति संज्ञाशब्दः कर्मसाधनो न गृह्यते, किन्तु भावसाधनः। तेन प्रत्ययान्तेन यदि रूढिर्गम्यते ततः प्रत्ययः" [प्रदीपे, तत्रैव] इति। एतद्व्याख्याने नागेश आह—"भावसाधनेन धातूनामनेकार्थत्वाद्[1] रूढिरुच्यते। ...तद्विषयोऽर्थः। तेन रूढ्यर्थो गम्यत इत्यर्थः। नामधेयवाची संज्ञाशब्दस्तु करणव्युत्पन्न इति बोध्यम्" [ उद्द्योते, तत्रैव ] इति।

अत्र "संज्ञायामभिधेयायाम्" इति भाष्यस्यार्थः—"प्रत्ययस्याभिधेयः संज्ञा न भवति" इति। नागेशेन यद्रूढिरित्युक्तम्, तदर्थस्तु प्रसिद्धिरेव।

---

१. अत्र "धातूनामनेकार्थत्वात्" इति कथनमनावश्यकम्। रूढिर्नाम प्रसिद्धिः। प्रसिद्धिः = प्रकृष्टा सिद्धिः। सिद्धिः पुनर्ज्ञानमेव। अत एव ज्ञानार्थकाद् ज्ञाधातोर्भावेऽङि रूढिवाचकः संज्ञाशब्दः सिद्ध्यत्येव। धातूनमनेकार्थत्वाश्रयणमत एवानावश्यकम्।

भाष्यसिद्धान्त उदाहरणमुखेन वासुदेवदीक्षितेन स्वच्छीकृतः। यथा—"न च रघुनाथ इत्यादौ संज्ञायां णत्वं शङ्क्यम्, णत्वेन चेत् संज्ञा गम्यत इत्यर्थात्। इह तु कृते णत्वे संज्ञात्वभङ्गापत्तेर्न णत्वम्। अत एव भृञोऽसंज्ञायामिति सूत्रभाष्ये य एते संज्ञायामिति विधीयन्ते, तेषु नैवं विज्ञायते संज्ञायामभिधेयायामिति। किं तर्हि प्रत्ययान्तेन चेत् संज्ञा गम्यते इत्युक्तम्" [ बालमनोरमायाम्, ८।४।३ ] इति।

एतेनेदं गम्यते यत् संज्ञाशब्दा रूढिशब्दा नामधेयशब्दाश्च भवन्ति। अत एव नामधेयवाचिसंज्ञाशब्दस्थले चन्द्राचार्येण नामशब्द एव प्रदत्तः। यथा—"अन्यपदार्थे च संज्ञायाम्" [ २।१।२१ ] इति पाणिनिर्बभाषे। चन्द्राचार्यस्तु "अन्यार्थे नाम्नि" [२।२।१४] इत्युवाच।

इह रूढ्यर्थपरायणानि व्याख्यानानि कानिचित् प्रदर्श्यन्ते। वासुदेवदीक्षितः संज्ञा हि रूढिरिति धेनुष्याशब्दव्याख्यान उक्तवान् [ बालमनो० ४।४।८६ ]। तथैव कैयटोऽपि — "भार्या नाम क्षत्रियाः" [ भाष्ये, ३।१।११२ ] इत्यत्र संज्ञायत इति संज्ञेति कर्मसाधनं संज्ञाशब्दं मत्वा संज्ञा खलु रूढिरित्युक्तवान्। नागेशोऽपि संज्ञायामुपमानमित्यत्र चञ्चेव चञ्चेत्यस्य व्याख्यानावसरे—"चञ्चासदृशे व्यक्तिविशेषे रूढेः संज्ञात्वम्" [ उद्द्योते, ६।१।२०४ ] इति स्वीचकार।

नामधेयपरायणानि व्याख्यानानि यथा—"शमिधातोः संज्ञायाम्" [३।२।१४] इत्यनेन निष्पन्नः संज्ञाशब्दः कस्याश्चित् परिव्राजिकाया नाम इति भाष्यम् ( शङ्करा नाम परिव्राजिका )। तथैव ८।२।११ सूत्रसिद्धः 'अहीवती' इति संज्ञाशब्दो नदीविशेषस्य नामैव। तदेतदुपरिष्टात् पुष्कलं प्रदर्शयिष्यामः।

अन्योऽपि संज्ञाशब्दार्थोऽस्ति। स च "तदशिष्यं संज्ञाप्रमाणत्वात्" [ १।२।५३ ] इति सूत्रे दृश्यते। अस्य व्याख्याने —"संज्ञानं संज्ञा" इति भाष्यकृतोक्तम्। किमिदं संज्ञानमित्याह कैयटः — "अवगमः, संप्रत्यय इत्यर्थः। तत्र यथा 'आपो दारा सिकता वर्षा' इत्युक्ते लिङ्गसंख्याविशेषावगतिरुत्पद्यमाना प्रमाणमेवं पञ्चाला वरणा इत्यादावपि। न च पञ्चालादयो यौगिकाः, अपि तु जनपदादीनां संज्ञास्ततो योगानवगमात् तद्धितो नोत्पद्यत इति लुब्रपि न वक्तव्यः" [ प्रदीपे, तत्रैव ]। एतत्सूत्रस्थः संज्ञाशब्दः खलु भावेऽङि निष्पद्यते। यथाह नागेशः — "भावेऽङन्तो यौगिकः संज्ञाशब्द इत्यर्थः" [ उद्द्योते, तत्रैव ]।

द्विविधाः खलु संज्ञाशब्दा इत्याचार्याः[1] । केचिदवयवार्थानुगताः, केचिच्च तद्विपरीता इति । तदेतदुदाहरणेन विशदीकृतं जिनेन्द्रेण —"संज्ञाशब्दा हि द्विविधा भवन्ति । केचिदवयवार्थानुगताः, यथा सप्तपर्ण इति । केचित्तु विपरीताः, यथा तैलपायिकेति । तदिह यत्रावयवार्थानुगमोऽस्ति 'विश्वंभरः, शत्रुन्तपः' इत्यादिषु तत्र कर्मणीति संबध्यते, विश्वं बिभर्तीति विश्वंभरः । यत्र त्ववयवार्थानुगमो नास्ति यथा रथन्तरं सामेति, तत्र व्युत्पत्त्यर्थं सुपीति संबध्यते; रथेन तरतीति रथे तरतीति वा" [ न्यासे, ३।२।४६ ] । संज्ञाशब्दानां रूढिशब्दत्वमाश्रित्यैव पारस्करादीनां संज्ञाशब्दानां विषये न्यासकार आह—"पारस्करप्रभृतयो रूढिशब्दा यथाकथञ्चिद् व्युत्पाद्याः । नात्रावयवार्थं प्रत्यभिनिवेष्टव्यम्" [६।१।१५७] इति । अत एव संज्ञायां यः शब्दो व्युत्पाद्यते, यदि स एव शब्दो यौगिकार्थं पुरस्कृत्य प्रवर्तते तर्हि संज्ञाविधिसिद्धं णत्वादि कार्यं न भवतीति ज्ञेयम् । "नखमुखात् संज्ञायाम्" [४।१।५८] इत्यनेन शूर्पणखाशब्दो राक्षसीविशेषस्य नामधेयत्वेन ( संज्ञायां ) सिद्धो भवति । यदि पुनः शूर्पमिव नखो यस्या इत्यर्थं पुरस्कृत्य 'शूर्पाकारनखयोगवती काचित् स्त्री' इत्यर्थः क्रियते, तर्हि णत्वं न भवति [ न्यासे, ४।१।५८ ] । यौगिकार्थव्यपदेशे सति संज्ञासूत्रीयं कार्यं न भवतीति न्यायः । यौगिकार्थे सत्यपि यदा यौगिकार्थव्यपदेशो न भवति, तदा तु संज्ञाकार्यं स्यादेव ।

अथेहेदं विचार्यते—किमर्थमेकस्यैव संज्ञाशब्दस्य व्युत्पत्तिः कर्मकरणभावार्थेषु क्रियत इति । बहवः संज्ञाशब्दार्था इति तदर्थानुगुणानि निर्वचनानि क्रियन्ते । तदेतद् विस्तरेणेह प्रदर्श्यते । विषयेऽस्मिन् कैयटः स्पष्टमुक्तवान्—"संज्ञायत इति संज्ञेत्यर्थः । एवं व्यपदिश्यमानोऽभिधीयते । अथवा संज्ञायतेऽनयेति संज्ञा ।...तदा शब्द एव संज्ञाशब्देनोच्यते । संज्ञायां विषये कार्यं भवतीत्यर्थः" [ प्रदीपे ५।२।६१ ] । संज्ञायां विषये = एवं व्यवह्रियमाण इत्यर्थः [ उद्द्योते, तत्रैव ] । भावार्थकसंज्ञाशब्दस्तु १।२।५३ सूत्रव्याख्याने प्रागेवोक्तम् ।

एतेनेदं सिध्यति यत् संज्ञाशब्दस्य त्रयोऽर्था सन्ति । तथा हि—(१) यदा करणेऽङ् भवति, ( यया शब्दः संज्ञायते सा संज्ञा ) तदा संज्ञापदेन शब्दो गृह्यते । (२) यदा कर्मण्यङ्प्रत्ययो भवति ( संज्ञायते यः स संज्ञा ) तदा संज्ञाशब्देनार्थो गृह्यते । (३) यदा पुनर्भावेऽङ्

१. शब्दानां संज्ञारूपत्वविषये क्वचिद् विवदन्ते व्याख्यातारः । तथा हि ४।३।२७ सूत्रकाशिकाया मुक्तम् –"संज्ञाधिकारं केचित् 'कृतलब्धक्रीतकुशलाः' [ ४।३।३८ ] इति यावदनुवर्तयन्ति" इति । यदि लौकिकप्रयोगैः संज्ञार्थसिद्धिः स्यात् तर्हि विवादास्पदानां सूत्राणां संज्ञानिष्पादकत्वमभ्युपेयमेव ।

भवति, तदा संज्ञापदेन सम्प्रत्ययो व्यवहारो वा गृह्यते । अत एव सर्वैर्व्याख्यातृभिर्यथाविवक्षम्—'सम्यग् ज्ञानं संज्ञा', 'सम्यग् ज्ञायते संज्ञा', संज्ञानां व्यवहाराणाम्', 'संज्ञाभूतो भावः' इत्युररीक्रियन्ते । एतेषां त्रयाणामर्थानां विषये पूर्वाचार्यवचांस्यत्र प्रस्तूयन्ते—

१—करणसाधनः संज्ञाशब्दः – "संज्ञायतेऽनयेति संज्ञा । ततः शब्द एव संज्ञाशब्देनोच्यते । संज्ञायां विषये कार्यं भवतीत्यर्थः" [ प्रदीपे, ५।२।६१ ] । "नामधेयवाची संज्ञाशब्दस्तु करणव्युत्पन्न इति बोध्यम्" [ उद्द्योते, ३।१।११२ ] ।

२—कर्मसाधनः संज्ञाशब्दः—भार्या नाम क्षत्रियाः । संज्ञायत इति संज्ञेति कर्मसाधनोऽत्र । अत्र संज्ञा रूढिरिति कैयटः [ ३।१।११२ ][1] । "संज्ञाशब्देन कर्मसाधनेन संज्ञायमानमभिधीयते" [ उद्द्योते, ३।१।११२ ] ।

३ –भावसाधनः संज्ञाशब्दः—सम्यग् ज्ञानं संज्ञा । "संज्ञानां लोकव्यवहाराणाम्" [ १।२।५३ बालमनो० ] इति । तदेतत् प्रागेव "तदशिष्यं संज्ञाप्रमाणत्वात्" [ १।२।५३ ] इति सूत्रव्याख्याने विशदीकृतम् ।

अथेह संज्ञालक्षणविषये यत् प्राचार्यैरुक्तं तद् विचार्यते —

( क ) समुदायोपाधिः संज्ञेति प्रसिद्धमेव । यतो हि समुदायेनैव संज्ञा गम्यतेऽत इदमुच्यते । अत एव 'संज्ञायाम्' [ २।१।४४ ] इत्यस्योदाहरणभूतम्—'अरण्येतिलकाः' इति पदं व्याख्याय विट्ठल उक्तवान्—"संज्ञा समुदायोपाधिस्तेन नित्यसमासोऽयम्, नहि वाक्येन संज्ञा गम्यते" [ प्रसादटीकायाम् ] । अत्राह न्यासकारः—"यत्र खलु समुदायेन चेत् संज्ञा गम्यते इत्युच्यते तत्र संज्ञायामिति नेदं पूर्वपदस्योत्तरपदस्य वा विशेषणम्, किन्तर्हि समुदायस्येति विज्ञेयम्" [२।१।४४] (?) । नियमस्यास्यैकमुदाहरणं प्रस्तूयते । पाणिनिः खलु "उपसर्गे च संज्ञायाम्" [ ३।२।६६ ] इत्यनेन संज्ञायां प्रजाशब्दं निष्पादयति । अत्रापि संज्ञा समुदायोपाधिरित्युच्यते । कोऽयं समुदायोपाधिरित्याह जिनेन्द्रः "धातूपसर्गप्रत्ययसमुदायेन यदि संज्ञा गम्यते । एवं प्रत्ययार्थो भवति, नान्यथेति दर्शयति प्रजेति । प्राणिसमुदायस्यैषा संज्ञा" [ न्यासे, ३।२।६६ ] । अन्यत्रापि स एव—"प्रकृतिप्रत्ययसमुदायेन यदि संज्ञा गम्यते । एवं प्रत्ययो भवति नान्यथा" [ न्यासे, ३।३।११८ ] इति । अत्रेदं विज्ञेयं यदुपाधिः खल्ववाच्यत्वे सति व्यावर्तको भवति,

---

१. ३।१।११२ सूत्रस्योदाहरणं भार्याशब्दः । कथमयं संज्ञेति जिनेन्द्र आह —"संज्ञाशब्दश्च भार्याशब्दः । तथा ह्यबिभ्रतश्रपि देवदत्ते तस्य पत्नी भार्येत्युच्यते" [ न्यासे, ३।१।११२ ] इति ।

विशेषणस्तु वाच्यत्वे सति व्यावर्तकम् । 'प्र+जन्+ड' इत्येतेन समुदायेन यद्यपि प्राणिसमुदाय-रूपार्थोऽवाच्यो भवति, तथापि तदर्थस्य प्रतीतिरस्त्येव । अत एव संज्ञासमुदायोपाधिरित्युच्यते । 'प्र+जन्+ड' इति समुदायस्य वाच्यार्थः खलु प्रकृष्टजनिकर्तृत्वमेव ।[1]

(ख) यावद्द्रव्यभाविनी संज्ञा—मतमिदं "भुवः संज्ञान्तरयोः" [ ३।२।१७९ ] इत्यत्र विट्ठलेनोपवर्णितम् । तथा ह्यन्तरशब्दस्योदाहरणभूतं प्रतिभूशब्दं व्याख्याय तेनोक्तम्—"ननु संज्ञायामित्येव वक्तव्यम्, किमन्तरग्रहणेन ? न, यावद्द्रव्यभाविनी हि संज्ञा । प्रतिभूशब्दः पुरुषे कादाचित्कः" [ प्रसादटीका ] इति । कथमयं कादाचित्क इत्यत आह वासुदेवः—"प्रतिभूशब्दस्तु सत्येव पुरुषे कदाचिन्न भवति, ऋणे प्रतिदत्ते सति प्रातिभाव्यस्य निवृत्तेः" [ बालमनो० ३।२।१७९ ] इति । इदमेव मतं न्यासकारो विशदीकृतवान् । यथात्रैव—"ननु प्रतिभूरिति संज्ञेयम् । तत् किमन्तरग्रहणेन । संज्ञायामित्येव वक्तव्यम् । नैतदस्ति । द्रव्यता-विघाता हि संज्ञाशब्दा भवन्ति । न चैवं प्रतिभूशब्दः । तथापि सत्यपि देवदत्ते कदाचिदसौ न प्रवर्तत एव" [ न्यासे, ३।२।१७९ ] इति ।

(ग) एकद्रव्यनिवेशी संज्ञाशब्दः—यदा संज्ञाशब्दस्यार्थो नामधेयं भवति, तदेदमुच्यते । देवदत्तयज्ञदत्तादिसंज्ञाशब्दा एकद्रव्यनिवेशिनो भवन्ति; क्वचित्पिण्डे पित्रादिना संकेतिता-स्तदर्थमात्रबोधका इमे । घटादिशब्दा जातिं पुरस्कृत्य प्रवर्तन्ते, संज्ञाशब्दाः पुनर्नामधेयानि गमयन्तीत्यनयोर्भेदः ।

नियममेनमाश्रित्य कश्चिद्विचारो विट्ठलेन प्रस्तुतः । सोऽत्र कथ्यते । तथा हि—"संज्ञापूरण्योश्च" [६।३।३८] इत्यस्योदाहरणभूतं दत्ताभार्य इति पदं व्याख्याय विट्ठल उक्तवान्—"ननु च संज्ञाशब्दस्यैकद्रव्यविनिवेशितत्वादुक्तपुंस्कत्वाभावात् कथं पुंवत्त्वप्राप्तिः । नैतत् ।

---

१. यदि संज्ञाशब्दे 'समुदायेनैव संज्ञा गम्यते' इत्युच्यते, तर्हि किमर्थमेतादृशेषु शब्देषु पूर्वोत्तरपदविभागः प्रदर्श्यते ? अत्र न्यासकार आह—'पूर्वेषुकामशमीत्यादिर्ग्रामाणां संज्ञा । पूर्वा चासाविषुकामशमी चेति पूर्वेषुकामशमी । मन्दधियां पूर्वोत्तरपदविभागमात्रप्रदर्शनार्थं वाक्यं कृतम् । नह्यत्र वाक्येन भवितव्यम् । नहि वाक्येन संज्ञा गम्यते" [ न्यासे २।१।५० इति ।

२. 'द्रव्यताविघाता' इति पाठो भ्रष्टः । द्रव्यसत्ताऽविघातम् ( द्रव्यसत्ता+आविघातम् ) इति पाठः साधुः । आविघातम् = विघातपर्यन्तम् । यावत्कालपर्यन्तं द्रव्यसत्ता विद्यते, तावत्कालपर्यन्तं संज्ञाशब्दप्रवृत्ति-रस्त्येव । अत्र भवन्तीत्यस्यार्थं प्रवर्तन्त इति ।

नह्ययं नियमोऽस्त्येकद्रव्यविनिवेशिनः संज्ञाशब्दा इति। तथा हि देवदत्तादिशब्दः संज्ञाभूतः (संज्ञात्वं प्राप्त इत्यर्थः) अनेकत्र प्रयुज्यमानो लोके दृश्यते, शास्त्रे च ह्रस्वादिशब्दाः। ये त्वेकद्रव्यविनिवेशिनस्तान् प्रति नैष निषेधः। नन्वनेकार्थवृत्तित्वेऽपि संज्ञाशब्दानां कथमुक्तपुंस्कत्वमेकत्र प्रवृत्तिनिमित्ते। नहि तेषां किञ्चित् प्रवृत्तिनिमित्तमस्ति यदृच्छाशब्दत्वात्। एषोऽप्यदोषः। यतस्तेषामपि किञ्चिन्निमित्तमस्त्येव सप्तपर्णादिवत्। यत्राप्यन्यन्निमित्तं नास्ति, तत्रापि स्वरूपमेव निमित्तमादाय वाच्ये प्रवर्तन्ते" [प्रसादटीका० ६।३।३८] इति।

एतेनेदं सिद्धं भवति यत् संज्ञाशब्दानामपि किमपि निमित्तमस्त्येव। यथा संज्ञाभूते दत्ताशब्दे दानक्रियाकृतिरूपं निमित्तम्। यद्वा तस्य स्वरूपमेव प्रवृत्तिनिमित्तम्। यथाहात्रैव विट्ठलः—"अत्र यासौ दानक्रियाकृतिस्तस्यां दत्तशब्दो भाषितपुंस्कः, अथवा स्वरूपे प्रवृत्तिनिमित्ते" इति। वासुदेवदीक्षितोऽप्याह—"दत्तशब्दोऽयं डित्थादिशब्दवन्न, किन्तु दानक्रियां पुरस्कृत्यैव स्त्रियां पुंसि च संज्ञाभूतः प्रवृत्तः, अतस्तस्य भाषितपुंस्कत्वात् पुंवत्त्वे प्राप्ते निषेधोऽयम्" [बालमनो० ६।३।३८]।

(घ) अक्तपरिमाणा संज्ञा—इदं कण्ठतः कैयटेनाभ्यधायि [१।२।१ प्रदीपे]। यस्य शब्दपरिमाणो नियतो भवति, किमपि शास्त्रान्तरविहितं कार्यं यस्मिन्न प्रवर्तते, स शब्दोऽक्तपरिमाणः।

इदमेव लक्षणमन्यैराचार्यैः—"नियतानुपूर्वीका संज्ञा" इति वाक्येन प्रदर्श्यते। यस्य शब्दस्यानुपूर्वी नियता, स एव संज्ञाशब्द इत्यर्थः। पूर्वोक्तलक्षणवाक्यस्येदं फलितार्थकथनमिति स्पष्टमेव। अत एव ३।३।९९ सूत्रसिद्धं समज्येति संज्ञाशब्दमधिकृत्य जिनेन्द्रो बभाषे—"समज्येति। अजेर्व्यघञपोरिति वीभावो न भवति। संज्ञायामिति वचनात्। नहि वीभावे कृते संज्ञा गम्यते। नियतवर्णानुपूर्वीका हि संज्ञा भवति" [न्यासे, ३।३।९९] इति।

(सावशेषम्)

---

# अरिष्टविचारः

श्रीमीठालाल ओझा, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी ।

सुविदितमेव तत्रभवतां विद्वद्वराणां यद् ज्यौतिषशास्त्रमिदं सर्वेषां जडचेतनादिजन्मवतां शुभाशुभफलनिदर्शकमिति । उक्तं च श्रीमता वराहमिहिराचार्येण लघुजातके—

यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः पक्तिम् ।

व्यञ्जयति शास्त्रमेतत्तमसि द्रव्याणि दीप इव ॥ [१।३] इति ।

अवश्यं भाविनः शुभस्याऽशुभस्य वा ज्ञानेन किं फलम् ? अत्र विषये श्रीमताऽऽचार्येण भट्टोत्पलेन सुस्पष्टं विवेचितमस्ति । तद्यथा—"शुभस्याशुभस्य वाऽवश्यं भाविनः किं व्यनक्ति । उच्यते । द्विविधं शुभाशुभं दृढकर्मोपार्जितमदृढकर्मोपार्जितं च । तत्र दृढकर्मोपार्जितस्य दशाफलं पाकक्रमेण व्यनक्ति । अशुभं दशाफलं ज्ञात्वा यात्रादेः परिहारः कर्तव्यः । शुभं ज्ञात्वा यात्रादेरतिशयेन दानम् । अदृढकर्मोपार्जितस्याष्टकवर्गेण फलव्यक्तिः । तच्चाशुभं ज्ञात्वा शान्त्यादिभिरुपशमं नयेत् । तथा च यवनेश्वरः—

यद्यद्विधानं नियतं प्रजानां ग्रहर्क्षयोगप्रभवं प्रसूतौ ।
भाग्यानि तानीत्यभिशब्दयन्ति वार्तानियोगेति दशा नराणाम् ॥
तदप्यभिज्ञैर्द्विविधं निरुक्तं स्थिराख्यमौत्पातिकसंज्ञितं च ।
कालक्रमाज्जातकनिश्चितं यत्क्रमोपसर्पि स्थिरमुच्यते तत् ॥
सप्तग्रहाणां प्रथितानि यानि स्थानानि जन्मप्रभवानि सद्भिः ।
तेभ्यः फलं चारग्रहक्रमस्था दद्युर्यदौत्पातिकसंज्ञितं तत् ॥ इति ।

अनेनास्थिरस्य शान्त्यादिभिरुपशमः प्रदर्शितो भवति । उक्तं च भगवता व्यासेन—"विहन्याद् दुर्बलं दैवं पुरुषेण विपश्चिता" [बृह० टी० १।३] इति ।

प्राक्तनजन्मनि विहिताच्छुभाशुभकर्मवशाज्जन्तोर्जन्म सदसद्योनिषु जायते । पुनर्जन्मविषयेऽनेकेषां शास्त्राणामैकमत्यम् । उक्तं च कालिदासेन शाकुन्तलनाटके—

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः ।

तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ [ ५।२ ] इति ।

एवं च माघकाव्येऽपि—

"सतीव योषित्प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि" [ १।७२ ] इति ।

अन्यैरप्युक्तम्—"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति । "नह्यात्मनां भवति कर्मफलोपभोगः कायाद्विना" [ सिद्धा० शि०. गो० भु० ६५ श्लो० टी० ] इत्यादि च ।

अतो जन्मसमये पूर्वजन्मकृतशुभाशुभकर्मविपाकजनितफलज्ञानाय सर्वो यत्नः । तत्र प्रथमं "सति कुड्ये चित्रम्" इति न्यायाद्देहस्य विचार आवश्यकः । अत एव जन्मकुण्डल्यामपि तनु-धन-सहज-सुहृत्-सुतादिद्वादशभावेषु देहस्य प्रथमं स्थानम् । अस्य देहस्य सुखदुःखादि-विचारो गर्भाधानादेव शास्त्रकारैर्विहितः । आधानात् प्रभृति गर्भस्य यादृशी स्थितिर्येश्चाधिपति-स्तेषां विस्तृतं विवेचनमिदम्—गर्भस्य प्रथमे मासि कललं भवति । शुक्रशोणिते घने संमिश्रीभूते तत्र, गर्भस्य तस्मिन् मासे सितो(शुक्रः)ऽधिपतिः । द्वितीये घनता भवति, तत्र भौमोऽधिपतिः । तृतीये मासि हस्ताद्यवयवजन्म, तत्र गुरुरधिपतिः । चतुर्थे मास्यस्थिसंभवस्तत्र सूर्योऽधिपतिः । पञ्चमे चर्मसंभवस्तत्र चन्द्रोऽधिपतिः । षष्ठे लोमजन्म तत्र शनिरधिपतिः । सप्तमे चेतनता संभवति तत्र बुधोऽधिपतिः । अष्टमे मासि गर्भस्थो जन्तुरशनं करोति, मात्रा भुक्तं पीतं रसादि तस्य नाभिलग्ननालेन संक्रमते । तत्र गर्भाधानलग्नाधिपतिर्यो ग्रहः स मासाधिपतिः । नवमे गर्भस्थस्योद्वेगो भवति तत्र चन्द्रोऽधिपतिः । दशमे गर्भस्य प्रसूतिर्भवति तत्र सूर्योऽधिपतिः । गर्भस्थस्य मासाधिपतिसदृशं शुभाशुभं फलं भवति । एतदुक्तं भवति—आधानकाले यो ग्रहो निपीडितो भवति तन्मासि गर्भस्य पतनम् । उक्तं च लघुजातके—"कलुषैः पीडा पतनं निपीडितै-र्निर्मलैः पुष्टिः" [५।७] इति । विशेषतश्चारिष्टविचारो जन्मानन्तरं प्रस्तूयते । अरिष्टं नाम देहस्य कष्टकरो योगः । अस्य विचारोऽनेकविधः । तद्यथा—प्रथमं जन्मतश्चतुर्थवर्षपर्यन्तं मातुः पापेन बालः पीड्यते । तदनन्तरमष्टवर्षाणि यावत् पितुः पापेन पीडा भवति । ततः परं द्वादशवर्ष-वयःपर्यन्तं जातकः स्वकृतदुष्कृतेन दुःखीभवति । तदुक्तं जातकपारिजाते—

आद्ये चतुष्के जननीकृताघैर्मध्ये तु पित्रर्जितपापसंघैः ।
बालस्तदन्त्यासु चतुःशरत्सु स्वकीयदोषैः समुपैति नाशम् ॥ [४।२] इति ।

अत एवाष्टवर्षाणि यावद् बालारिष्टम्, ततो विंशतिवर्षाणि यावद्योगारिष्टं भवति । उक्तं च तत्रैव—"अष्टौ बालारिष्टमादौ नराणां योगारिष्टं प्राहुराविंशतिः स्यात्" [४।३] इति ।

उपर्युक्तवचनपर्यालोचनयैतदनुमीयते यदष्टौ वर्षाणि यावज्जातकस्य जन्मकुण्डल्यामरिष्टयोगाभावेऽपि जननीजनकयोर्दुष्कृतेनारिष्टं भवितुमर्हति। अत एव जातकारिष्टविचारे महान् क्लेशः। एतादृशेऽवसरे दैवज्ञस्य वाण्या निष्फलतासंभवः।

द्वितीयं चन्द्रकृतमरिष्टं भवति। एतत् सर्वापेक्षया मुख्यम्। मनसोऽधिपतिश्चन्द्रः। मन एव मनुष्याणामर्थमनर्थं वा सर्वमुत्पादयतीति सुविदितमेव। उक्तं च पञ्चदश्याम्—

"मन एव मनुष्याणां कारणं बन्धमोक्षयोः" [११।१७] इति।

अत एव चन्द्रस्य शुभाशुभत्वे मनसोऽपि तादृश्येव स्थितिर्भवति। चन्द्रकृतारिष्टं बहुधा शास्त्रकारैर्वर्णितमस्ति। तद्यथा जातकतिलके—

पापेक्षिते शुभैर्दृष्टे पापभांशगते विधौ।
रन्ध्रारिगे मृतिः सद्यः शुभदृष्टे समाष्टकृत्॥ इत्यादि।

होरामकरन्दे—

निधनरिपुगृहस्थः पापदृष्टः शशाङ्को
झटिति निधनकारी सौम्यदृष्टोऽष्टवर्षात्।
अशुभशुभसमानालोकनाब्दैश्चतुर्भि-
र्भवति खलु विमिश्रैश्चानुपातो विधेयः॥ इत्यादि।

होराप्रदीपे—

वर्षादयनान्मासात्सद्योऽब्जोऽष्टारिगो मृतिं कुर्यात्।
एकादिपादवृद्धया दृष्टः पापैः क्रमाद् बलिभिः॥ इत्यादि।

सारावल्याम्—

क्षीणशरीरश्चन्द्रो लग्नस्थः क्रूरवीक्षितः कुरुते।
स्वर्गगमनं हि पुंसां कुलीरगोजान् परित्यज्य॥ [१०।२०] इत्यादि।

बृहज्जातके—

क्रूरेण संयुतः शशी स्मरान्त्यमृत्युलग्नगः।
कण्टकाद्बहिः शुभैरवीक्षितश्च मृत्युदः॥ [६।५] इत्यादि।

एवमेव लग्न-लग्नाधिप-राश्याधिप-सूर्य-भौम-बुध-गुरु-शुक्र-शनि-राहु-सौम्यग्रह-क्रूरग्रह-सूर्य-चन्द्र-बुधकृतारिष्टानि विविधानि सन्ति। तत्तद्ग्राहकृता अनेकेऽरिष्टयोगाः शास्त्रेषूपलभ्यन्ते। तेषु विस्तरभिया केवलं सूर्य-लग्न-कृतारिष्टयोगा द्वित्रा अत्र प्रदर्श्यन्ते।

तत्र सूर्यकृतारिष्टम्—

सूर्यः पापेन संयुक्तः सूर्यो वा पापमध्यगः।
सूर्यात् सप्तमगः पापस्तदा चात्मवधो भवेत्॥ इत्यादि।

लग्नकृतारिष्टम्—

लग्नं पापेन संयुक्तं लग्नं वा पापमध्यगम्।
लग्नात् सप्तमगः पापस्तदा चात्मवधो भवेत्॥
क्रूरयुक्तस्तु होरेशः पञ्चतामेव यच्छति।
मासेन जन्मपस्तद्वच्छिद्रे सौम्यैर्न वीक्षितः॥ इत्यादि।

[ होरामकरन्दे ]

यथाऽरिष्टयोगाः सन्ति, तथैव तेषां भङ्गकरा अपि योगाः सन्ति। अतस्तत्तद्ग्रहादिकृतारिष्टभङ्गयोगा बहुलतया समुपलभ्यन्ते। तेषूदाहरणरूपेण केचिदत्र निदर्श्यन्ते। तत्र चन्द्रकृतारिष्टभङ्गो यथा—

रात्रौ जातः सिते पक्षे दिवा जातः सितेतरे।
चन्द्रारिष्टं न तस्य स्यात्पितृवत्तं स रक्षति॥

[ जातकतिलके ]

लग्नेश्वरकृतारिष्टभङ्गयोगो यथा—

लग्नेश्वरोऽतिबलवाञ्छुभबन्धुदृष्टोऽरिष्टं हरत्यहिमरश्मिरिवान्धकारम्।
निःशेषखेचरदृशां यदि सोऽपि पात्रं जातो गतोऽङ्गभवनं निधनं निहन्ति॥

[ होरामकरन्दे ]

गुर्वादिकृतारिष्टभङ्गयोगो यथा—

गुरुर्दीप्तो बली केन्द्रे विशेषाल्लग्नगो हरेत्।
पापदृष्टोऽखिलं रिष्टं तद्वज्ज्ञसितलग्नपाः॥ इति।

[जातकतिलके]

अन्येऽप्यमेकेऽरिष्टभङ्गयोगा विस्तारभियाऽत्र न दर्शिताः।

एवमेव जातकस्य ये ये संबन्धिनस्तेषामरिष्टविचारोऽपि जातककुण्डल्या कर्तुं शक्यते। प्रधानतया पित्रोररिष्टयोगः सर्वैर्विचार्यते। न केवलमरिष्टविचारः परं तयोस्तेषां वा सुखदुःखभाग्यादिविचारोऽपि जातककुण्डल्या दैवज्ञैः क्रियते। तत्तद्योगा जन्मविध्यादिप्रकरणेषु समुपलभ्यन्ते।

परमत्रैतद्विचारणीयमापतति यज्जातकस्य जन्म स्वपितुर्जातं वाऽन्यतः। यदि पितुरन्यतो जन्म तदा जातकंकुण्डल्यां समुपलभ्यमानो यः पितुः कष्टकरो योगः, तेन कः पिता कष्टभाग् भवेत्? अत्र विचार्यमाणे यो जन्मदाता स एव कष्टभाग्भवति। यतो हि जन्मकुण्डल्यां वर्तमानग्रहानुसारि जातकस्य शरीरं भवति। तद्यथा—

लग्ननवांशपतुल्यतनुः स्याद्वीर्ययुतग्रहतुल्यतनुर्वा।
चन्द्रसमेतनवांशपवर्णः कादिविलग्नविभक्तभगात्रः॥ इत्यादि।
[ बृहज्जातके ५।२३ ]

तथैव पित्रादीनामपि। अत्र जातके कारकग्रहा भवन्ति। यथा मातुः कारकश्चन्द्रः, पितुः कारकः सूर्यः, भ्रातुः कारको भौमः, स्त्रीकारकः शुक्र इत्यादि। जैमिनिमत आत्मादिकारकाश्चलास्ते तत्र प्रसिद्धाः। कारकग्रहादपि तस्य स्वजनस्य शरीरसुखदुःखादिकं विचार्यते। अर्थात् कारकग्रहस्य सबलत्वे शुभत्वेऽनिपीडितत्वे च तस्य सुखादिकं भवति, अन्यथा विपरीतं जायते। एवं च जन्तोः शरीरं पित्रो रजोवीर्यसमुद्भवम्। तस्मिन् शरीरे प्रायशः पित्रोर्गुणधर्मा अवतीर्यन्ते। अत एव जातकस्य शरीर उत्पादकस्य रक्तसंबन्धात्तस्य जन्मकुण्डल्या उत्पादकस्य पितुः सुखदुःखादिकं विचारार्हं नान्यस्य पितुः, पाञ्चभौतिकशरीरस्य ग्रहानुसारित्वात्। एवमेव दत्तकस्य जातकस्य पित्रोस्तस्य जन्मकुण्डल्या सुखदुखादिविचारोऽपि गाम्भीर्यमवगाहते। एतादृशेऽवसरे फलादेशविचारकस्य दैवज्ञस्य कृते महद्वैषम्यमापतति। अत्र ज्यौतिषशास्त्राखिलाङ्गज्ञातुर्देशकालादिविचारवतो दैवज्ञस्य वाणी प्रायशो मिथ्या न भवति। केवलशास्त्रानुसारिणस्तु कदाचित् स्यादेव।

यथा जन्मकालेऽरिष्टविचारः क्रियते, तथैव वर्षारम्भकालेऽपि भवति। तत्र लग्नेशमुन्थाचन्द्रादिकृतमरिष्टं वर्षतन्त्रे विस्तरतः प्रपञ्चितमस्ति। यथा—

लग्नेशेऽष्टमगेऽष्टमेशे तनुस्थे वा कुजेक्षिते।
ज्ञजीवयोरस्तगयोः शस्त्रघातो विपन्मृतिः॥१॥

क्रूरान्वितेक्षितयुता शनिनेन्थिहाधिव्याधिप्रदा जनुषि रिःफसुखारिरन्ध्रे।
द्यूने च वर्षतनुनैधनगा मृतिं सा दत्ते खलेक्षितयुतेत्यपि चिन्त्यमार्यैः॥२०॥

चन्द्रो रिःफषडष्टभूद्युनगतो दृष्टोऽशुभैर्नो शुभैः
सोऽरिष्टं विदधाति मृत्युमथवा भौमेक्षणादग्निभीः।

शस्त्राद्वा शनिराहुकेतुभिररेर्भीतिं रुजं वायुजां
दारिद्र्यं रविणा शुभं शुभदृशेज्यालोकनादादिशेत् ॥ १६ ॥ इत्यादयः ।
[ नीलकण्ठ्यां वर्षतन्त्रे ]

जातकग्रन्थेष्वपि वार्षिकारिष्टविचारो दृश्यते । जातकाभरणेऽरिष्टाध्यायान्तेऽरिष्ट-विचारो यथा—

वयो राशि स्वनक्षत्रमेकीकृत्य पृथक् पृथक् ।
द्विचतुस्त्रिगुणं कृत्वा सप्ताष्टरसभाजितम् ॥ १६ ॥
आद्यन्तयोर्भवेद्दुःखी मध्यशून्यं धनक्षयः ।
स्थानत्रयेऽप्यशेषं तु मृत्युः साङ्केषु वै जयी ॥ १७ ॥ इति ।

स्वरशास्त्रेऽपि वार्षिकारिष्टविचारोऽनेकशो विहितः । अत्र स्वरचक्रस्य प्राधान्याद् विस्तरभयात् तस्योल्लेखो न कृतः । अत्र विषये नरपतिजयचर्यादयो ग्रन्था विशेषतो दर्शनार्हाः ।

तात्कालिकमरिष्टं प्रश्नेन विचारयितुं शक्यते । जीवनसापेक्षमरिष्टमायुर्दाययोगैर्मारक-दशाऽन्तर्दशासूक्ष्मदशादिभिर्विभाव्यते । आयुर्दाययोगा जातकालङ्कारपारिजात-जातकाभरणा-दिषु सुस्पष्टाः । मारकदशाविचारः पाराशरीं विशेषतोऽनुसरति । अतस्तत्तद्योगास्तत्रैव द्रष्टव्याः ।

संहिताग्रन्थेषु सामूहिकारिष्टयोगाः समुपलभ्यन्ते । कस्मिंश्चिद्योगे राजारिष्टं भवति, कस्मिंश्चिदितरवर्णानाम्, कस्मिंश्चित् पशूनाम्, सस्यधान्यादीनां च विविधा अरिष्टयोगा दृश्यन्ते । तद्यथा—

जीवे शुक्राभिहते कुलूतगान्धारकैकया मद्राः ।
शाल्वा वत्सा वङ्गा गावः सस्यानि पीड्यन्ते ॥ १८ ॥
भौमेन हते जीवे मध्यो देशो नरेश्वरा गावः ।
सौरेण चार्जुनायन-वसाति-यौधेय-शिबि-विप्राः ॥ १६ ॥
शशितनयेनापि जिते बृहस्पतौ म्लेच्छ-सत्य-शस्त्रभृतः ।
उपयान्ति मध्यदेशश्च संक्षयं यच्च भक्तिफलम् ॥ २० ॥ इत्यादि ।
[ बृहत्संहितायां ग्रहयुद्धाध्याये ]

अरिष्टं बहुशः प्रदर्शितम् । तद् द्विविधमपि निबन्धारम्भ एव किञ्चिद्दर्शितम्—एकं दृढ-कर्मोपार्जितं तत् स्थिराख्यम्, अन्यददृढकर्मोपार्जितं तदौत्पातिकम् । स्थिराख्यमरिष्टं दशाफल-

क्रमेण स्वफलं ददाति । एवं चौत्पातिकमदृढकर्मोपार्जितं वा ग्रहाणां चारक्रमेण फलमनुभावयति । अस्यायमाशयो यत्पूर्वजन्मकृतकर्मानुसारि यदरिष्टं तत् स्थिराख्यम् । तस्य कालक्रमेण भोगोऽवश्यंभावी । एवं चेहजन्मन्याकस्मिकं यदरिष्टमुपजायते तस्य गोचरेण फलभोगो भवति । अर्थाच्चारक्रमेण यदा सूर्यादयो ग्रहा अशुभस्थानस्था भवन्ति, तदा तदशुभमनुभूयते । एवंभूतस्यौत्पातिकाशुभस्य शान्त्यादिभिरुपशमः कर्तुं शक्यते । उक्तं च भगवता व्यासेन—"विहन्याद्दुर्बलं दैवं पुरुषेण विपश्चिता" इति । श्रीमता भट्टोत्पलेनापि बृहज्जातके राशिभेदाऽध्यायस्य तृतीयश्लोकस्य टीकायां स्पष्टं व्याख्यातम्—"तच्चाशुभं ज्ञात्वा शान्त्यादिभिरुपशमं नयेत्" इति । अनेनानुमीयते यदस्थिरस्योपभोगेनैव शान्तिः, न तु शान्त्या । परमेतत्तु निश्चितं यच्छान्त्या फलपरिपाकः शिथिलो भवति । बह्वरिष्टं शान्त्या स्वल्पेनैवारिष्टभोगेनोपशाम्यति । अस्थिरमरिष्टं शान्त्या समुन्मूलयितुं शक्यते । अस्य शान्तिर्जपदानहोमादिरूपा विविधाऽऽकरग्रन्थेषु दृश्यते । साऽत्र विस्तरभिया विसृज्यते ।

ज्यौतिषशास्त्रस्येयं संहिताशाखाऽतीव लोकोपयोगिनी । अस्यां बहुविधदेहधारिणां शारीरिकं शुभाशुभत्वम्, उत्पातोल्कापात-ग्रहयुद्ध-ग्रहचार-वर्षा-भूमि-पक्षिशब्द-वायु-ग्रह-वास्तु-प्रासादायतन-रत्नपरीक्षादिबहवो विषयाः संकलिताः सन्ति । तेन वर्षे जायमानं सार्वकालिकं सर्वविधं च शुभाशुभं ज्ञातुं शक्यते । एतत्प्रशंसायां श्रीमद्भिर्वराहमिहिराचार्यैः कानिचित् पद्यान्युद्ग्रथितानि । तानि चेमानि—

अप्रदीपा यथा रात्रिरनादित्यं यथा नभः ।
तथाऽसांवत्सरो राजा भ्रमत्यन्ध इवाध्वनि ॥ ८ ॥
मुहूर्त्ततिथिनक्षत्रमृतवश्चायने तथा ।
सर्वाण्येवाकुलानि स्युर्न स्यात्सांवत्सरो यदि ॥ ६ ॥
वनं समाश्रिता येऽपि निर्ममा निष्परिग्रहाः ।
अपि ते परिपृच्छन्ति ज्योतिषां गतिकोविदम् ॥ ७ ॥ इत्यादि ।

[बृहत्संहितायां सांवत्सरसूत्राध्याये]

अस्मिन् लघुनिबन्धे "चतुर्लक्षं तु ज्यौतिषम्" इत्युक्तदिशा विशालस्य ज्यौतिषस्याङ्गभूतोऽरिष्टविचारः सम्यग् विवेचयितुमसंभवः । अत एव यथाशक्यं संक्षेपेण दिग्दर्शनमात्रमत्रोपन्यस्तमस्ति । तेन तज्जिज्ञासूनां कथञ्चित् कदाचिन्मनस्तोषः संजायेतेत्याशास्य विरम्यते ॥

---

# श्रीयागेश्वरशास्त्रिणां जीवनेतिवृत्तम्

श्रीबलदेव उपाध्यायः, हिन्दूविश्वविद्यालयः, वाराणसी।

पवित्रचरित्राणां वैयाकरणकेसरिणां श्रीयागेश्वरशास्त्रिणामतिसंक्षिप्तं जीवनवृत्तमिदमत्र प्रस्तूयते। इमे महानुभावाः श्रीराजारामशास्त्रिणामन्तेवासिनस्तथा श्रीबालशास्त्रिणां सतीर्थ्या अभूवन्। १९५५ तमे वैक्रमाब्दे माघमासि सप्ततिवर्षमितमायुरवाप्य वाराणस्यामस्यां श्रीविश्वनाथसायुज्यं प्राप्ताः। साम्प्रतं कीर्तिं कामपि कमनीयां कलयति तन्निर्मिता परिभाषेन्दुशेखरस्य काचन मनोरमा व्याख्या 'हैमवती' नाम। यद्यपि नाधुना प्राकाश्यं नीता, तथापि बहुशो हस्तलेखेनापि लब्धप्रसरैषा व्याकरणरहस्यविदां विपश्चितां स्वकीयया प्रौढ्या मनोहरलेखनशैल्या पाणिनिमर्मप्रकाशनेन च ध्रुवमेव चेतांसि रञ्जयति। तस्मिन् काले श्रीतात्याशास्त्रिविरचिता 'भूतिः' नैव स्वीयां विभूतिं प्राकटयत्, न चापि काचन चित्तरञ्जिन्यन्यापि व्याख्या नागेशस्य मर्मप्रकाशिकाऽभूत्। विशुद्धप्रक्रियामुखेनास्पृष्टनव्यन्यायधोरणीयं हैमवती विविधानां विषमाणां च परिभाषाणां मनोरमं हार्दं स्वल्पेनैव शब्देन विवृण्वन्ती कामपि प्रख्यातिमभजतेति परिभाषेन्दुमर्मज्ञा विद्वांसो नूनं विदांकुर्वन्ति।

श्रीयागेश्वरशास्त्रिणो 'बलिया'-जनपदान्तर्गतरुद्रपुरनाम्नि विप्रबहुले ग्रामे स्वजनिमलभन्त। तेषां पितृचरणाः श्रीहुंकार-ओझानामधेया ब्राह्मणवृत्त्या कयापि स्वकुटुम्बस्य पोषणमुदाररीत्याऽभजन्त। तेषामात्मजचतुष्टये कनिष्ठोऽयं बालो निसर्गत एव प्रतिभासम्पन्नः स्वाध्यायशीलश्चासीत्, परन्तु दारिद्र्यपङ्कमग्नस्तज्जनकः स्वपुत्राणां संस्कृताध्ययनाय काशीमन्यद्वा किमपि विद्यास्थानं प्रेषयितुं नापारयत्। श्रीयागेश्वरस्य बालकस्यापि बुद्धिरासीन्निर्मला, धारणा चातीव प्रबला। बाल्यत एव तस्याभिरुचिः पाणिनीये शास्त्र एवाभवत्। सामान्यपण्डितानां सकाशात् प्राप्तविद्योऽयं छात्रः स्वाभिलषितपूरणायैकदा विहाय निजं गेहम्, अनापृच्छ्य स्वबन्धुवर्गम्, अनामन्त्र्य जनकं जननीं च गोरक्षपुरमण्डलवासिनं कञ्चिद् वैयाकरणं पादचारेणानेकैरहोभिः प्राप्तवान्। तत्कीर्तिरेव तस्य तत्र गमने प्रेरकतां प्रपेदे। अनाथोऽयं बालकोऽतीव काठिन्येन मार्गस्थितगृहस्थानां गृहेभ्यो भिक्षां याचमानो धूमशकटस्य तदानीमभावाद् महता क्लेशेनागतो गोरक्षपुरम्। श्रीवैयाकरणमहोदयानां कृपातः स्वल्पेन कालेन

नाल्पीयस्या तपस्यया स्वाभीष्टपूर्तिमकरोत् । समाप्य तत्रत्यं शिक्षणं मूर्धन्यवैयाकरणसमागमोत्फुल्लमना आगमद् वाराणसीम् । तस्मिन् कालेऽशेषविद्यावरिष्ठानां श्रीराजारामशास्त्रिणां व्याकरणाध्यापने आसीत् कापि कमनीया कीर्तिः । अनेके विद्वांसस्तदन्तेवासितामभजन्त । तन्मध्ये श्रौतस्मार्तविद्याचणाः श्रीबालशास्त्रिणोऽपि मूर्धन्यतामधारयन्त । श्रीयागेश्वरशास्त्रिणोऽत्रैव विद्यालये श्रीबालशास्त्रिणां सतीर्थ्या अभूवन् । अधीताशेषव्याकरणा इमे पण्डितप्रवराः स्वविनयेन स्वाभिजात्येन स्वपाण्डित्यप्रकर्षेण च स्वगुरुचरणानां नितान्तं स्वान्तमाक्रष्टुं प्राभवन् । तदानीं महाराष्ट्रियाणां विदुषामेव पण्डितसमाजे वैदुषीमूलकं संमानं महनीयं सत्कारश्च विपुल आस्ताम् । काशीमण्डलस्थानां सरयूपारीणब्राह्मणानां मध्ये श्रीयागेश्वरपण्डित एव प्रथमं वैयाकरणमूर्धन्योऽभवदिति तत्कीर्तिस्तदानीमपि विदुषां मनांस्यावर्जयत् । कुतश्चिल्लब्धवृत्तेन पित्रा गृहं नीतः स्वविवाहदीक्षां निरवर्तयत, परन्तु काश्यामेव सदैव निवसन् छात्राणामध्यापने च कालं नयन् श्रीविश्वनाथपुरीं कदाचिदपि नात्यजत् ।

श्रीयागेश्वरपण्डितस्य श्रीबालशास्त्रिभिः सह स्वाभाविकं स्नेहबन्धनमेतादृग् द्रढीय आसीद् यद् यदा ते स्वीयशिष्याणां राज्ञां राजधानीं निमन्त्रिता अगच्छन्, तदा ते सर्वदैव यागेश्वरपण्डितं स्वसंगतिभाजमकुर्वन् । प्रसिद्धेयं कथा यद् बालशास्त्रिभिः काश्यामतिविशालः श्रौतयागसमारोहो महता द्रव्येण सप्रयत्नं विहितः, यस्मिन् श्रीयागेश्वरपण्डिता एव सर्वाधिकं महनीयमाचार्यपदमलङ्कृतवन्तः । एतादृगासीत् श्रीबालशास्त्रिणां यागेश्वरपण्डितानां वैदुषीविषये विशालः पक्षपातः, ज्येष्ठभ्रातृसन्निभः सहजस्नेहश्च । उभावेव विद्वद्वरेण्यौ तदानीं वाराणस्यो मण्डनभूतावास्ताम् । श्रीयागेश्वरशास्त्रिभिर्निर्मिता परिभाषेन्दुशेखरस्य प्रमेयबहुला 'हैमवती'-व्याख्याऽपरासां व्याख्यानां ध्रुवं मूर्ध्नि तिष्ठति । जानन्त्येव व्याकरणविदो विद्वांसो यद् नव्यव्याकरणे 'परिष्कारपद्धति'-नाम्ना विश्रुता या खलु व्याख्यानपद्धतिर्वर्तते तस्यां नव्यन्यायस्य भूयान् प्रभावो जागर्ति । पदपदार्थानां संबन्धविवेचनप्रसङ्गे नव्यन्याये सर्वाङ्गशोभनीया संबन्धविवेचनरीतिरुररीकृता वर्तते । तस्या एव प्रभावादन्येष्वपि शास्त्रेषु विशेषतो वेदान्ते, व्याकरणे, साहित्यशास्त्रे च तत्तन्मर्मज्ञैर्विद्वद्भिर्नवीनं व्याख्यानकौशलमङ्गीकृत्य तत्तच्छास्त्राणां रहस्यानि समुद्घाटितानि वर्तन्ते । व्याकरणागमे तामेव नव्यां नैयायिकीं व्याख्यानपद्धतिं पुरस्कृत्य नव्या वैयाकरणाः स्वशास्त्रसिद्धान्तान् व्याचख्युः । श्रीयागेश्वरशास्त्रिणां त्वपरैव व्याख्यानरीतिः पाणिनीयपरिभाषाणाम्; अन्य एवोररीकृतो मार्गो व्याख्यानप्रकरेषु । इमामेव प्रक्रियापद्धतिरिति समुद्घोषयन्ति

विपश्चितः पाणिनीयसूत्रमूलकत्वादस्या रीतेर्नूनमियं पद्धतिर्विशुद्धवैयाकरणतत्त्वानां रहस्योद्घाटने क्षमेति शास्त्रज्ञानां विदुषामभिमतः सिद्धान्तः। हैमवतीप्रणयन इयमेव पद्धतिरादृता दृश्यते। श्रीयागेश्वरशास्त्रिणां विपुलैरान्ध्रैर्द्रविडैश्च च्छात्रैः स्वोपयोगाय विहितो हैमवत्या हस्तलेखः साम्प्रतमपि द्रविडदेशेषु भूयान् समुपलभ्यते। श्रीशास्त्रिचरणानां प्रथमे शिष्याः सर्वशास्त्रस्वतन्त्रा उभयविधमीमांसाप्रगल्भाः श्रौताचारपरायणाः श्रीवीरेश्वरशास्त्रिद्रविडा आसन्, ये बहुषु वर्षेषु जयपुरीयसंस्कृतमहाविद्यालयेऽनेकानि शास्त्राण्यध्यापयन्तः परमेण सदाचारेण स्वजीवनमनैषुः।

श्रीपण्डितवर्यस्य पवित्रमाचरणं तद्विद्वत्तानुकूलं समधिकमुन्नतमासीत्। निस्पृहताया मूर्त्तिः पाण्डित्यस्य च महनीयावतारोऽयं वेतनं विनैव प्राचीनादर्शमनुसृत्य छात्रान् व्याकरणागममध्यापयति स्म। भृतिमूलकमध्यापनं तस्मै कथमपि नारोचत। श्रीराजारामशास्त्रिणां रुग्णावस्थायां श्रीयागेश्वरपण्डितस्तत्कार्यं सम्पादयितुं संस्कृतमहाविद्यालये नियुक्तः प्राप्तां भृतिं स्वगुरुपुत्रायैव न्यवेदयत्, एकामपि काकिणीं नागृह्णात्। श्रीशास्त्रिचरणेषु स्वःप्रयातेषु विद्यालयस्याध्यक्षेण ग्रिफिथसाहबेन तद्वासस्थानमागत्य बहुशोऽध्यापनकार्याय प्रार्थितोऽपि भृतिमयमध्यापनं निराकरिष्णुस्तत्प्रार्थनास्वीकृतिविषये स्वासामर्थ्यमेव प्राकटयत्। महाविद्यालयीयाध्यापनकार्याद् मध्याह्ने प्राप्तावकाशोऽयं महानुभावः पञ्चगङ्गाघट्टे सचैलं स्नानं विधायैव निजं गेहं प्राविशत्। इयमेव तस्य रीतिः। अयमेव तस्य स्वभावोऽभवद् यद् ब्राह्ममुहूर्तादपि प्राक्तने काले त्रिवादनघटिकायां प्रत्यहं पञ्चगङ्गाघट्टे विहितगङ्गाभिषेकविधिस्तदनन्तरं च संपादिताशेषपूजार्चापद्धतिः श्रीपण्डितवर्यः सूर्योदयकालतः प्रारभ्य यावद् मध्याह्नसमयमनेकानान्ध्रद्रविडादिनानादेशीयान् छात्रान् व्याकरणागमस्य समधिकप्रौढान् ग्रन्थानपाठयत। अध्यापनाद् ऋते न तस्य किञ्चिदन्यत् कार्यं हृदयावर्जकमभवत्। निरन्तरपाठनेन चारित्र्यप्रकर्षेण च तस्य च्छात्रा अतीव प्रौढिमभजन्त सभासु शास्त्रार्थविचारणायाम्। तस्यैको द्राविडश्छात्रो विजयनगरमहाराजस्य कार्याध्यक्ष ( मैनेजर ) पदे स्वपाण्डित्यबलेन नियुक्तोऽभवत्। गुरूपकारबुद्ध्या प्रेरितोऽयं छात्रः श्रीयागेश्वरपण्डितेभ्यो बलियास्थगृहसमीप एव महतीं भूमिं दानरूपेण समर्पयितुं विजयनगराधिपतिं प्रैरयत्। उदारोऽयं महाराजः स्वीयोदार्येणोद्युक्तः श्रीपण्डितवर्येभ्यो दातुं भूमिमुत्सुकोऽभूत्। तत्कृते सर्वं कार्यं सन्नद्धमभूत्। राजाधिकरणीयाधिकारिणां समीपे गमनवेलायां लिपिबद्धप्रमाणपत्रोपरि श्रीयागेश्वशास्त्रिणां हस्ताक्षराण्येवावशिष्टानि। परन्तु श्रीशास्त्रिचरणैर्हस्ताक्षराणि नो विहितानि, राज्ञः

श्रीः

ओझोपाख्यः श्रीयुतठाकुरशर्मपण्डितः काव्यानि रघुवंशमाघनैषधप्रभृतीनि ज्योतिषे प्रश्न-मुहूर्तजातकादिसंबन्धिग्रन्थान् व्याकरणे सिद्धान्त-कौमुदीं मनोरमाशब्दरत्नपरिभाषे दुशेखरादीन् व्याख्याग्रन्थांश्च सम्यक् पठितवान् निरुक्तेष्वेषु ग्रन्थेषु वर्णनीयतमाऽस्य युक्तिर्यदेतत्पाठनादिकं साध्वयं कर्तुं प्रभवति शक्नोति चापठितानपि योज-यितुं श्रीमद्भागवतादीनि कठिनतराण्यपि पुराणा-न्यनायासेन व्याख्यातुं क्षमते सुशीलः कुलीनो बुद्धिमान् प्रामाणिकोऽयमित्येतस्मिन्सर्वस्मिन्निरूपिते विषये मम दृढो विश्वास इत्यत्यन्तसन्तोषपुरस्सरं लिखति काशीस्थसंस्कृतपाठालये धर्मशास्त्राद्यध्यापको

भाद्रपदसुदि ६ बुधे सं. १९३४ बालशास्त्री

समीपे स्वदैन्यस्य प्रकटनाय च भृशं निर्भर्त्सितः स्वीयश्छात्रः। एतावान् निर्लोभस्वभावः, निःस्पृहा च वर्तनरीतिः श्रीशास्त्रिचरणानां कस्य न स्यात् प्रशंसास्पदं साम्प्रतम्।

श्रीपण्डितवर्याणां भ्रातुष्पुत्रः श्रीठाकुरप्रसादपण्डितो व्याकरणशास्त्रस्य ज्योतिःशास्त्रस्य च प्रौढो विद्वानासीत्। श्रीबालशास्त्रिपादानामपि च नितान्तं स्नेहास्पदमभूत्। कदाचित् संस्कृतविद्यालये परीक्षावसरेऽन्यैरनुत्तरितान् प्रश्नान् साधु विविच्य ठाकुरप्रसादः स्वप्रतिभया श्रीबालशास्त्रिणमेतावच्चमत्कृतं प्रसादोल्लसितमानसं च व्यधाद् यत् स स्वहस्तेन लिखितं सिद्धान्तकौमुदीपुस्तकं तस्मै सद्य एवोपहारीकृतवान्, प्रशंसापत्रं च तस्मै दत्तवान्; यदत्रैव पाठकानां प्रह्लादाय प्रकाश्यते। श्रीबालशास्त्रिणां स्फुटानि विशदानि मौक्तिकवद् विन्यस्तानि च नागराक्षराणि विलोक्य कस्य मानसं नैव प्रमोदभरतुन्दिलं संजायेत। पण्डितानां वर्णविन्यासकौशले ये खलु शिथिलादरा वर्तन्ते छिद्रान्वेषिणः समालोचकाः, ते स्फारीकृत्य निजं विलोचनं पश्यन्त्वत्र विन्यस्तां श्रीशास्त्रिपादानां नागराक्षरसन्निवेशचातुरीम्।

श्रीयागेश्वरपण्डितस्यैकः पुत्र आसीत् श्रीदेवकृष्णपण्डितनामा। तस्य स्वर्गतस्य व्यतीतानि बहूनि वर्षाणि। साम्प्रत तस्य सन्तानद्वयी वर्तते—एकः पुत्रः, अपरा च कन्यका। पुत्रो रामनाथ-ओझानामकोऽत्रैव काश्यां निवसन् सदाचारपरायणः स्वजीवनं यापयति। श्रीयागेश्वरपण्डितस्यैकैव पौत्री पुत्रपौत्रादिभिः सनाथा, अस्य चरितलेखकस्य धर्मपत्नी वर्तते। सा तु स्वीयपितामहवदेव देवार्चनतत्परा दीनजनानुकम्पनपरायणा सत्यसन्धा च विशिष्टेन स्वचरित्रेण जनान् चमत्करोति। श्रीयागेश्वरशास्त्रिणामभिनवा 'हैमवती' वैयाकरणानां दर्शनपथं शीघ्रं समुपैस्यतीति तत्प्रकाशनाय च साम्प्रतं प्रयतनं विधास्यतेऽयं जनः। शास्त्रिपादानां संक्षिप्तं जीवनचरितमिदमस्माकं स्फूर्तये भवत्विति कामनाकलितोऽयं जनो बहुशो लेखाद् विरमति॥

— —

# विविधम्

## अष्टाध्याय्या अर्धजरतीया व्याख्या

पातञ्जलमहाभाष्यादारभ्याद्य यावद् यावत्यो व्याख्या अष्टाध्याय्या उपलभ्यन्ते, ता सर्वा [1]अर्धजरतीयदोषदुष्टाः । तथा हि—

प्रायेण सर्व एव पाणिनीया वैयाकरणाः सूत्रधातुगणोणादिस्थान् कांश्चन पाणिनिप्रयोगान् पाणिनिवचनसामर्थ्यात् साधून् मन्यन्ते, अपरांश्चानेकान् पाणिनिप्रयोगान् सौत्रत्वेन छान्दसत्वेन वापशब्दान् ब्रुवन्ति । एकस्यैवाचार्यस्य कश्चित् प्रयोगस्तत्प्रयोगसामर्थ्यात् साधुरपरो तत्प्रयोगत्वेऽप्यसाधुरित्यत्र न किञ्चिद्विनिगमकं कारणमुपलभामहे । य एव खल्वाचार्य एकत्र प्रमाणीभूतः, स एवापरत्र प्रामाण्याद् बहिष्कृत इत्यहो पाणिनीयवैयाकरणानां विडम्बना ।

विषयमिमं स्पष्टीकर्तुं वयं कानिचिदुदाहरणानि दद्महे । तद्यथा—

१–सर्वनामशब्दे "पूर्वपदात् संज्ञायामगः" [ ८।४।३ ] इति णत्वं प्राप्नोति । तद्वारणाय वार्त्तिककृता—"सर्वनामसंज्ञायां निपातनाण्णत्वाभावः" [ १।१।२७ ] इति वार्त्तिकं विरचय्य "सर्वादीनि सर्वनामानि" [ १।१।२७ ] इति पाणिनिप्रयोगसामर्थ्यात् सर्वनामपदस्य साधुत्वमुक्तम् । तदेव च भाष्यकृताऽपि स्वीकृतम् ।

२–'पतितम्' इत्यत्र "तनिपतिदरिद्राणामुपसंख्यानम्" [ ६।४।४६ ] इति वार्त्तिकेन पतेर्विभाषेट्कस्य निष्ठायां "यस्य विभाषा" [ ७।२।१५ ] इतीटोऽभावः प्राप्नोति । तदर्थमाह वृत्तिकृत्—"द्वितीया श्रितातीतपतित···" [२।१।२४] इति निपातनादिडागमः" [७।२।१५] । अर्थाद् इट्प्रतिषेधे प्राप्तेऽपि पतितेति पाणिनिप्रयोगसामर्थ्यात् साधुः ।

३–'शोभा' इत्यत्र स्त्रियां भावे क्तिनि प्राप्ते "शुभ शुम्भ शोभार्थे" [ क्षीरतर० ६।३४ ] इति धातुसूत्रे निपातनाद् अङः साधुत्वं स्वीक्रियते । तदुक्तं क्षीरस्वामिना—"अत एव निपातनाच्छोभा साधुः" [ क्षीरतर० ६।३४ ] इति ।

एतदेव वामनेनापि काव्यालङ्कार उक्तम्—"शोभेति निपातनात्" [ ५।२।४१ ] इति । तथैव च स्वयं व्याकृतमपि ।

---

१. तद्यथा— 'अर्धं जरत्याः कामयन्तेऽर्धं न" महाभाष्यम् । अत्र कैयटः—"मुखं स्वरया न कामयन्तेऽङ्गान्तरं तु कामयन्त एव" इति ।

इत्थं पाणिनिवचनसामर्थ्यात् साधुत्वेन स्वीकृतानां त्रीण्युदाहरणानि प्रदर्श्य सत्यपि पाणिनीये प्रयोगे येषामसाधुत्वं वैयाकरणैराश्रीयते तेषां कानिचिन्निदर्शनान्युच्यन्ते। तथा हि—

१–"वृद्धिरादैच्" [ १।१।१ ] इत्यत्र जकारस्य कुत्वं प्राप्नोति। तदर्थमाह महाभाष्यकारः—"कुत्वं कस्मान्न भवति 'चोः कुः', 'पदस्य' इति ? भत्वात्। कथं भसंज्ञा ? अयस्मयादीनि च्छन्दसीति। छन्दसीत्युच्यते, न चेदं छन्दः। छन्दोवत् सूत्राणि भवन्ति" इति। अस्यायमर्थः—"वृद्धिरादैच्" इत्यत्र पाणिनीयश्चकारप्रयोगोऽयुक्तः। यस्मिन् प्रयोगे छान्दसत्वात् सौत्रत्वाद्वा साधुत्वमुपपादयन्ति वैयाकरणाः, स वस्तुतोऽसाधुरेव। न स साधुप्रयोगवत् प्रयोगार्हो लोके। व्यक्तीकृतं चैतद् भट्टोजिदीक्षितेन—"सखिना, पतिना, पतौ' अत्र हरदत्तः- छन्दोवत् कवयः कुर्वन्ति। अस्यायमर्थः— असाधव एवैते त्रिशङ्क्वाद्ययाज्ययाजनादिवत्तपोमाहात्म्यशालिनां मुनीनामसाधुप्रयोगोऽपि नातीव बाधते" [ शब्दकौस्तुभे, १।४।८] इति। एतेन "वृद्धिरादैच्" इत्यत्र पाणिनिप्रयोगे सत्यपि कुत्वाभावश्चिन्त्य एव वैयाकरणानां मते। न तु पाणिनिप्रयोगसामर्थ्यात् सर्वनामपतितशोभादिवदस्य साधुत्वं स्वीकुर्वन्ति ते।

न चायं कुत्वाभावः केवलं पाणिनीय एव प्रयोगे, अपि तु वाक्यकारीये पदकारीये चापि प्रयोग उपलभ्यते। तथा हि—"अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात्। अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति। किं कारणम् ? अज्झल्त्वात्। अच्चैव हि शकारो हल् च" [ महा० १।१।१० ]। अत्र वार्त्तिके तदीये भाष्ये चासकृत् 'अच्' इत्यस्य पदसंज्ञानिमित्तकं कुत्वं न प्रयुक्तम्। पाणिनिनापि न केवलं "वृद्धिरादैच्" इत्यत्रैव कुत्वाभावः प्रयुक्तः, अपि त्वन्यत्रापि तथैव प्रयोगो दृश्यते। यथा—"नाज्झलौ" [ १।१।१० ], "अल्पाच्तरम्" [ २।२।३४ ] इत्यादौ।

वस्तुतोऽत्रापि पाणिनिप्रयोगाद् वार्त्तिककारप्रयोगाद् भाष्यकारप्रयोगाद्वाऽस्य साधुत्वं स्वीकर्तव्यमेव, अन्यथा त्रयाणामपि मुनीनां प्रयोगा असाधवः स्युः।

२–"तिर्यच्यपवर्गे" [ ३।४।६० ] इत्यत्र पतञ्जलिनोक्तम्—"अयुक्तोऽयं निर्देशः। तिरश्चीति भवितव्यम्। सौत्रो निर्देशः" इति। एवमेव—"अन्वच्यानुलोम्ये" [ ३।४।६४ ] इत्यत्र—"अयुक्तोऽयं निर्देशः। अनूचीति भवितव्यम्। सौत्रोऽयं निर्देशः" इति। अत्रापि पाणिनीयौ "तिरश्चि, अनूचि" इति प्रयोगावसाधू एवेति वैयाकरणा आतिष्ठन्ते।

३—पाणिनिना परशब्दयोगे पञ्चमीं विधाय "ऋहलोर्ण्यत्" [ ३।१।१२४ ] इत्यादिषु बहुषु सूत्रेषु षष्ठ्याः प्रयोगः कृतः। तं च षष्ठीप्रयोगमसाधु मन्यन्ते वृत्तिकाराः। तदुक्तं

वृत्तिकृता—"पञ्चम्यर्थे षष्ठी" [ ३।१।१२४ ] इति। अस्यायमर्थः—पञ्चमीप्रयोक्तव्ये सूत्रकृता या षष्ठी प्रयुक्ता न सा साध्वीति।

वस्तुतस्तु यथा—"तस्मै हितम्" [ ५।१।५ ] इति पाणिनिवचनात् साक्षादनुक्तमपि चतुर्थीविधानं [1]वैयाकरणैः साधुत्वेन स्वीक्रियते, तथा कृदधिकारेऽसकृदुच्चारितं धातोः षष्ठीविधानं कथं साधु न स्वीक्रियत इति न विद्मः। वयं तु मन्यामहे परयोगे षष्ठीविधानं सूत्रकारवचनसामर्थ्याज्ज्ञापनीयमेव। परयोगे षष्ठी चान्यत्रापि श्रूयते। तद्यथा—"एकादशिनोः परः षट्कस्तनुशिराः" [ ऋक्सर्वा० ५।५ ] इति।

४—"युवोरनाकौ" [ ७।१।१ ] इत्यत्र यदि युवुशब्दयोः समाहारस्तदा 'युवुनः' इति प्राप्नोति, यदि त्वितरेतरयोगस्तदा 'युव्वोः' इति। तस्य समाधानम्—"छान्दसो वर्णलोपोऽनित्यं वागमशासनम्" इत्येवमगतिकगतिकं विधीयते।

वस्तुतस्तु यथा सूत्रकारवचनसामर्थ्यात् "सर्वो द्वन्द्वो विभाषयैकवद्भवति" इति ज्ञाप्यते, तथैव—"युवोरनाकौ" [ ७।१।१ ], "विभाषा घ्राधेट्शाच्छासः"[2] [ २।४।७८ ] इत्यादिबहुसूत्रप्रयोगात्—"समाहारद्वन्द्वो विभाषया नपुंसकवद्भवति" इत्यपि ज्ञापनीयम्। तेन बहूनां पाणिनीयप्रयोगाणां साधुत्वमुपपद्येत।

वयं तु मन्यामहे—यथैकत्र पाणिनिप्रयोगः साधुसंमतः, तथैवान्यत्रापि पाणिनिप्रयोगसामर्थ्यादेव साधुत्वं द्रष्टव्यम्। एकस्यैवाचार्यस्यैकं वचनं प्रमाणमपरं नेति विनिगमनाभावात् तस्य सर्वप्रयोगाणां साधुत्वं वा स्यादसाधुत्वं वा, नोभयथा संभवति। उभयस्वीकरणं त्वर्धजरतीयदोषदुष्टत्वादप्रमाणमेवेत्यलमतिप्रसङ्गेन॥

---

१. "इदं 'तस्मै हितम्'" [ ५।१।५ ] इति निर्देशाज्ज्ञापकात्सिद्धमित्याहुः" [ २।३।१३ ] इति कैयटः।

२. अत्र समाहारस्य नपुंसकत्वे 'ह्रस्वो नपुंसके प्रातिपदिकस्य' [१।२।४७] इति ह्रस्वत्वे 'घ्राधेट्शाच्छासः' इत्यस्य स्थाने 'घ्राधेट्शाच्छासात्' प्रयोगः स्यात्। अत्र तु 'सोमपः' इतिवत् धातोराकारस्य लोप उक्तः।

# चयनिका

## विविधपत्रिकाभ्यः संचिता संस्कृतवाङ्मयसंबद्धा लेखसूची

व्रजवल्लभद्विवेदः, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी ।

आलोचना, व० ५, अ० ३, जुलाई १९५६

श्रीबलदेव उपाध्याय—संस्कृत नाटक : आकृति और प्रकृति ।

श्रीशिवप्रसाद सिंह—संस्कृत नाट्यशास्त्र : आरम्भ और विकास

व० ५, अ० ४, अक्टूबर १९५६

प्रो०विष्णुप्रसाद र०त्रिवेदी—रस, सौन्दर्य और आनन्द ।

इण्डियन फिलासफी एण्ड कल्चर, व० २, अ० २, जून १९५७

डॉ०सूर्यकान्त—दी एसेंस आफ वैष्णविज्म ( वैष्णवसिद्धान्तसारः ) ।

डॉ आर०नागराज शर्मा—रिलीजन एण्ड मोनोपोली आफ ट्रुथ ( धार्मिकसंप्रदायानां सत्यप्रतिपादन एकाधिपत्यम् ) ।

डॉ०महानामव्रत ब्रह्मचारी —दी गीता एण्ड दी गायत्री ( भगवद्गीता गायत्री च ) ।

डॉ०सुशीलकुमार मित्र —ए क्रिटिकल इस्टीमेट ऑफ रियलिज्म ( यथार्थवादस्य समीक्षात्मकं मूल्याङ्कनम् ) ।

इण्डियन हिस्टोरिकल क्वार्टर्ली, व० ३३, अ० १, मार्च १९५७

श्रीके०एम०वर्मा—पेरेलल वेल्यूज एण्ड आइडियल्स आफ दी इण्डियन आर्ट्स ( विभिन्नभारतीयकलानामादर्शस्तुलनात्मकं मूल्यं च ) ।

प्रो०नलिनाक्ष दत्त - तथागतगर्भ ( तथागतगर्भपदविशदीकारः ) ।

श्रीअमरेन्द्रनाथ लाहिडी—ह्वेन डिड डेमेट्रियस इन्वेड इण्डिया ( धर्ममीतेन ( डेमेट्रियस ) भारताक्रमणं कदा विहितम् ) ।

श्रीएस०एन०घोषाल—ए नोट ऑन दी ईस्टर्न एण्ड वेस्टर्न मैन्युस्क्रिप्ट्स आफ दी प्राकृत पिङ्गल ( प्राकृतपिङ्गलग्रन्थस्य पूर्वदेशीयाः पश्चिमदेशीयाश्च हस्तलेखाः ) ।

श्रीवी०जोहरपुरकर—ऑथर आफ मूलाचार ( मूलाचारस्य रचयिता ) ।

डॉ०वी०एस०अग्रवाल -- आर हिरोदक एण्ड अण्डकाष्ठ एक्चुअल वर्ड्स ( हिरोदक-अण्डकाष्ठौ किं साधुशब्दौ ) ।

इण्डो-एशियन कल्चर, व० ५, अ० ४, अप्रैल १६५७

डॉ०हेल्मथ वान ग्लेसनप—बुद्धिज्म एण्ड अदर फिलासफीज ( बौद्धमतम्, अन्यानि दर्शनानि च ) ।

डॉ०एम०जेड०सिद्दीकी—इण्डियन मैडिकल साइंस अमोंग दी एंश्येण्ट अरबूस ( प्राचीनारबीयजनेषु भारतीयायुर्वेदविज्ञानम् ) ।

श्रीस्वेतजर रेडोजविक— इण्डिया इन एंश्येण्ट यूगोस्लाव लिटरेचर एण्ड आर्ट ( प्राचीने यूगोस्लावसाहित्ये कलासु च भारतवर्षः ) ।

डॉ०जे०डब्ल्यू० दे जोंग—संस्कृत स्टडीज इन दी नीदरलैण्ड्स ( हालैण्डदेशे संस्कृताध्ययनम् ) ।

डॉ०नीहाररञ्जन राय—बुद्धिस्ट आर्ट इन इण्डिया, आफ्टर २५० ए० डी० ( २५० ई० पश्चात्कालीना भारतीया बौद्धकला) ।

इपिग्राफिया इण्डिका, व० ३०, अ० ५, जनवरी १९५४

डॉ०बहादुरचन्द छावड़ा—नोट ऑन मल्लसारुल चार्टर आफ विजयसेन ( विजयसेनस्य मल्लसारुलशासनपत्रमुद्दिश्य काचन टिप्पणी ) ।

श्रीडी०सी०सरकार—चार्टर आफ विष्णुसेन, संवत् ६४६ ( ६४६ वत्सरीयं विष्णुसेनस्य शासनपत्रम् ) ।

श्रीडी०सी०सरकार—मथुरा इमेज इंस्क्रिप्शन आफ वासुदेव ( वासुदेवनृपतिकालीनो मथुरातोऽधिगतो मूर्तिलेखः ) ।

श्रीअहमद हसन दानी—शोभारामपुर प्लेट आफ दामोदर देव, शक ११५८ ( ११५८ शकवत्सरीयं दामोदरदेवस्य शोभारामपुराधिगतं ताम्रपत्रम् ) ।

श्रीडी०सी०सरकार—टू इंस्क्रिप्शंस फ्रोम जयपुर डिस्ट्रिक्ट (जयपुरमण्डलतोऽधिगतौ द्वौ शिलालेखौ ) ।

श्रीडी०सी०सरकार—पुरी इंस्क्रिप्शंस आफ अनंगभीम-३, शक ११४७ एण्ड ११५८ (११४७ एवं ११५८ शकसंवत्सरीयाः पुरीदेवालयीयास्तृतीयानङ्गभीमस्य शिलालेखाः) ।

श्रीपी०बनर्जी—खोनमुख प्लेट्स आफ धर्मपाल आफ प्राग्ज्योतिष ( प्राग्ज्योतिषाधीशधर्मपालस्य खोनमुखग्रामेऽधिगतानि ताम्रपत्राणि ) ।

ईस्ट एण्ड वेस्ट, व० ७, अ० ४, जनवरी १९५७

श्रीजीसेप द लोरेंजो—दी निर्वाण आफ दी बुद्ध ( बुद्धप्रदर्शितं निर्वाणम् ) ।

श्रीई०फ्राउ वालनर—दी हिस्टोरिकल डेटा वो पजेस ऑन दी परसन एण्ड दी डॉक्ट्रिन आफ दी बुद्ध ( बुद्धसंबद्धा बौद्धमतसंबन्धिनी चैतिहासिकी सामग्री ) ।

श्रीएडवर्ड कोंजे—ऑन परवर्टेड व्यूज ( विपर्यासविचारः ) ।

श्रीजूलियस एवोला - स्पिरिचुअल विरिलिटी इन बुद्धिज्म ( बौद्धमत आध्यात्मिकशक्ति-विचारः ) ।

श्रीए०लामोत—खुद्दकनिकाय एण्ड क्षुद्रकपिटक ( खुद्दकनिकायः क्षुद्रकपिटकश्च ) ।

श्रीजी०कोदे—दी त्रैभूमिकथा, बुद्धिस्ट कास्मोलॉजी एण्ड ट्रीटी ऑन एथिक्स ( त्रैभूमि-कथायां बौद्धसंमता सृष्टिः कर्तव्यमीमांसा च ) ।

श्रीआन्द्रे बारो—दी नोशन आफ टाइम इन अर्ली बुद्धिज्म ( प्राचीनबौद्धमते काल-संबन्धिनी कल्पना ) ।

श्रीमेस्सिमो स्कालिगेरो—ह्वाट दी एटफोल्ड पाथ मे स्टिल मीन टू मेनकाइण्ड ( आर्य-अष्टाङ्गिकमार्गस्याधुनापि मानवानां कृतेऽर्थवत्त्वं किम् ) ।

जर्नल आफ अन्नमलाई युनिवर्सिटी, व० २०, पा० ए, सन् १९५६

श्रीशुद्धानन्द भारती - शैव सिद्धान्त ( शैवसिद्धान्तविमर्शः ) ।

वेङ्कटनाथविरचिता न्यायपरिशुद्धिः (ग्रन्थः) कृष्णताताचार्यविरचितसन्न्यायदीपिकासहिता ।

जर्नल आफ अमेरिकन ओरियण्टल सोसाइटी, व० ७७, अ० २, अप्रैल-जून १९५७

श्रीजे०ए०बी० वान ब्युतनन—स्टडीज इन सांख्य–३ ( सांख्यशास्त्राध्ययनम्-३ ) ।

श्रीलुडविक स्टर्नबच—चाणक्याज् एफोरिज्म्स इन हितोपदेश–३ ( हितोपदेश उद्धृतानि चाणक्यवाक्यानि–३ ) ।

श्रीआर०मॉर्टन स्मिथ—ऑन दी एंश्येण्ट क्रोनोलॉजी आफ इण्डिया–१ ( प्राचीनभारती-यैतिहासिकतिथिक्रममुद्दिश्य किञ्चित् ) ।

जर्नल आफ आन्ध्र हिस्टोरिकल रिसर्च सोसाइटी, व० २२, १९५२–५४

श्रीकोट्टा भवैयह चौधरी—इण्डियन एराज ( भारतीयाः संवत्सराः ) ।

श्रीएम०आर०शास्त्री—म्यूजिक ( संगीतशास्त्रम् ) ।

डॉ॰यू॰सी॰सरकार—करेक्टर एण्ड स्कोप आफ सोशल लेजिस्लेशन इन एंश्येण्ट एण्ड मिडीवल इण्डिया ( प्राचीने मध्यकालीने च भारते सामाजिकविधाननिर्माणक्षेत्रं स्वभावश्च ) ।

श्रीके॰आर॰सुब्रह्मण्यम्—बुद्धिज्म इन दी डेक्कन ( दक्षिणभारते बौद्धधर्मः ) ।

श्रीएस॰के॰दीक्षित—ए गाइड टू नागार्जुन कोण्डा ( नागार्जुनशैलपरिचयः ) ।

श्रीएम॰आर॰शास्त्री—इकोनोग्राफिक स्टडी ऑफ म्यूजिक एण्ड म्यूजिकल थेराप्युटिक्स ( संगीतस्य सांगीतिकचिकित्साशास्त्रस्य च प्रतिमालेखनविधिनाऽध्ययनम् ) ।

श्रीशूरनाड कुंजन पिल्लै—ए नोट ऑन दी न्यू एडीशन आफ दण्डिन्'स अवन्तिसुन्दरी ( दण्डिविरचिताऽवन्तिसुन्दरीकथाया नूतनसंस्करणमुद्दिश्य किञ्चित् ) ।

जर्नल आफ ओरियण्टल इंस्टीट्यूट बड़ोदा, व० ६, अ० ४, जून १९५७

डॉ॰एस॰एन॰घोषाल—दी रामायण बाई डॉ० एच० याकोबी ( डा॰एच॰याकोबीकृतं रामायणाध्ययनम् ) ।

डॉ॰वाल्टर रुबेन—वाल्मीकि एण्ड कालिदास ( वाल्मीकिः कालिदासश्च ) ।

डॉ॰एस॰एन॰व्यास · एस्चेटोलॉजी इन दी रामायण ( रामायणे श्राद्धविधिमीमांसा) ।

डॉ॰एस॰एन॰घोषाल—डॉ॰एच॰याकोबी'ज इंट्रोडक्सन टू दी सनत्कुमारचरितम् ( डॉ॰एच॰याकोबीविरचिता सनत्कुमारचरितभूमिका ) ।

जर्नल आफ तंजोर सरस्वती महल लाइब्रेरी, व ११, अ० ३, स.न् १९५७

संगीतमकरन्दं ( नृत्याध्यायः ) वेदसूरिविरचितम्—श्रीके॰वासुदेवशास्त्रिकृत-आङ्गलानुवादसहितम् ।

वैयाकरणसिद्धान्तकौमुदीव्याख्या —श्रीपी॰वी॰नागनाथशास्त्रिविरचिता ।

श्रीएन॰एस॰देवनाथाचारियर—पारिजातनाटकस्योपोद्घातः ।

जर्नल आफ त्रावणकोर युनिवर्सिटी, व० ६, अ० २, सन् १९५७

प्रज्ञालहरीस्तोत्रम्, अज्ञातकर्तृकम् ।

होराभिप्रायनिर्णयः, विवृत्युपेतः ।

गोपिकोन्मादः, अज्ञातकर्तृकः ।

अभिज्ञानशकुन्तलचर्चा ।

न्यायचन्द्रिका, केशवभट्टविरचिता ।

शाकिनीसहकारचम्पूः— गोपालकविविरचिता ।

शूरनाड कुञ्जन् पिल्लै—स्वाति तिरुनाल एण्ड हिज कोर्ट म्यूजिसियन्स ( स्वातितिरुनालस्तस्य राजसभायाः संगीतकोविदाश्च ) ।

जर्नल आफ विक्रम युनिवर्सिटी (दी विक्रम) व० १ अ० ५, मई १९५७

श्रीसूर्यनारायण व्यास—कृत-काल-गणना के कारण : एक अनुशीलन ।

डॉ० धर्मभानु—लाइब्रेरीज इन मुगल इण्डिया ( मुगलकालीने भारते ग्रन्थालयाः ) ।

फिलासफिकल क्वार्टर्ली—व० ३०, अ० १, अप्रैल १९५७

श्रीजी०आर०मलकानी—दी टेम्पोरल एण्ड दी एटर्नल ( सांसारिकं शाश्वतिकं च ) ।

डॉ०पी०एस०शास्त्री · नेचर आफ इम्प्लिकेशन ( अर्थापत्तिस्वरूपमीमांसा ) ।

ब्रह्मविद्या, व० २१, अ० १–२, मई १९५७

डॉ०आर०सी०हर्षे—वेदिक नेम्स इन असीरियन रिकोर्ड्स ( असीरियात उपलब्धेष्वभिलेखेषु वैदिकनामानि ) ।

डॉ०जार्ज टी०अर्तोल—बिदपई मैन्युस्क्रिप्ट्स फ्रोम इस्ताम्बूल एण्ड तेहरान ( बिदपईनामकस्य पञ्चतन्त्रानुवादस्य इस्ताम्बूलतस्तेहरानतश्चाधिगता हस्तलेखाः ) ।

डॉ०श्रीकृष्णशर्मा - दी वर्ड्स आकृति एण्ड जाति इन दी महाभाष्य ( पातञ्जलमहाभाष्ये आकृतिजातिशब्दौ ) ।

श्रीशिवप्रसाद भट्टाचार्य—मनोलय : दी योगवसिष्ठ वे टू आइडियल लाइफ ( मनोलयः, योगवासिष्ठस्य आदर्शजीवनयापनोपायः ) ।

परमेश्वरविरचिता गोलदीपिका ( ज्यौतिषग्रन्थः )—श्रीके०वी०शर्मणा संपादिता ।

श्रीरामचन्द्रेन्द्रयोगिकृतं तत्त्वंपदार्थैक्यशतकम् ( अद्वैतवेदान्तग्रन्थः )—श्रीवी०कृष्णमाचार्यपण्डितेन सम्पादितम् ।

भारती, व० ७, अ ९, आषाढः, संवत् २०१४

श्रीगणेशरामशर्मा—साहित्यसर्गे विस्तारः संक्षेपश्च ।

श्रीक०वे०अनन्तनारायणशास्त्री - सुपर्णानिष्क्रयः (त्र्यङ्कं नाटकम्) ।

मल्लादिश्रीसूर्यनारायणशास्त्री - श्रीकाश्मीरराजकविरत्नावलिः ।

व० ७, अ० ११ भाद्रपदः, संवत् २०१४

श्रीक०वे०अनन्तनारायणशास्त्री —सुपर्णानिष्क्रयः (त्र्यङ्कं नाटकम्) ।

**मञ्जूषा, व० ११, अ० ८, अप्रैल १९५७**

प० क्षमादेवी राव—वृत्तशंसिच्छत्रम् (सौ० लीलारावदयालुना नाटकरूपेण परिवर्तितम्)।

श्रीक्षितीशचन्द्रचट्टोपाध्यायः— सौरभं वा सौरभ्यं वा।

श्रीचारुकृष्णदर्शनाचार्यः—वेदान्तविमर्शः।

व० ११, अ० ६, मई १९५७

श्रीकुमुदरञ्जनरायभिषगाचार्यः—श्रुतिमहती कालिदासस्य सरस्वती।

श्रीशितीशचन्द्रचट्टोपाध्यायः—गुरौ राजनीवाचरति।

श्रीचारुकृष्णदर्शनाचार्यः—वेदान्तविमर्शः।

**मधुरवाणी, व० २२, अ० १, चैत्रः, संवत् २०१४**

श्रीनारायणशास्त्री काङ्करः—नराणां नापितो धूर्तः (प्रहसनम्)।

**वाक्, अ० ५, फरवरी १९५७**

श्रीजे० गोण्डा—दी यूज आफ दी पार्टिकिल च ( निपातसंज्ञकस्य चकारस्य प्रयोगः )।

श्रीलुइस रेनो—लिस्ट ऑफ रिमार्केबुल वर्ड्स फ्रोम दी काश्मीरियन् ( पिप्पलाद ) वर्शन आफ दी अथर्ववेद ( अथर्ववेदीयपिप्पलादशाखाया विशिष्टशब्दानुक्रमणी )।

श्रीलुइस रेनो—वेदिक स्टडीज : ऑन सम नोमिनल डेरिवेटिव्स इन दी ऋग्वेद ( वैदिकाध्ययनम्, ऋग्वेदीयाः कतिपये तद्धितान्तप्रयोगाः )।

श्रीलुइस रेनो—रिमार्केबुल वर्ड्स फ्रोम बाष्कल, छागलेय, आर्षेय एण्ड शौनक उपनिषद्स ( बाष्कल-छागलेय-आर्षेय-शौनकोपनिषदां विशिष्टशब्दानुक्रमणी )।

श्रीएच०जी०नरहरि—ऑन दी वर्ड्स कर्म एण्ड संस्कार ( कर्म-संस्कारशब्दावुद्दिश्य किञ्चित् )।

श्रीई०डी० कुलकर्णी—डिफीनिशंस एण्ड टेक्नीकल टर्म्स इन श्यैनिकशास्त्र आफ रुद्रदेव ( रुद्रदेवकृतश्यैनिकशास्त्रे पारिभाषिकशब्दास्तेषां निर्वचनं च )।

श्रीनीलमाधव सेन—दी वोकेबुलरी आफ दी रामायण—३ (रामायणीयः शब्दकोशः-३)।

डॉ०वी०एस०अग्रवाल—कीर्ति, कीर्तिमुख एण्ड कीर्तिस्तम्भ ( कीर्ति-कीर्तिमुख-कीर्ति-स्तम्भशब्दानुद्दिश्य किञ्चित् )।

# सम्पादकीयम्

## संस्कृतविदुषां विचारगोष्ठी

वाराणसेयराजकीयसंस्कृतमहाविद्यालये मार्गशीर्षकृष्णद्वितीयायां शनिवासरे (९-११-५७) उत्तरप्रदेशस्य शिक्षा-गृह-सूचनामन्त्रिणां माननीयश्रीकमलापतित्रिपाठिनां साभापत्ये वाराणसेयविदुषामेका विचारगोष्ठी समायोजिता। अत्र श्रीमन्तो गिरिधरशर्मचतुर्वेद-राजेश्वरशास्त्रि-सभापत्युपाध्याय-सत्यनारायणशास्त्रिकविराज-नारायणशास्त्रिखिस्ते-गोपालशास्त्रिदर्शन-केशरि-नागेशोपाध्याय-बदरीनाथशुक्ल-अनन्तशास्त्रिफडके-रामबालकशास्त्रिप्रभृतयः पञ्चविंशतिर्विद्वांसः, संयुक्तशिक्षासंचालकबलवन्तसिंहस्याल-रामरेणुलाहरी-कुबेरनाथसुकुल-नवलकिशोर-श्रीवास्तव-रामनरेशमिश्र-प्रकाशचन्द्रगौडप्रभृतयः शिक्षाधिकारिणश्च समुपस्थिता आसन्। १-संस्कृतशिक्षायाः समस्याः, २-संस्कृतशिक्षायाः प्रचारः, प्रसारः, संवर्द्धनं च, ३-वर्तमानव्यवस्थायामपेक्षितं संशोधनमिति त्रय आसंस्तत्र मुख्या विचारणीया विषयाः।

त्रयाणामप्येषां विषयाणां विशदीकाराय राजकीयसंस्कृतमहाविद्यालयस्य प्रधानाचार्येण श्रीकुबेरनाथशुक्लमहोदयेन समेषां विदुषां सविधे परिपत्रमेकं प्रेषितं सप्तपृष्ठात्मकं निमन्त्रणपत्रेण साकम्। तत्र "संस्कृतशिक्षायाः समस्याः" इति प्रथमं विषयमधिकृत्य लिखितं तैः—

संस्कृतविद्यालयेषु महाविद्यालयेषु च वेतनस्याल्पीयस्त्वात् सुयोग्या विद्वांसो नोपलभ्यन्ते, अतः कलाशालाध्यापकानामिवात्रत्याध्यापकानामपि वेतनं स्यादित्येतदर्थं शासनेन प्रयतितव्यम्। संस्कृतपाठशालानां भवननिर्माणाय, पुस्तकालयसमुन्नत्यै, अन्येषामुपकरणानां संग्रहाय च राज्यानुदानमपेक्षितम्। प्रौढपाण्डित्यस्य रक्षणाय शासनेन शलाकापरीक्षादीनां व्यवस्था विधेया, तत्रोत्तीर्णा विद्वांसोऽन्ये च विशिष्टा विपश्चितो वृत्तिप्रदानादिना सत्कार्याः। संस्कृताध्यापकानां वेतनमानस्य निर्द्धारणम्, निर्वाहनिधेः सेवासुरक्षायाश्च व्यवस्थाऽऽवश्यकी। साम्प्रतं प्राचीनराजसामन्तव्यवस्थाया उन्मूलनाद्धनिकवर्गस्य च प्रायः संस्कृतशिक्षाविमुखत्वात् संस्कृतपाठशालानां तत्रत्यच्छात्राणां चार्थिकी व्यवस्था शोचनीयां दशां प्रतिपन्ना, अतो राजकीयसाहाय्येनैषां पोषणमनुवेलमपेक्ष्यते। जिलापरिषन्नगरपालिकाप्रभृतयः स्थानीयसंस्था मठमन्दिरादीनां निधयश्चापि तामिमां दुरवस्थां परिहर्तुं क्षमन्ते। छात्रवृत्तीनां व्यवस्था संस्कृतस्नातकानां जीविकाक्षेत्रविस्तारश्च विधेय एव। जीविकाक्षेत्रविस्तारमन्तरा संस्कृतशिक्षां प्रति छात्राणामाकर्षणमतीव दुःशकमिति।

"संस्कृतशिक्षायाः प्रचारः, प्रसारः, संवर्द्धनं च" इति द्वितीयं विषयमधिकृत्य परिपत्रे तस्मिन् राजकीयसंस्कृतविद्यालयानां महाविद्यालयानां वाराणस्यां कन्याविद्यालयस्य च स्थापना, उत्तरमध्यमा-शास्त्रिपरीक्षोत्तीर्णानां छात्राणां क्रमशो बी०ए०-एल०एल०बी०परीक्षासु एम०-

ए०परीक्षासु च प्रवेशाधिकारः, अखिलभारतीयत्वाधारेण संस्कृतपरीक्षाणां मान्यतास्वीकृतिः, संस्कृतभाषायां सरलस्य सुबोधस्य च सामयिकसाहित्यस्य निर्मितिः, प्राचीनहस्तलिखितग्रन्थानां संग्रहसंरक्षणयोः संपादनप्रकाशनयोश्च व्यवस्था, समाजशास्त्रशिक्षाशास्त्रप्रभृत्याधुनिकविषयेषु संस्कृतभाषायामुत्कृष्टग्रन्थानां निर्माणम्, संस्कृतविद्यालयेषु सैनिकशिक्षा-क्रीडा-व्यायाम-संगीतहस्त-कलानां शिक्षणप्रबन्धः, संस्कृतपत्रपत्रिकादीनां प्रकाशनं चातीवावश्यकमिति साधु विवेचितम्।

"वर्तमानव्यवस्थायामपेक्षितं संशोधनम्" इति तृतीयविषयस्य विशदीकारप्रकारस्तस्मिन् परिपत्र एवं प्रादर्शि—संस्कृतविद्यालयानां प्राथमिकमाध्यमिकादिसंज्ञया वर्गीकरणं मान्यताप्रदानं च सुव्यवस्थायै परमावश्यकम्। विद्यालयेषु पञ्जीकृतसमितीनां व्यवस्था, तासामधिकारसीमा च निर्धारणीया। संस्कृताध्यापकानां सेवाकालस्थिरतायै नियमविधानं निर्णयकारिणीसमितेः संघटनं च विधेयम्। संस्कृतविद्यालयेभ्यः समर्पितनिधीनां न्यासनिधीनां च सदुपयोगाय कश्चन विधेयको राजाज्ञा वाऽपेक्षिता। संस्कृतविद्यालयेषु प्राथमिकमाध्यमिककलाशालासंचालनं प्रतिरोद्धव्यमिति।

वैदिकमङ्गलाचरणेन साकं गोष्ठीकार्यारम्भः समजायत। प्रथममागतविद्वद्भ्यः शिक्षा-धिकारिभ्यश्च स्वागतं व्याहरन्तः प्रधानाचार्यमहोदया विचारगोष्ठीपरिधिं तन्महत्त्वं संस्कृत-शिक्षायां समुपस्थितानां प्रश्नानां च स्वरूपमुपस्थापितवन्तः। तदनन्तरं तानिमान् विषयानुद्दि-श्यानेकैर्विद्वद्भिः स्वकीयानि मतान्युपन्यस्तानि। सर्वे विद्वांसः प्रधानाचार्यसमुपस्थापितान् विचारान् हार्देन हृदयेनाभ्यनुज्ञातवन्तः।

विचारगोष्ठ्यां भाषमाणैर्विद्वद्भिः संस्कृतशिक्षाप्रसाराय संस्कृतभाषाया उन्नत्यै च नैकेऽन्येऽप्युपायाः प्रस्ताविताः। तद्यथा—कलाशालानां पाठशालानां चाध्यापकानां वेतनमानं समानं स्यादित्यत्रावधातव्यम्। संस्कृतपाठशालाध्यापकानां वेतनेषु वैषम्यव्यवहार एव संस्कृत-भाषाप्रसारे प्रधानः परिपन्थी। माध्यमिकशिक्षात उच्चशिक्षापर्यन्तं कलाविभागीयपरीक्षासु संस्कृताध्ययनं तत्रोत्तीर्णता चानिवार्ये विधेये। आकाशवाणीसाहाय्येन सरलतमसंस्कृतपाठानां सरलसंस्कृतशिक्षाप्रणालीनां च प्रसारो विधेयः। संस्कृतभाषायां सुबोधसाहित्यस्य निर्माणं प्रकाशनं चावश्यकम्। भारते राष्ट्रे संस्कृतभाषायाः संमानाय, संरक्षणाय, प्रचाराय, प्रसाराय च आकर्णिकाद् आराज्यपालं सर्वेष्वेव राजकीयपदेषु संस्कृतज्ञाय रूप्यकमेकमधिकं वेतनमन्यापेक्षया दीयेत, संस्कृतस्नातकाश्च जीविकायाः सर्वेषु क्षेत्रेषु निर्बाधं प्रवेशाधिकारं लभेरन्। संस्कृत-भाषायां प्रौढपाण्डित्यस्य संरक्षणाय द्विविधा संस्कृतपाठ्यप्रणाली संचाल्येत—एका नूतन-विषयसमावेशवती, अपरा च शुद्धा। प्रथितानां संस्कृतविदुषां गृह एव शास्त्राणामध्ययना-ध्यापनयोर्व्यवस्था गुरवे छात्रेभ्यश्च राजकीयवृत्तिप्रदानपुरस्सरं विधेया। भारतीयज्यौतिषशास्त्रस्य, आयुर्वेदस्य, अन्यासां च प्राच्यविद्यानामाधुनिकेन गणितविज्ञानेन, खगोलविज्ञानेन, चिकित्सा-पद्धत्याऽन्येन पाश्चात्यज्ञानेन च साकं तुलनात्मकं समालोचनात्मकं चाध्ययनमती-वावश्यकमिति।

अधिगतविद्वदभिप्रायाः शिक्षामन्त्रिणः श्रीत्रिपाठिनः समवोचन्—"संस्कृतविश्वविद्यालयविधित्सया उत्तरप्रदेशीयं प्रशासनं संस्कृतोन्नत्यै स्वकीयमनुरागं प्रकटयति। संस्कृतोन्नतिपरिपन्थिनीनां बाधानां स्वरूपज्ञानायोत्तरप्रदेशीयानां विदुषामेकं संमेलनमायोज्येतेत्यासीन्मे मनसि। किन्तु समयसाध्यं तत्। अपि च वाराणसी समस्तोत्तरप्रदेशस्यैव न, अपि तु समस्तस्य भारतवर्षस्य सांस्कृतिकं प्रातिनिध्यं बिभर्ति। "अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्" इत्याभाणकमनुसरता मया वाराणसेयानां तत्रभवतां विदुषां विचारवीथिरनुसर्तव्येति निश्चितम्। तन्निश्चयस्याद्य मधुरेयं परिणतिर्वाराणसेयविद्वज्जनविचारश्रवणफलं परिददाति। भवदीयविचारश्रवणेन ज्ञायते त्रिविधाः साम्प्रतं संस्कृतभाषायाः समक्षं समस्या वर्तन्ते। तासु कासाञ्चित्समाधानमविलम्बमेव भवितुमर्हति। द्वितीयकोटिकाः समस्याः सामान्येन विचारविमर्शेन परिहार्याः। सन्ति काश्चन समस्याः, यासां समाधानं "सहसा विदधीत न क्रियाम्" इति भारविभारतीमनुसरद्भिरस्माभिस्त्वरायां नैव कर्तुं पार्येत। सुदूरभाविनं परिणामं चिन्तयन्तो वयं मूलोन्मूलकानि परिवर्तनानि नैव चिकीर्षामः।

संस्कृतपाठशालाध्यापकानां वेतनमानस्य निर्द्धारणं परमावश्यकम्। आगामिनि वर्षे जूनियरहाईस्कूलपर्यन्ता सार्वजनिकशिक्षा सम्पूर्णे राज्ये निःशुल्का भविष्यति। उत्तरप्रदेशवर्तिनीनां प्राथमिकसंस्कृतपाठशालानामपि संचालनं राज्यशासनेन क्रियेतेति संभावनाकोटिमवतरेत्। प्रथमं वयं प्रयागे, विन्ध्यक्षेत्रे, अयोध्यायाम्, मथुरायां वृन्दावने वा, हरिद्वारे, कुशीनगरे च राजकीयसंस्कृतमहाविद्यालयस्थापनां चिकीर्षामः। इमे महाविद्यालयाः संस्कृतस्य प्रचारप्रसारयोः संवाहकाः, अथ च भाविनः संस्कृतविश्वविद्यालयस्यापि पोषका भविष्यन्ति" इति।

शिक्षामन्त्रिणां विद्वज्जनविचारश्रवणरूप एष प्रयत्न उत्तरप्रदेशीयप्रशासनपरम्परानुरूप एव। संस्कृतपाठ्यप्रणालीपरिवर्तनाय संस्कृतपरीक्षास्वेकरूपतास्थापनाय च पूर्वमप्येवंविधाः प्रयत्ना व्यधायिषत। परिणामतो नूतना संस्कृतपाठ्यप्रणाली साम्प्रतं संचाल्यते, अत्रत्यराजकीयसंस्कृतमहाविद्यालयपरीक्षाभिरितरपरीक्षाणामेकरूप्यं समानमान्यता च शनैः शनैर्बुभूषति। तद्वत् शिक्षामन्त्रिणामेष प्रयत्नोऽपि संस्कृतशिक्षायाः शुभोदर्काय भवेत्। उत्तरप्रदेशीयसंस्कृतशिक्षापरिषदा कार्तिककृष्णनवम्यां गुरुवासरे (१७-१०-५७) स्वकीयेऽधिवेशने षट्सु तीर्थस्थानेषु राजकीयसंस्कृतमहाविद्यालयस्थापनाविषयकः प्रस्तावः स्वीकृतः। अस्यां विचारगोष्ठ्यां सर्वैर्विद्वद्भिः प्रस्ताव एष अभिनन्दितः, शिक्षामन्त्रिमहोदयेन च महाविद्यालयस्थापनामुद्दिश्यैव न, अपि त्वितरप्राथमिकसंस्कृतविद्यालया अपि राजकीयकोषेणाधिकाधिकं साहाय्यं नूनं लभेरन्निति संभावनापि प्रदर्शिता।

संभाव्यते संस्कृतस्नातकानां जीविकाक्षेत्रविस्तारः, प्रतियोगितापरीक्षाप्रशिक्षणादिषु संस्कृतपरीक्षाणां मान्यता, संस्कृतविद्यालयेभ्यो राजकीयसाहाय्यवृद्धिः, पाठशालीयाध्यापकानां वेतनमानस्थिरीकरणम्, राजकीयसंस्कृतमहाविद्यालयानां स्थापनमित्यादयो विचारगोष्ठीविषयास्तूर्णं मूर्तरूपं धारयन्तः संस्कृतसमाजसमक्षमवतीर्णाः स्युरिति॥

---

५६७८६६३६५२० | ३५
४७३३७५३४८४

६४४६१०४६८०
७८८६५८६१४०

१५५६५१५५४०
.. × ६०

६३५७०६३२४०० | ५६
७८८६५८६१४०

१४६७५०४१०००
१४२०१२६०४५२

४७३७८०५४८

---

## अथ शुक्रशीघ्रोच्चक्षेपानयनम्—

७१४४०४०२६३६४ अहर्गणः
× ७०२२३७६ यु० शु० शी० उ० भगणाः

४२८६४२४१७६३६४
५०००८२८२०५७५८ ×
२१४३२१२०८८१८२ ×
१४२८८०८०५८७८८ ×
१४२८८०८०५८७८८ ×
५०००८२८२०५७५८ × ×

यु० कु० दि० १५७७६१७८२८ | ५०१६८१३७१०३१६७२०१४४ | ३१७६३८८४४५ = गतभगणाः
४७३३७५३४८४

२८३०६०२२६३
१५७७६१७८२८

१२५२६८४४३५१
११०४५४२४७६६

१४८१४१६५५५६
१४२०१२६०४५२

६१२६३५१०७७
४७३३७५३४८४

शुक्राशुकेन्द्रस्य क्षेपो राश्यादिः

=, ६। ६ २४। ६

— ४।४४।३८ = बीजमृणम्

६। १।३६।३१

अयं क्षेपः पाठपठितसमः।

१३६५५६७५६३२
१२६२३३४२६२४
———————
१३३२६३३३०८०
१२६२३३४२६२४
———————
७०२६६०४५६१
००६३११६७१३१२
———————
७१८२३३२४६४
६३११६७१३१२
———————
८७०६६११८२४
७८८६५८६१४०
———————
८१७०२२६८४
× १२
———————
१६३४०४५३६८
८१७०२२६८४ ×
———————
६८०४२७२२०८ | ६
६४६७५०६६६८
———————
३३६७६५२४०
× ३०
———————
१०१०२६५७२०० | ६
६४६७५०६६६८
———————
६३५४५०२३२
× ६०
———————
३८१२७०१३६२० | २४
३१५५८३५६५६
———————
६५६८६५७३६०
६३११६७१३१२
———————
२५६६८६०४८
× ६०
———————
१५४१६१६२८८० | ६
१४२०१२६०४५२
———————
१२१७६०२४२८

अथ शनिक्षेपानयनम्—

७१४४०४०२६३६४
× १४६५६८

५७१५२३२२३५१५२
४२८६४२४१७६३६४ ×
३५७२०२०१४६६७० ×
४२८६४२४१७६३६४ ×
२८५७६१६११७५७६ ×
७१४४०४०२६३६४ ×

१५७७६१७८२८ | १०४७०८७६६७८०२१६७६२ | ६६३५८८२२ = गतभगणाः
६४६७५०६६६८
१००३३७००१००
६४६७५०६६६८
५६६१६३१३२२
४७३३७५३४८४
९२८१७७८३८१
७८८६५८६१४०
१३६२१८६२४१६
१२६२३३४२६२४
१२६८५४६७६५७
१२६२३३४२६२४
३६२१५५२३३६
३१५५८३५६५६
४६५७१७६८३२
३१५५८३५६५६
१५०१३४११७६
× १२
२००२६८२३५२
१५०१३४११७६ ×
१८०१६०६४११२ | ११
१५७७६१७८२८

राश्यादिशनिक्षेपः =
११|१२|३१|४४
+ ४|४४|३८ = बीजं धनम् ।
११|१७|१६|२२
आचार्योक्तक्षेपः = ११|१७|१५|३२
अयं क्षेपः पाठपठितक्षेपात् ५० विकलाभिरन्तरितः । अर्थात् ५० विकला गणितेनाधिका आयान्ति ।

अत्र बीजसंस्कारे मूलश्लोके शनेर्बीजमृणं प्रोक्तम्, परन्तु गणितोदाहरणे धनमेवाङ्गीकृतमस्ति ।

२२३६९१५८३२
१५७७९१७८२८
―――――――――
६५८९९८००४
× ३०
―――――――――
१९७६९९४०१२० | १२
१५७७९१७८२८
―――――――――
३९९०७६१८४०
३१५५८३५६५६
―――――――――
८३४९२६१८४
× ६०
―――――――――
५००९५५७१०४० | ३१
४७३३७५३४८४
―――――――――
२७५८०३६२००
१५७७९१७८२८
―――――――――
११८०११८३७२
× ६०
―――――――――
७०८०७१०२३२० | ४४
६३११६७१३१२
―――――――――
७६९०३८९२००
६३११६७१३१२
―――――――――
१३७८७१७८८८

अथ सिद्धान्तचूडामणिग्रन्थारम्भे १५५६ शके चैत्र शुक्लप्रतिपदि भृगौ सूर्योदये ब्रह्मदेवोक्तकरणप्रकाशमतेन करणप्रकाशग्रन्थारम्भतो(१०१४)ऽहर्गणः साध्यते —

शकः = १५६५
१०१४
वर्षगणः = ५५१
× १२
सौरमासाः = ६६१२
अधिमासाः = + २०३
चान्द्रमासाः = ६८१५
× ३०
चान्द्रदिवसाः = २०४४५०
क्षयदिनानि = − ३२००
२०१२५०
वारार्थं सैकोऽहर्गणः = २०१२५१

"शाकः शक्रदशोनितो रविगुणः" इत्यादिना

६६१२ × २ = १३२२४
+ ३२
१३२५६
− १४

६१६ | १३२५६ | १४
६१६
४०९६
३६९६
४३२

६५ | १३२४२ | २०३ = अ० मा०
१३०
२४२
१९५
अधिशेषम् = ४७

२०४४५०
+ ६२
२०४५१२
× २

१४०३ | ४०९०२४ | २९१
२८०६
१२८४२
१२६२७
२१५४
१४०३
७५१

२०४५१२
+ २९१
६४ | २०४८०३ | ३२०० = क्ष.दि.
१९२
१२८
१२८
क्षयशेषम् = ०३

## अथ चन्द्रोच्चसाधनम्—

"द्विधा द्युवृन्दः खयुगाब्धिभाजितः" इत्यादिना ।

अहर्गणः = २०१२५१
अह० ÷ ४४० = ४५७।२३।१६
अहर्गणः = + २०१२५१।

योगः = २०१७०८।२३।१६
योगः ÷ ६ = २२४१२। २।३५
अहर्गणः ÷ ७७८७ = + २५।५१

अंशादिचन्द्रोच्चम् = २२४१२।२८′।२६″
राश्यादिः = ७४७।२।२८।२६
= ३।२।२८।२६
क्षेपः = + १।५।४६।१६

चन्द्रोच्चम् = ४।८।१७।४२

एवं सौरार्यरीत्याऽऽचार्योक्तक्षेपः कथमपि नायातीति विद्वद्भिर्विचिन्त्यम् ।

चन्द्रोच्चम् = ४।८।१७।४२
१५ घटीचालनम् = − १।४०

चन्द्रोच्चम् = ४।८।१६।२
आचार्योक्तक्षेपः = ४।६। ३।४३

अन्तरम् = ०।०।४७′।४१″
सौरक्षेपः = ४।१०।२७।५३
करणप्रकाशानीतक्षेपः = ४। ८।१६। २

योगः = ८।१८।५३।५५
अर्धितः = ४। ६।२६।५७
आचार्यक्षेपः = ४। ६। ३।४३

अन्तरम् = २३′।१४″

## अथ करणप्रकाशमतेन चन्द्रपातक्षेपानयनम्—

"अहर्गणो नागहतो विभक्तः" इत्यादिना।

अहर्गणः = २०१२५१

| | |
|---|---|
| अह० × ८ = १६१०००८ | आचार्योक्तपातः = ६।१२। ०।३ |
| ८ × अह० ÷ १५१ = १०६६२।१८'।१६" | चक्रशुद्धः = ५।१७।५६।५७ |
| अह० ÷ ५१३४८ = + ३।५५।६ | करणोक्तपातः = ५।१७। ४।३५ |
| अंशादियोगः = १०६६६। १३।२५ | अन्तरम् = ०। ०।५५।२२ |
| राश्यादिः = ३५५।१६।१३।२५ | |
| = ७।१६।१३।२५ | |
| चक्रशुद्धः = ४।१३।४६।३५ | |
| क्षेपः = + १। ३।१७।१२ | |
| राहुः = ५।१७। ३।४७ | |
| १५ घटीचालनम् = + ४८ | |
| राहुः = ५।१७। ४।३५ | |

एवं चन्द्रपातः करणप्रकाशानीतपातेनाप्यन्तरितः। तथापि चन्द्रोच्चपातौ करणप्रकाशानीतोच्चपातासन्नौ भवतः। इत्यलं पल्लवितेन।

इति ग्रहाणां क्षेपानयनम्।

---

## अथान्यसुगमप्रकारस्य क्षेपादिसाधनम्—

आचार्येण ग्रन्थारम्भीयसौरवर्षमुखे क्षेपकाः पठिताः सन्ति [म० अ० श्लो० २१-२२]। तदनन्तरमभीष्टसौरवर्षमुखे ग्रहसाधनाय गुणहाराः प्रसाध्योक्ता वर्तन्ते। यैर्गुणैः समागणो गुणितो हारैश्च भाजितः सन्नभीष्टसौरवर्षारम्भेंऽशादिग्रह आयाति, तेषामानयनं प्रदर्श्यते—

यदि युगसौरवर्षैर्युगचन्द्रभगणा लभ्यन्ते, तदैकस्मिन् वर्षे किमिति लब्धमेकवर्षसंबन्धि-

भगणादिचन्द्रः $= \frac{५७७५३३३६ \times १}{४३२००००} = १३ + \frac{१५६३३३६}{४३२००००}$ भगणानां प्रयोजनाभावात्तच्छेषं

भांशगुणितमंशादिचन्द्रः $= \frac{१५६३३३६ \times ३६०}{४३२००००} = \frac{१५६३३३६ \times १}{१२०००} = \frac{१५६३३३६ \times १८}{१२००० \times १८} =$

$\frac{\frac{१५६३३३६ \times १८}{१२०००}}{१८} = \frac{२३६०}{१८}$ । अनेन समागणो गुणितोऽभीष्टवर्षारम्भे चन्द्रो भवतीति चन्द्रस्य गुणहारानयनमुपपन्नम् ।

अथ सौरमते भौमयुगभगणाः = २२९६८३२ । ततोऽनुपातेनैकस्मिन् वर्षेऽशादिभौमः

$= \frac{२२९६८३२ \times ३६० \times १}{४३२००००} = \frac{२२९६८३२}{१२०००} = \frac{२२९६८३२ \times ५}{१२००० \times ५} = \frac{\frac{२२९६८३२ \times ५}{१२०००}}{५}$

$= \frac{९५७}{५}$ इति भौमस्य गुणहारानयनमुपपन्नम् ।

अथ सौरमते बुधयुगभगणाः = १७९३७०६० । ततोऽनुपातेनैकस्मिन् वर्षे भगणादिबुधः

$= \frac{१७९३७०६० \times १}{४३२००००} = ४ + \frac{६५७०६०}{४३२००००}$ भगणानां प्रयोजनाभावस्तच्छेषं भांशगुणित-

मंशादिबुधः $= \frac{६५७०६० \times ३६०}{४३२००००} = \frac{६५७०६०}{१२०००} = \frac{६५७०६० \times ४}{१२००० \times ४} = \frac{\frac{६५७०६० \times ४}{१२०००}}{४}$

$= \frac{२१९}{४}$ इति बुधस्य गुणहारानयनमुपपन्नम् ।

अथ सौरमते गुरोर्युगभगणाः = ३६४२२० । ततोऽनुपातेनैकस्मिन् वर्षेऽशादिगुरुः

$= \frac{३६४२२० \times १ \times ३६०}{४३२००००} = \frac{३६४२२०}{१२०००} = \frac{१२१४}{४०}$ इति गुरुगुणहारानयनमुपपन्नम् ।

अथ शुक्रस्य युगभगणाः = ७०२२३७६ । ततोऽनुपातेनैकस्मिन् वर्षे भगणादिशुक्रः

$= \frac{७०२२३७६ \times १}{४३२००००} = १ + \frac{२७०२३७६}{४३२००००}$ । भगणशेषं भांशगुणितमंशादिशुक्रः

$= \frac{२७०२३७६ \times ३६०}{४३२००००} = \frac{२७०२३७६ \times १}{१२०००} = \frac{१३५१}{६०}$ इति शुक्रस्य ( शुक्रशीघ्रोच्चस्य ) गुण-हारानयनमुपपन्नम् । परन्तु मूलश्लोके "अर्कशराग्निभुवः" इति पाठोऽस्ति । तदनुसारिगुणकः १३५१२ गणितेन नायाति, अतः प्रत्यक्षविरुद्धो गुणकः । एतदर्थं "कुशराग्निभुवः" इति पाठान्तरं साधु ।

अथ शनियुगभगणाः = १४६५६८ । ततोऽनुपातेनैकस्मिन् वर्षेऽशादिशनिः

$= \frac{१४६५६८ \times १ \times ३६०}{४३२००००} = \frac{१४६५६८ \times १}{१२०००} = \frac{६१}{५}$ इति शनिगुणहारानयनमुपपन्नम् ।

अथ चन्द्रोच्चयुगभगणाः = ४८८२०३ ततोऽनुपातेनैकस्मिन् वर्षेऽंशादिचन्द्रोच्चम्

$= \frac{४८८२०३ \times १ \times ३६०}{४३२००००} = \frac{४८८२०३}{१२०००} = \frac{१६२७}{४०}$ इति चन्द्रोच्चगुणहारानयनमुपपन्नम् ।

अथ युगे चन्द्रपातभगणाः = २३२२३८ ततः संचारेणांशादिपातः

$= \frac{२३२२३८ \times १ \times ३६०}{४३२००००} = \frac{२३२२३८ \times १}{१२०००} = \frac{११६१}{६०}$ इति पातगुणहारानयनमुपपन्नम् ।

अथ युगेऽधिमासाः = १५९३३३६ । ततोऽनुपातेनैकस्मिन् वर्षेऽधिमासाः

$= \frac{१५९३३३६ \times १}{४३२००००}$ त्रिंशद्गुणितास्तिथयः $= \frac{१५९३३३६ \times ३०}{४३२००००} = \frac{१५९३३३६}{१४४०००}$

$= \frac{\frac{१५९३३३६ \times ३}{२०००}}{\frac{१४४००० \times ३}{२०००}} = \frac{२३९०}{२१६}$ इत्यधिमासशेषतिथिगुणहारानयनमुपपन्नम् । अत्र सर्वत्र प्रायशो गुणकाङ्काः स्वल्पान्तरतः सन्ति । अतो गुणकाङ्केषु महती स्थूलताऽस्ति ।

---

## अथ ग्रन्थारम्भीयसौरवर्षमुखे क्षेपानयनम्—

वर्षारम्भे रविः शून्यम्, तेन तस्य क्षेपाभावः । अन्येषां साध्यन्ते । तत्रादौ शुद्धिक्षेपानयनम्—

सृष्टितो ग्रन्थारम्भीयाहर्गणसाधने यदधिशेषमागतं तदिदम् = ३७२७१८०८

अधिशेषदिनादि = २१ । ३४ । ९ । ३६

आचार्योक्तमधिशेषम् = २१ । ३४ । ३३ । ३३

अन्तरम् = ० । ० । २३ । ५७

अत्र २३।५७ सावयवपलात्मकमन्तरमायाति ।

सौरशास्त्रेण शुद्धेरानयनं सिद्धान्तसार्वभौमेऽपि—

समाः स्वतिथ्यंशयुता (१५) भवन्नसमाः (११) खखाभ्राङ्गलवेन (६०००) हीनाः ।

त्रितष्टवर्गाभ्रकु (३, १०) घातयुक्ताः शुद्धिर्भवेत्सा खगुणैश्च तष्टा ॥ इति ।

[ मध्यमाधिकारे, ८० श्लो० ]

सृष्टितो वर्षगणः = १६५५८८४७४४
वर्षगणः ÷ १५ = ११०३६२३१६ । १६

योगः = २०८६२७७०६० । १६
११ × वर्षगणः ÷ ६००० = ३५८५७८८ । ४१ । ५० । २४

अन्तरम् = २०८२६६१२७१ । ३४ । ६ । ३६
त्रितष्टवर्षगणः × १० = + १० ।

योगः = २०८२६६१२८१ । ३४ । ६ । ३६
दिनानि त्रिंशद्भिस्तष्टितानि शुद्धिक्षेपः = २१ । ३५ । ६ । ३६

अयं क्षेपो गणितागतक्षेपसम एव ।

---

## अथ वर्षाधिपक्षेपसाधनम्—

"समासमाजः श्रुतिद्वद्दिनानि" इत्यादिनाऽऽचार्योक्तसूत्रेण—

सृष्टितो वर्षगणः = १६५५८८४७४४
वर्षगणः ÷ ४ = ४८८६७११८६

योगे दिवसाः = २४४४८५५६३०

$\frac{\text{वर्षगणः}}{४}$ × २ = ६७७६४२३७२ = घट्यः ।

$\frac{\text{वर्षगणः}}{४}$ × ३ = १४६६६१३५५८ = पलानि ।

दिनादिमानम् =
२४४४८५५६३० । ६७७६४२३७२ । १४६६६१३५५८
= २४६१५६२४४५ । ३१ । १८ सप्ततष्टिते वारादिक्षेपः ६ । ३१ । १८

अयं क्षेपः सर्वथाऽसंभवः, अतो मया मूलश्लोके—"नाड्योऽरिगुणा विनाड्यः" इति पाठान्तरं स्वीकृतम् । पूर्वोक्तपाठान्तरे कृते सति पञ्चसिद्धान्तिकोक्तवर्षमानादब्दपानयनं कर्तुं शक्यते । तदनुसारिवर्षपक्षेपः साध्यते ।

कलियुगारम्भेऽधिशेषावमशेषे नास्ताम् । अतः कलितो वर्षगणं स्वीकृत्याब्दपक्षेपानयने बाधा नास्ति ।

ग्रन्थारम्भकालिकसौरवर्षमुखे कलिगतवर्षगणः = ४७४४

वर्षगणः ÷ ४ = ११८६

दिनानि = ५९३०

$\frac{\text{वर्षगणः} \times २}{४}$ = २३७२ = नाड्यः । $\frac{\text{वर्षगणः} \times ६}{४}$ = ७११६ = विनाड्यः ।

दिनादिमानम् = ५९३० । २३७२ । ७११६ = ५९७१ । ३० । ३६ सप्ततष्टितेऽब्दप-क्षेपः = ० । ३० । ३६ कलियुगारम्भे शुक्रवार आसीत् । तेन सृष्टितो वर्षपक्षेपः = ५ । ३० । ३६ ।

प्रकारान्तरेणाब्दपक्षेपानयनम्—

सौरमत एकस्मिन् वर्षे क्षयदिनादि = $\frac{२५०८२२५२}{४३२००००}$ = ५ । ४८ । २१ । ५२ । ३६

कलितो गताब्दाः = ४७४४ ।

(४७४४) (५ । ४८ । २१ । ५२ । ३६) = २७५४४ । १ । ४२ । ५४ । २४ = गत-वर्षसंबन्धिक्षयदिनादि ।

वर्षगणः × १२ = ५६९२८ = इष्टसौरमासाः

| | |
|---|---|
| इष्टाधिमासादि = | १७४९ । २१ । ३४ । ९ । ३६ |
| इष्टचान्द्रमासादि = | ५८६७७ । २१ । ३४ । ९ । ३६ |
| इष्टचान्द्रदिनादि = | १७६०३३१ । ३४ । ९ । ३६ |
| इष्टक्षयादि = | २७५४४ । १ । ४२ । ५४ । २४ |
| सौरवर्षमुखे सावनदिनादि = | १७३२७८७ । ३२ । २६ । ४१ । ३६ |
| सप्ततष्टिते वारादिक्षेपः = | ० । ३२ । २६ । ४१ । ३६ |

अथ सौरशास्त्रेणाब्दपानयनं सिद्धान्तसार्वभौमेऽपि—

अब्दाः सपादा दिवसाः, समार्धं नाड्यः, समाः स्वार्धयुताः पलानि ।

अधस्तु तान्यब्ददशांशहीनान्येवं समेशो भगतोऽगतः ॥

[ मध्यमाधिकारे, ७९ श्लो० ]

एतदनुसारि वर्षपतिक्षेपसाधनम्—

कलिगताब्दाः = ४७४४

वर्षगणः + $\frac{\text{वर्षगणः}}{४}$ = ५९३० = दिवसाः ।

$\frac{\text{वर्षगणः}}{२}$ = २३७२ = नाड्यः ।

$$\text{वर्षगणः} + \frac{\text{वर्षगणः}}{२} = ७१२६ = \text{पलानि}$$

$$\frac{३\ \text{वर्षगणः}}{२} - \frac{\text{वर्षगणः}}{१०} = ६६४२ = \text{विपलानि}$$

सर्वेषां योगः = ५५६७१ । ३२ । २६ । ४२

सप्ततष्टिते कलितो वर्षपक्षेपः = ० । ३२ । २६ । ४२

तथा च शिष्यधीवृद्धिदे—

गताः समा नन्दकृतेन्दु(१४९)ताडिता रसाद्रिबाणै(५७६)र्विहृता दिनादिकम् ।
फलं युतास्तेन समाः समाधिपः सप्तावशेषे भृगुनन्दनाद् भवेत् ॥

[ मध्यमाधिकारे, ३१ श्लो० ]

अनया रीत्या वर्षपक्षेपसाधनम्—

वर्षगणः = ४७४४

$$\frac{\text{वर्षगणः} \times १४९}{५७६} = १२२७ । १० । ५०$$

योगः = ५९७१ । १० । ५०

सप्ततष्टिते कलितोऽब्दपक्षेपः = ० । १० । ५०

एवमनेकप्रकारेण साधितोऽब्दपक्षेपः कथञ्चिदप्याचार्योक्तक्षेपसमो न भवति । अत आचार्योक्ताब्दपक्षेपसाधनमसङ्गतमिवाभाति ।

———

## अथ ग्रन्थारम्भीयसौरवर्षमुखे क्षेपसाधनम्—

गणितसौकर्यार्थमेकादिगुणिताः

| सृष्टितो गताब्दाः— | | एकादिगुणितयुगसौराब्दाः— | |
|---|---|---|---|
| १९५५८८४७४४ | १ | ४३२०००० | १ |
| ३९१११७६९४८८ | २ | ८६४०००० | २ |
| ५८६७६५४२३२ | ३ | १२९६०००० | ३ |
| ७८२३५३८९७६ | ४ | १७२८०००० | ४ |
| ९७७९४२३७२० | ५ | २१६००००० | ५ |
| ११७३५३०८४६४ | ६ | २५९२०००० | ६ |
| १३६९११९३२०८ | ७ | ३०२४०००० | ७ |
| १५६४७०७७९५२ | ८ | ३४५६०००० | ८ |
| १७६०२९६२६९६ | ९ | ३८८८०००० | ९ |

## अथ सौरवर्षमुखे चन्द्रक्षेपानयनम्—

सृष्टितो गताब्दाः = १९५५८८४७४४

युगचन्द्रभगणाः = × ५७७५३३३६

११७३५३०८४६४

५८६७६५४२३२ ×

५८६७६५४२३२ ×

५८६७६५४२३२ ×

९७७९४२३७२० ×

१३६९११९३२०८ ×

१३६९११९३२०८ ×

९७७९४२३७२० ×

४३२०००० = युगसौरवर्षाणि ) ११२९५८८६८७९७५०५९८४ ( २६१४७८८६२९५ = गतभगणाः

८६४००००

२६५५८८६८

२५९२००००

६३८८६८७
४३२००००
———
२०६८६८७६
१७२८००००
———
३४०६८७६७
३०२४००००
———
..३८२८७६७५
३४५६००००
———
३७२७६७५०
३४५६००००
———
२७१६७५०५
२५६२००००
———
१२७७५०५६
८६४००००
———
४१३५०५६८
३८८८००००
———
२४७०५६८४
२१६०००००
———
३१०५६८४
× १२
———
६२११६६८
३१०५६८४ ×
———
३७२७१८०८ | ८
३४५६००००
———
२७११८०८
× ३०
———
८१३५४२४० | १८
४३२००००
———
३८१५४२४०
३४५६००००
———

गणितागतचन्द्रक्षेपः = ८।१८।४६।५५

आचार्योक्तचन्द्रक्षेपः = ८।१८।४६।४७

अत्रा'टविकलान्तरमायाति ।

३५६४२४०
×६०

२१५६५४४०० | ४६
१७२८००००

४२८५४४००
३८८८००००

३९७४४००
×६०

२३८४६४००० | ५५
२१६००००००

२२४६४०००
२१६००००००

८६४०००

---

अथ सौरवर्षमुखे भौमक्षेपानयनम्—

सृष्टितो गतवर्षाणि = १९५५८८४७४४
युगभौमभगणाः = ×२२९६८३२

३९११७६९४८८
५८६७६५४२३२ ×
१५६४७०७७९५२ ×
११७३५३०८४६४ ×
१७६०२९६२६९६ ×
३९११७६९४८८ ×
३९११७६९४८८ ×

४३२०००० | ४४९२३३८६६८३३१००८ | १०३९८९३२१०
= युगरविभगणाः | ४३२०००० | = गतभगणाः

१७२३३=६६
१२९६००००

```
  ४२७३८६६८
  ३८८८००००
  ————————
  ३८५८६६८३
  ३४५६००००
  ————————
  ४०२६६८३३
  ३८८८००००
  ————————
  १३८६८३३१
  १२९६००००
  ————————
   ९०८३३१०
   ८६४००००
  ————————
   ४४३३१००
   ४३२००००
  ————————
   ११३१००८
       ×१२
  ————————
  १३५७२०९६ | ३
  १२९६००००
  ————————
    ६१२०९६
       ×३०
  ————————
  १८३६२८८० | ४
  १७२८००००
  ————————
   १०८२८८०
       ×६०
  ————————
  ६४९७२८०० | १५
   ४३२००००
  ————————
  २१७७२८००
  २१६०००००
  ————————
    १७२८००
       ×६०
  ————————
  १०३६८००० | २
   ८६४००००
  ————————
   १७२८०००
```

राश्यादिभौमक्षेपः = ३।४।१५।२

अयमाचार्योक्तक्षेपसमः। केवलमेकविकलान्तरमापतति।

लघुग्रन्थरत्नप्रभावलिः–७

# भारोत्थापनयन्त्रनिर्माणविधिः

देवीसिंहमहीपतिविरचितः

व्रजवल्लभद्विवेदेन दर्शनाचार्येण
परिष्कृत्य संपादितः

डॉ० वासुदेवशरण-अग्रवालमहोदयानां
प्राक्कथनेन संवलितः

सारस्वती सुषमा
भाद्रपदः, संवत् २०१४

# विषयानुक्रमणिका

# प्राक्कथनम्

भारोत्थापनयन्त्रनिर्माणविधिनामाऽयं ग्रन्थो बीकानेरनगरस्य 'अनूप संस्कृत लाइब्रेरी'-संज्ञके राजकीये ग्रन्थालये संरक्षितो विद्यते। .१९४९ ई० वत्सरे राजस्थानस्य यात्रायां स्वकीयायामस्य ग्रन्थस्य हस्तलेखं तत्राहमपश्यम्। तत्रास्य हस्तलेखस्य संख्या ३८४६ अङ्किता वर्तते। अस्य ग्रन्थस्य प्रकाशनमहमिच्छामीति तस्य ग्रन्थालयस्य तत्कालीनमध्यक्षं श्रीमाधव-कृष्णशर्म-एम०ए०-एम०लिट्०महोदयं स्वाभिप्रायं व्यज्ञपयम्। एष महानुभावोऽस्य ग्रन्थस्य स्वच्छां ,प्रतिलिपिं विरचय्य मन्निकटं प्रेष्य च मां भृशमनुगृहीतवान्। तत्र हस्त-लेखे यन्त्राणां रेखाचित्राण्यप्युट्टङ्कितान्यासन्, तेषां प्रतिलिपिरपि प्रेषिता तेन महानुभावेन। अस्य ग्रन्थस्य चर्चा मया "सारस्वती सुषमा"-सहसंपादकस्य श्रीव्रजवल्लभद्विवेदस्य समक्षं विहिता। ग्रन्थस्य प्रतिलिपिममूमवलोक्य तेनास्य प्रकाशनेच्छा व्यक्तीकृता सारस्वत्यां सुषमायाम्। तदनन्तरं तेन मुद्रणार्थं स्वयं प्रतिलिपिरस्य कृता, तत्राङ्कितानां रेखाचित्राणां प्रतिलिपिश्च शोभना कारिता चित्रकारेण।

अस्य ग्रन्थस्य रचयिता कश्चिद् देवीसिंहनामा नृपतिर्विद्यत इति ग्रन्थारम्भीयश्लोकतोऽ-वगम्यते। एष ग्रन्थः पारसीकभाषातो विचित्य सामग्रीं संस्कृतभाषायां निबद्धः। अत एवात्र मह्रूवर-महल्ल-बुगरा-लूलब-अस्फीना-शिकञ्जाप्रभृतय आरव्यभाषाया: पारिभाषिकाः शब्दा अवलोक्यन्ते। ग्रन्थकारस्तेषामदत्त्वा संस्कृतपर्यायान् तांस्तथैवात्र गृहीतवान्। लोके भारोत्था-पकाः श्रमजीविनः पारिभाषिकशब्दानेतान् वाग्व्यवहारेषु प्रायुञ्जत, अद्यापि च केषाञ्चिद् व्यवहारो भवति तेषु।

भारते वर्षे भारोत्थापनविधयोऽतिप्राचीनकालतः प्रचलिता आसन्। अशोकेन सम्राजा शतशतवितस्तिपरिमाणवन्त एकेनैव पाषाणखण्डेन निर्मिता विशालाः स्तम्भाः सुदूरस्थानेषु प्रेषिताः। अनेन ज्ञायते तदानीमवश्यं तेषामुत्थापनस्य विशिष्टाभिः पद्धतिभिर्जनाः परिचिता आसन्निति। अनुमीयते यदशोकप्राग्भवस्य चन्द्रगुप्त-मौर्यस्यान्येषां भूपतीनां च शासनकाले दुर्गनिर्माणपद्धत्या सह भारोत्थापनयुक्ती-नामाविष्कारोऽपि संजात आसीत्। पाणिनिना—"बन्धे च विभाषा" [६।३।१३], "संज्ञायाम्" [३।४।४२], "अधिकरणे बन्धः" [३।४।४१], "नेन्सिद्धबध्नातिषु च" [६।३।१९] "सप्तमी

सिद्धशुष्कपक्वबन्धेष्वकालात्" [६।२।३२] इत्यादिषु सूत्रेषु प्राचीनाः केचन बन्धा उल्लिखिताः। काशिकायां क्रौञ्चबन्ध-मयूरिकाबन्ध-चक्रबन्ध-अट्टलिकाबन्धप्रभृतीनां बन्धानां नामान्युपलभ्यन्ते ( बन्धविशेषाणां नामधेयानि—३।४।४१-४२ )। साम्प्रतमेषामधिकं विवरणं नोपलभ्यते। पुरा भारोत्थापनविधिनिर्देशका ग्रन्था अपि भवेयुर्नूनम्। विक्रमस्य दशमशताब्द्यां निर्मितेषु खजुराहोदेवालयशिलापट्टेषु दृश्यान्यनेकान्युत्कीर्णानि विद्यन्ते, यत्र भारोत्थापका बहुभारवन्ति शिलाखण्डान्युत्थाप्य प्रचलन्तोऽवालोक्यन्ते। चक्रबन्धस्य युक्तिः प्रायः सैव परिदृश्यते, या ह्यत्र ग्रन्थे बुगराप्रकरण उक्ता, यां चाधुनिका अभियन्तारः ( इंजीनियर्स ) 'पुलीब्लाक' इति पदेन व्यवहरन्ति, लोके च सैव 'बाला कुप्पी' इति पदेन परिचीयते। आगामिनि कालेऽस्य ग्रन्थस्य टीकाटिप्पण्यादिकमध्ययनं चावश्यकम्। तदैव महूवरलूलबप्रभृतीनामारव्यशब्दानां वास्तविकस्वरूपस्य परिज्ञानमपि क्रियेत। साम्प्रतं तु भारोत्थापनयुक्तिप्रतिपादकः प्रथम एष संस्कृतभाषामयो ग्रन्थो मूलमात्रं पुरातत्त्वानुरागिणां पुरतः समुपस्थाप्यते सारस्वत्या सुषमया।

प्रसङ्गेऽस्मिन् श्रीमाधवकृष्णशर्माणः सप्रमोदमभिनन्द्यन्ते। तैरेव हि ग्रन्थस्यास्य प्रतिलिपिः सुलभीकृता। सारस्वत्याः सुषमायाः प्रधानसम्पादका राजकीयसंस्कृतमहाविद्यालयस्य प्रधानाचार्याः श्रीकुवेरनाथशुक्लमहोदया ग्रन्थस्यास्य प्रकाशने सर्वविधसौविध्यप्रदानेन, व्याकरणप्राध्यापकाः श्रीरघुनाथशर्माणश्च विषमस्थलपाठसंशोधनेनातीवोपकृतवन्त इति तौ प्रति हार्दीं कृतज्ञतां प्रकटयामः। चित्रकारः श्रीरामकृष्णपण्ड्यामहोदयश्च साधुवादैः सभाज्यते, येन प्रतिलिपिगतास्त्रुटीः संमार्ज्य यन्त्राणां ग्रन्थकारसंमतं रूपमुपस्थापितम्। श्रीव्रजवल्लभद्विवेदो विशेपतः साधुवादमर्हति। तस्यैवाध्यवसायेन मनोयोगेन चैष ग्रन्थः प्रकाश्यते।

हिन्दूविश्वविद्यालयः
वाराणसी

**वासुदेवशरणोऽग्रवालः**

# भारोत्थापनयन्त्रनिर्माणविधिः

## देवीसिंहमहीपतिविरचितः

प्रणम्य परमेशानं देवीसिंहमहीपतिः ।
विधत्ते भारवद्वस्तुचालने सुकरां कृतिम् ॥ १ ॥
कूपादौ पतितस्योर्ध्वमाकर्षादौ सुधी[र् ]नरः ।
अभेद्यभेदने चाथोऽनुत्तोलस्य च तोलने ॥ २ ॥
स्तोककेन बलेनापि शक्नुयात् साधितुं यथा ।
रच्यतेऽत्र तथा युक्तिर्यवनैः परिभाषिता ॥ ३ ॥
तद्भाषातः समुद्धृत्य संस्कृतेन विधाय च ।
क्रियते सिंहभूपेन युक्तिरेषा जगद्धिता ॥ ४ ॥
षड्विधं साधनं तत्र तेषां योगचतुष्टयम् ।
गुरुतः शास्त्रतो बु[ द् ]ध्वा ततः सम्यङ् नियोजयेत् ॥ ५ ॥
मह्वरो महल्लश्च बुगरा लूलबस्तथा ।
अस्फीनश्च[ना च] शिकञ्जा च क्रिया चैषां पृथक् पृथक् ॥ ६ ॥
मिलितानामपि तथा यथायोगं विविच्यते ।
मह्वरो वृत्तचक्रं प्रान्ते कीलैः सुसंयुतम् ॥ ७ ॥
महल्लो दीर्घकाष्ठादि[ र् ]बुगरा भ्रमिचक्रकम् ।
लूलबो वर्त्तुलं काष्ठं कृताङ्कं तु परिभ्रमत् ॥ ८ ॥
वल्लीवेष्टनतो वृक्षे यथाङ्कास्तादृगाकृति[:] ।

अथ केन प्रकारेण कियान् भार उत्तिष्ठति तदाह—

मह्वरस्य परिधेर्यावतांशेन तद्बिले ॥ ९ ॥
दण्डः प्रविष्टस्तत्संख्यं भारमेकांशयत्नतः ।
समुद्धरेन्नरो धीमान् विज्ञाय गुरुवक्त्रतः ॥ १० ॥

बुगराणां प्रकारेण भारं षष्ट्यधिकं शतम् ।
एकांशस्य प्रयत्नेन तोलयेत्तु विचक्षणः ॥ ११ ॥
लूलवस्य प्रकारेण भारं दशमणात्मकम् ।
मणस्य यत्नतो र्ध मानुद्धरेत सुधी[ र् ]नरः ॥ १२ ॥
मह्लवरद्वययोगे भारं मणसहस्रकम् ।
मणस्योद्धारयत्नेन प्रोद्धरेत्तु सुबुद्धिमान् ॥ १३ ॥
बुगराणां तु दशकं संयोज्य प्रयतो नरः ।
भार[रं] सहस्रसंख्याकं द्विशतांशेन चोद्धरेत् ॥ १४ ॥
बेरमत्रययोगे तु भारं दशसहस्रकम् ।
सहस्रांशप्रयत्नेन तोलयेन्मतिमान्नरः ॥ १५ ॥
मह्लवरद्वयं चैव बेरमेण तु संयुतम् ।
भारं दशसहस्रांशमंशैः पञ्चभिरुद्धरेत् ॥ १६ ॥
मह्लवरत्रयं चैव लूलबेन तु संयुतम् ।
भारं चायुतसंख्याकमंशद्वितययत्नतः ॥ १७ ॥
उद्धरेत सुधीर्बुद्ध्वा गुरुशास्त्रानुसारतः ।
मह्लवरं लूलवं च बुगरां बेरमं तथा ॥ १८ ॥
संयोज्यायुतसंख्याकं भारमेकांशयत्नतः ।
समुद्धरेन्नरो धीमान् शिक्षितो यो गुरोर्मुखात् ॥ १९ ॥

अथ मह्लवरेण नीचस्थभारवद्वस्तुन ऊर्ध्वाकर्षणप्रकारः—

सरलं सुदृढं स्तम्भद्वयं भूमौ निखातयेत् ।
वस्तुपार्श्वे चोभयतः स्वाभीष्टस्थानसंमितम् ॥ २० ॥
स्तम्भयोश्च बिलं कार्यं समस्तून्न[सूत्रं] तयोद्व[र्द्ध]योः ।
तिर्यग्दण्डं तत्र दद्यात् सूत्रमाग्रं भागयोर्द्धयोः ॥ २१ ॥
सुदृढं भारसहनं तस्य चैकत्र भागके ।
चतुर्द्वारे न्यसेच्चक्रं चतुर्द्वारबिलान्वितम् ॥ २२ ॥
चक्रनेमौ करग्राह्यान् कीलान् दद्यान्निजेच्छया ।
चक्रस्य केन्द्रस्थानात्तु यावत् प्रातं[प्रान्तं] तु मानयेत् ॥ २३ ।










भारोत्थापनयन्त्राणि

यावतांशेन दण्डस्तु प्रविशेच्चक्रकेन्द्रकम् ।
तावद्गुणमितं भारमेकांशेन समुद्धरेत् ॥ २४ ॥
दण्डस्यापरभागे च दृढा[ढां] रज्जुं विबन्धयेत् ।
तस्याश्चापरभागेन भारवद्वस्तु बन्धयेत् ॥ २५ ॥
ततश्चक्रभ्रामणेन दण्डस्तु परिवर्तते ।
दण्डं यथा यथा रज्जुर्वेष्टते तु तथा तथा ॥ २६ ॥
ऊर्ध्वमायाति हि गुरु वस्तु स्वल्पप्रयत्नतः ।
मह्नवरस्य सर्वत्र युक्तिरेषैव कीर्त्तिता ॥ २७ ॥

अथ महल्लप्रकारः—

लम्बायमानं सरलं सुदृढं काष्ठदण्डकम् ।
आयसं वा समानीय वस्तुभारानुसारतः ॥ २८ ॥
अंशान् दण्डे कल्पयित्वा तत्राधारं निवेशयेत् ।
यत्संख्ये स्थित आधारस्तावत्संख्यबलेन च ॥ २९ ॥
सर्वमुत्तिष्ठते वस्तु क्रियया चैतया स्फुटम् ।
महल्लस्य प्रकारोऽयं सर्वत्र परिकीर्त्तितः ॥ ३० ॥

अथ बुगराप्रकारः—

स्तम्भद्वयं तु सुदृढं स्वाभीष्टस्थलसंमितम् ।
निखातव्यं तयोर्मूर्द्धि तिर्यक्काष्ठं तु दापयेत् ॥ ३१ ॥
काष्ठमध्ये निखातव्यं चक्रद्वयमधोमुखम् ।
निम्ननेमि स्वविस्तारात् त्रिगुणव्याससंयुजा ॥ ३२ ॥
कीलेनाग्रे द्विवक्त्रेण चक्रात् त्रिगुणितेन वै ।
कीलान्तरेण विधृतं विभ्रमत् सुदृढं धिया ॥ ३३ ॥
अथापरं स्तम्भमूले तिर्यक्काष्ठं निधापयेत् ।
पूर्वोक्तचक्रसदृशं चक्रद्वितयकं पुनः ॥ ३४ ॥
ऊर्ध्ववक्त्रं निदध्यात्तु तत्काष्ठे भारमासजेत् ।
दृढां रज्जुं समानीय तदे[दे]कं पल्लवं ततः ॥ ३५ ॥

स्तम्भस्य कस्यचिन्मूर्ध्नि बन्धयी[ये]त विचक्षणः ।
अपरं पल्लवं तस्या अधश्चक्रतलेन च ॥ ३६ ॥
निष्कास्योपरिचक्रस्य कर्षयेदूर्ध्वभागतः ।
पुनश्चाधस्थचक्रस्य तलभागेन कर्षयेत् ॥ ३७ ॥
पुनश्चोर्ध्वस्थचक्रस्य कर्षयेदूर्ध्वभागतः ।
तमेव पल्लवं कश्चिदपरं स्तम्भमूलगः ॥ ३८ ॥
शनैः शनैः कर्षयी[ये]त वस्तूर्ध्वमुपगच्छति ।

अथ शिकञ्जाप्रकारः—

स्तम्भद्वयं दृढं भूमौ निखातव्यं तयोः पुनः ॥ ३९ ॥
शिरस्येकं तिरश्चीनं काष्ठं दद्यात् सुविस्तृतम् ।
मूलेऽपि स्तम्भयोर्दद्यादाधारार्थं शिलादिकम् ॥ ४० ॥
शिकञ्जां तत्र कुर्वीत सूक्ष्माग्रां सूक्ष्ममूलिका[काम्] ।
निम्नैर्गभीरैस्तिर्यग्भिरा[र]ङ्कैश्च परितो युताम् ॥ ४१ ॥
शिरस्तम्भ[म्भं] शिर[:]काष्ठं भित्त्वा यायात्तदीयकम् ।
तत्रापि कीलकं तिर्यग् भ्रामणार्थं निधापयेत् ॥ ४२ ॥
चतुरस्रं ततश्चैकं काष्ठं मध्ये तु छिद्रितम् ।
छिद्रस्यान्तरभागे तु कृताङ्कां[ङ्का] शिकजा[ञ्जा] यथा ॥ ४३ ॥
तन्मध्ये शिकजां[ञ्जां] क्षिप्त्वा तत आधारके न्यसेत् ।
चतुष्ककाष्ठकोणात्तु स्तम्भमस्तककोणगम् ॥ ४४ ॥
तिर्यक्काष्ठं प्रदद्या[द्या]त्तु काष्ठकोणे तु कीलयेत् ।
स्तम्भकोणे बिलं कृत्वा तेन मार्गेण काष्ठकम् ॥ ४५ ॥
ऊर्ध्वं यथा विनिर्गच्छेत् तथा कार्यं धिया स्वया ।
तस्मिन् काष्ठे मध्यभागे रज्जुमाबन्धये[द्] दृढाम् ॥ ४६ ॥
तथा भारं समाब[द्]ध्य शिकञ्जां परिवर्तयेत् ।
तस्य भ्रमेण तत्प्रोतं काष्ठमूर्ध्वं व्रजेद्यथा ॥ ४७ ॥
तथा गुरुतरं वस्तु प्रयात्यूर्ध्वं सुखेन वै ।



महूवरद्वयम्



महूवरमहल्लयोगः

अस्फीना



महूवरलूलबयोगः



लूलबमहूवरबुगरामहल्लानां योगः

भारोत्थापनयन्त्राणि

अथ मल्लवरद्वययोगेन गुरुवस्तूत्थापनप्रकारः—

मल्लवरद्वययोगे गुरुवस्तुसमुच्चयः ॥ ४८ ॥
प्रोच्यते विनियोगोऽस्य गुरोर्बु[द्]ध्वा विधीयताम् ।
दृढं स्तम्भद्वयं भूमौ स्वाभीष्टायां निखाद[त]येत् ॥ ४९ ॥
काष्ठमेकं तयोर्मूर्द्धिन्न दत्त्वा द्वाराकृतिं चरेत् ।
त्रीणि त्रीणि तु छिद्राणि स्तम्भयोः समसूत्रतः ॥ ५० ॥

पारावाराणि कुर्वीत तेषु दण्डान्निधापयेत् ।
सूक्ष्माग्रान् सरलान् गोलान् भ्रमतो भारसाहनान् ॥ ५१ ॥
अधोदण्डस्य च शिखां स्तम्भवाह्यविनिर्गताम् ।
रचयेत्तत्र कीलं तु दद्यात् कर्तनयन्त्रवत् ॥ ५२ ॥

दण्डस्यापरभागे तु चक्रं च चतुरस्रकम् ।
ककुभद्रुफलाकारनेमिभागं निवेशयेत् ॥ ५३ ॥
ततस्तदूर्ध्वदड[ण्ड]स्य तस्मिन् भागे सुवर्त्तुलम् ।
ककुभद्रुफलाकारप्रातं[प्रान्तं] सुदृढमर्पयेत् ॥ ५४ ॥

पूर्वोक्तचतुरस्रस्य वर्त्तुलस्यास्य वै मिथः ।
यथा संघटिता आरा[स्]तथा युक्तिर्विधीयताम् ॥ ५५ ॥
ततो मध्यस्थदण्डस्यापरभागे चतुष्किकाम्
पूर्वोक्तलक्षणां न्यस्य तदूर्ध्वे दण्डके पुनः ॥ ५६ ॥
पूर्ववद्वर्त्तुलां[लं] चक्रं विन्यसेत् पूर्ववत्तथा ।
तस्यैवापरभागे तु बध्नीयाद्रज्जुमुत्तमाम् ॥ ५७ ॥
तस्या अपरभागेन बध्नीय[या]द्वस्तु भारवत् ।
ततश्चाधस्थदण्डस्य शिखायां विनिवेशितम् ॥ ५८ ॥
कीलं कश्चिद् भ्रामयी[ये]त तेन भ्राम्येच्चतुष्किका ।
तया तु भ्राम्यते चक्रं वर्त्तुलं स्वाग्रसंयुतम् ॥ ५९ ॥
तेनापि स्वाश्रयगता भ्राम्यते तु चतुष्किका ।
तया तदूर्ध्वगं चक्रं वर्त्तुलं परिवर्त्यते ॥ ६० ॥

तेन तु स्वाश्रयो दण्डो भ्राम्यते तत्र रज्जुका ।
यथा यथा वेष्टयते वस्तूत्तिष्ठेत्तथा तथा ॥ ६१ ॥
सर्वं गुरुमुखाद् बु[द्]ध्वा प्रयोगं रचयेत् सुधी[ः] ।

अथ महल्लेन महल्लयोर्बुगराभिर्बुगराणां योगमाह—

महल्लेन महल्लं च तेनाप्यन्यमहल्लकम् ॥ ६२ ॥
संयोज्य भारवद्वस्तु तोलयेदल्पयत्नतः ।
बुगराणामनेकेषां संयोगेन परिस्फुटम् ॥ ६३ ॥
गुरुवस्तूत्थापनं तु विद्वद्भिः समुदाहृतम् ।

अथ मह्रूवरमहल्लयोगप्रकारः—

मह्रूवरमहल्लाभ्यां योगेन सुकरा क्रिया ।
भारवद्वस्तुसंतोलचालनादौ निगद्यते ॥ ६४ ॥
स्तम्भद्वयं दृढं भूमौ सरलाग्रं निखातयेत् ।
द्वे द्वे छिद्रे प्रकर्तव्ये तयोस्तु समसूत्रके ॥ ६५ ॥
द्वयोर्दण्डद्वयं सूक्ष्मसरलाग्रं निवेशयेत् ।
अधोदण्डस्यैकभागे चक्रं मह्रूवरं न्यसेत् ॥ ६६ ॥
प्रान्ते कीलैः करग्राह्यैर्युक्तं भ्रमिकरं च तत् ।
तस्यैवापरभागे तु चतुःखण्डी[ण्डीं] निवेशयेत् ॥ ६७ ॥
ततश्चोपरिदण्डे तु तद्भागे वृत्तचक्रकम् ।
समासजेत् प्रान्तभागे कृतनिम्नाङ्कं दृढम् ॥ ६८ ॥
वर्त्तुलं च चतुःखण्डीसमिश्राङ्कं तथा चरेत् ।
चतुःखण्डी भ्राम्यमाणा वर्त्तुलं भ्रामयेद्यथा ॥ ६९ ॥
वर्त्तुलापरभागस्थस्तम्भमूर्द्धसमीपतः ।
महल्लसंज्ञकं काष्ठं चञ्चलं परिलम्बयेत् ॥ ७० ॥
तस्य यः पुष्कलो भागस्तच्छिरोवस्तुनस्त्वधः ।
निवेश्य तदधस्तात्तु दृढाधारं निवेशयेत् ॥ ७१ ॥
तत्काष्ठापरभागेऽल्पे दृढां रज्जुं विबन्धयेत् ।
अपरः पल्लवस्तस्या वर्त्तुलाश्रयदण्डके ॥ ७२ ॥

परभागे वन्धयी[ये]त विचार्य्य निपुणं सुधीः ।
ततो मह्लवरं चक्रं कीलेषु परिगृह्य च ॥ ७३ ॥
भ्रामये[त्] तद्भ्रमेणैव चतुःखरडी परिभ्रमेत् ।
चतुःखरडीभ्रमेणैव वर्त्तुलं तूर्ध्वगं भ्रमेत् ॥ ७४ ॥
ततस्तदाश्रितं दरडं रज्जुर्वेष्टयते यथा ।
तथा तथोर्ध्वमायाति महल्लाग्रेण वस्तु तत् ॥ ७५ ॥
एवंप्रकारो योगोऽयं बोद्धव्यो गुरुवक्त्रतः ।
ततः प्रयोगः कर्तव्यो धिया विमलया स्वया ॥ ७६ ॥

अथ मह्लवरलूलं[ल]बयोगप्रकारः—

मह्लवरलूलबयो[ र् ]योगेन सुकरा क्रिया ।
गुरुवस्तूत्थापने तु प्रोच्यते सिंहभूभुजा ॥ ७७ ॥
स्तम्भद्वयं तु सुदृढमन्योन्याभिमुखं खनेत् ।
तिर्यक्काष्ठं तयोर्मूर्द्ध्नि दद्यात्तु परिणावह[णाह]वत् ॥ ७८ ॥
उभयो[:] स्तम्भयोस्त्रीणि त्रीणि छिद्राणि कारयेत् ।
उपर्यधोविभागेन तेषु दरडान् विनिक्षिपेत् ॥ ७९ ॥
पूर्वोक्तसदृशान् सारानायसान् वा यथोचितम् ।
अधोदरडस्यैकभागे पूर्वोक्तं वृत्तचक्रकम् ॥ ८० ॥
विन्यसेदर्ज्जुनफलसदृशप्रान्तभागकम् ।
तस्य दरडस्यान्यभागे चतुःखरडी[रडीं] तु पूर्ववत् ॥ ८१ ॥
निधाय मध्यमे दरडे पूर्ववद्वर्त्तुलं न्यसेत् ।
चतुःखरड्या वर्त्तुलस्य यथा चान्योन्यमिश्रिताः ॥ ८२ ॥
आरा भवेयुः कार्यो वै संनिवेशस्तथा धिया ।
तस्यैवापरभागे तु चतुःखरडीं निवेशयेत् ॥ ८३ ॥
ततस्तदूर्ध्वगे दरडे वर्त्तुलं पूर्वव[ द् ] दृढम् ।
चक्रं न्यसेच्चतुःखरड्या पूर्ववन्मिश्रितारकम् ॥ ८४ ॥
तस्य दरडस्यापरेंऽशे दृढां रज्जुं विलम्बयेत् ।
तस्याः परेण भागेन भारवद्वस्तु बन्धयेत् ॥ ८५ ॥

अधोदण्डस्थचक्रस्य वृत्तस्य समसूत्रकम् ।
वर्त्तुलं काष्ठमेकं तु मूले सूक्ष्मशिखाग्रकम् ॥ ८६ ॥
ऊर्ध्वाग्रं रोपयेद्भूमौ पाषाणाद्याश्रितं भ्रमत् ।
समन्तमो[तो]ऽर्जुनफलसदृशाङ्कं तु तद्भवेत् ॥ ८७ ॥
अधोदण्डस्थवृत्तारैः सम्मिश्राङ्कं निवेशयेत् ।
तस्योर्ध्वभागः स्तम्भस्थतिर्यक्काष्ठं विभिद्य च ॥ ८८ ॥
बहिः कार्यस्तत्र कीलं तिर्यञ्चभ्रमये न्यसेत् ।
तस्मिन् परिभ्राम्यमाणे भ्रमेच्चक्रं तु वर्त्तुलम् ॥ ८९ ॥
तत्पुनः स्वाश्रयगतां चतुःखण्डीं तु भ्रामयेत् ।
सा चौ[चो]परितनं वृत्तं तदप्यन्यां चतुष्किकाम् ॥ ९० ॥
सा तूपरितनं वृत्तं भ्रामयेत्तेन तु स्फुटम् ।
भ्राम्यते सा[स्वा]श्रयो दण्डो वेष्टते तत्र रज्जुका ॥ ९१ ॥
यथा यथा तथैवोर्ध्वं सभारं वस्तु याति हि ।
एतद् गुरुमुखाज्ज्ञात्वा मतिमान् संप्रयोजयेत् ॥ ९२ ॥

अथ लूलबमहूवरबुगरामहल्लाणां[नां] योगप्रकारः—

लूलबं तु क्वचित् कुर्यात्तत्संयुक्तं महूवरम् ।
तद्दण्डे बुगरानिष्टरज्ज्वग्रं[ग्रे] परिबन्धयेत् ॥ ९३ ॥
अपरं पल्लवं चास्या महल्लाग्रे विबन्धयेत् ।
महल्लं कुत्रचित् स्तम्भे कीलयेच्चञ्चलं तिरः ॥ ९४ ॥
तस्योपरिशिरो वस्तुतलभागे निवेशयेत् ।
आधारं तदधो दद्यात् कल्पितांशानुसारतः ॥ ९५ ॥
लूलबभ्रमणेनैव भ्रमते(?) तु महूवरम् ।
बुगराणां भ्रमेणैव रज्जुर्दण्डं तु वेष्टयेत् ॥ ९६ ॥
महल्लैकशिरस्तेन नीचं यायाद्यथा यथा ।
तथा तथा परशिरो वस्तु चे[चो]त्थापयत्यलम् ॥ ९७ ॥

अथ[ऽ]स्फीनामाह—

अस्फीना च त्रिकोणा स्यात् पक्कलोहविनिर्मिता ।
कोणाश्च द्विमुखाः कार्याः सम्प्रदायानुसारतः ॥ ६८ ॥
तत्रैककोणं भेद्यादौ निवेश्यापरकोणयोः ।
घातयेन्मुद्गराद्येन विदीर्णं जायते हि तत् ॥ ६९ ॥

( एतावानेव ग्रन्थ उपलब्धः )

—

## भारोत्थापनयन्त्रनिर्माणविधिः



---

# श्लोकार्धानुक्रमणिका

# भारोत्थापनयन्त्रनिर्माणविधिः

## श्लोकार्धानुक्रमणिका

भारोत्थापनयन्त्रनिर्माणविधिः

# सारस्वती सुषमा

काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

[ त्रैमासिकी ]


प्रधानसम्पादकः

श्रीकुबेरनाथशुक्लः, एम० ए०, व्याकरणाचार्यः

सहसम्पादकः

श्रीव्रजवल्लभद्विवेदो दर्शनाचार्यः

स्थानापन्नसहसम्पादकः

श्रीगोविन्दनरहरिवैजापुरकरः



प्रत्यङ्कम् १.८८

ज्येष्ठपूर्णिमा २०१४

द्वादशवर्षे, प्रथमोऽङ्कः

वार्षिकम् ७.५०

# विषय-सूची



## चयनिका



## सम्पादकीयम्



## समालोचनम्



## ग्रन्थः

मंत्री, गृह, शिक्षा तथा सूचना विभाग,
उत्तर प्रदेश ।




कैम्प नैनीताल, जून २६, १९५७

प्रिय शुक्ल जी,

आपका १७ जून का पत्र मिला । 'सारस्वती सुषमा' संस्कृत महाविद्यालय वाराणसी और सरस्वती भवन की मुख-पत्रिका है । कई वर्षों से इसका प्रकाशन हो रहा है और संस्कृत साहित्य के क्षेत्र में उसका समादर है । इस पत्रिका को अब संस्कृत विश्व-विद्यालय के योग्य बनाना है और सरस्वती भवन की अनुपम ज्ञान-निधि का प्रकाशन करके इसे पूर्णत: सम्पन्न करना है । मेरी सम्मति में सरस्वती-भवन अनूठा पुस्तकालय है जिसमें अमूल्य, दुर्लभ और प्राचीन संस्कृत ग्रंथों का बेजोड़ संग्रह है । संस्कृत वाङ्मय के अध्ययन और अनुशीलन के लिये इससे बढ़ कर कोई दूसरी संस्था कदाचित् ही देश में मिलेगी । मैं तो उस समय की कल्पना कर रहा हूं जब विश्व-विद्यालय के साथ साथ सरस्वती-भवन संस्कृत-साहित्य पर गम्भीर अनुशीलन करने के लिये आधार बनेगा और देश तथा विदेश के संस्कृतज्ञों और संस्कृत-प्रेमियों के लिये ज्ञानार्जन में सहायक होगा । 'सारस्वती सुषमा' हमारे इस महान अध्ययन केन्द्र की मुख पत्रिका बनेगी और जगत को संस्कृत की सुषमा से मोहित करेगी । भगवान विश्वनाथ का आशीर्वाद हम सबको इस प्रयास में सफल बनाये ।

आपका

कमलापति त्रिपाठी

श्री कुबेरनाथ शुक्ल,
प्रधानाचार्य, राजकीय संस्कृत महाविद्यालय,
वाराणसी ।

# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

१२ वर्षः | ज्येष्ठपूर्णिमा २०१४ | १ अङ्कः


# वर्णक्रमविवेकः


श्रीअनन्तनारायणशास्त्री, भण्डारकरप्राच्यशोधसंस्थानम्, पूना ।


## अथ वर्णक्रमविवेकस्य विषयाः

## १. प्रास्ताविकं किञ्चित्

स किलायं निर्विवादः समयो निगमागमरहस्यपरामर्शविचक्षणानां यद् अनादिसर्ववर्ण-प्रकृतिभूतशब्दात्मकब्रह्मस्वरूपसंवेदनेन यतमानमानसा विद्वद्वतंसा नियमेन परमं निःश्रेयसं संविन्दन्त इति ।

स्वस्वगुरूपसदनेन यथाक्रममधीतसाङ्गस्वाध्यायानां पदक्रमजटाघनपाठपर्यन्तास्खलितोच्चारणलब्धदिगन्तप्रकाशितविमलयशसां शुद्धस्वान्तानां पुनर्वर्णक्रमविवेकाख्योऽयमपि निबन्धः सर्वथा प्रतिपित्साविषयो भविष्यतीति निःशङ्कं वयमध्यवस्यामः ।

अत्र च प्रातिस्विकतया समेषामपि स्वरव्यञ्जनानां क्रमेण यथालक्षणलक्षितध्वनिस्थान-प्रयत्नादिविविधविषयविशेषप्रतिपादकसंग्रहकारिकाः, वर्णक्रमप्रयोगसरणिः, सांकेतिकवैदिकपदार्थ-सूची, वर्णस्वरूपपट्टिकेत्यादीन् विषयान् वर्णक्रमस्वरूपप्रतिपित्सवः सुखेनैव प्रतिपद्येरन्निति प्रकृत-निबन्धपरिचयत एवावगम्यत इत्यत्र न कापि विशयकणिकास्ति । अतोऽत्र शीक्षादिलक्षणविचक्षणाः सन्तस्तादृशग्रन्थानुरोधेन संकलितसकलवर्णसंग्रहस्वरूपविवेचने दत्तदृष्टयः संप्रदायबहुत्वेऽपि यथास्वगुरूपदेशमाविष्कृतमतान्तराशयपरामर्शेन सह बहूपकाराय मया प्राकाश्यं नीयमानमिमं निबन्धमपि नवं परिशील्य दूरीकृतदोषचयास्तदुदितगुणमात्रग्राहिणो भूत्वा मदीयमिमं श्रमं सफलयन्त्विति सप्रश्रयमभ्यर्थयेतमाम् ।

### २. संज्ञापरिभाषम्

**वन्दे वेदमयीं नित्यां श्रियं विष्णुपदाश्रयाम् ।**
**चिदानन्दतनूं सत्यां सुवर्णपदभासुराम् ॥ १ ॥**
**प्रणम्य भारतीमैशं सम्बं साम्बं तथा गुरून् ।**
**वर्णक्रमविवेकोऽयं तायतेऽधीतिनां मुदे ॥ २ ॥**
**स भाति सर्ववर्णानां शब्दः प्रकृतिरव्ययः ।**
**अनादिनिधनो योऽसौ ब्रह्मेदं व्याप्य तिष्ठति ॥ ३ ॥**
**संहिताब्राह्मणे स्यातां तैत्तिरीये यजुष्युभे ।**
**संहितायां सप्त काण्डाः प्रश्नाश्च भवसंमिताः ॥ ४ ॥**
**कामिता दधिपूराः स्युर्वाकाः पञ्चाशतः क्रमात् ।**
**सहस्रधनिकोपेतपदान्यपि बिभर्त्यसौ ॥ ५ ॥**

[1]अष्टषष्ट्यधिकाः पञ्चशतं वाका विधिश्रुताः ।
[2]को नु वीरो दशिन्यश्च वाक्यानि भूतभूधरः ॥ ६ ॥
अदिदुदृऋृऌृएऐओऔ च तद्भवाः स्वराः ।
नव, मान्ताः कादिमाश्च स्पर्शाः स्युः पञ्चविंशतिः ॥ ७ ॥
चतस्रो याद्यो ऽन्तस्थाः पञ्चोष्माणः शषादयः ।
को ऽनुस्वारो विसर्गश्चाष्टत्रिंशद्व्यञ्जनान्यपि ॥ ८ ॥
एवं समाम्निता वर्णाश्छन्दोविद्भिः समादृताः ।
अन्ये त्वेषां विस्तरार्था ज्ञेया मात्रादिभेदिताः ॥ ९ ॥
उच्चैरुदात्तो नीचैश्चानुदात्तः संहितस्तयोः ।
स्वारः स्यात्तत्परो नीचो धृतो ऽपीति चतुःस्वराः ॥ १० ॥
उच्चान्तो नासिको ऽदन्तः प्लुतः स्यात् संशयादिषु ।
प्लुतस्त्रिमात्रो विज्ञेयो ऽपीश्वरादावनुनासिकाः ॥ ११ ॥
श्लोकाद्याः पञ्च रङ्गाह्वाः संहिताविधिभागयोः ।
कठारण्येषु दीर्घाः स्यू रङ्गा देवाँ२ उपादिषु ॥ १२ ॥
स्वरधर्मद्वये ऽचि स्यात् कम्पः स्वारोच्चभेदतः ।
संहितायां स्वारकम्पा उच्चकम्पाः कठेष्वपि ॥ १३ ॥
द्विविधो ऽपीदृशः कम्पः पारक्षुद्रे न चेष्यते ।
कठेभ्यो ऽन्यत्र शान्तो अश्चागमश्छः कठे ऽम्भसि ॥ १४ ॥
आरण्यशीक्षादावेवमुन्नेयं स्वरलक्षणम् ।
ऋकारो लश्च दुश्लिष्टः संहितायां नहि श्रुतौ ॥ १५ ॥
पारक्षुद्र इमौ ज्ञेयौ कठारण्यकशीक्षयोः ।
द्विधा यजुष्यनुस्वारः सगत्वागत्वभेदतः ॥ १६ ॥
एफोत्तरस्तु रस्यादःकारस्यापि विसर्गता ।
ᳵकᳵपयोः क्रमतो जिह्वामूलोपध्माननामता ॥ १७ ॥

---

१. अष्टानवत्यधिप० । २. न को वीर इति पा०

स्वरभक्ती भवेतां तौ रेफलावच्परोष्मसु ।
अनूष्मविकृतिस्पर्शादनन्त्यादुत्तमे यमाः ॥ १८ ॥
मूलोक्ताः प्रादयश्चात्राप्युपसर्गाः श्रुतौ श्रिताः ।
दश त्वाह प्रातिशाख्यं शीक्षा चैकोनविंशतिम् ॥ १६ ॥
नीचान्यस्वरमध्यस्थो नीचो विक्रम ईर्यते ।
युतेऽन्तिमेऽपि दीर्घाच्चेद्दीर्घः स्वारोऽप्यधीयते ॥ २० ॥
एवं सगत्वानुस्वारो ह्रस्वाद् द्विः संयुते पठेत् ।
सत्वं सर्गस्य लोपोऽपि कुत्रचित् संयुतोष्मसु ॥ २१ ॥
ईदूतो रेफानुस्वारावातो नो योऽप्यचि श्रुतौ ।
क्वचिच्चारम्भरं चेयाद्दकारोऽवर्णपूर्वकः ॥ २२ ॥
लोपालोपौ सन्ध्यभावः क्वचिद्दीर्घस्य सांहितः ।
सप्तलक्षणषड्विंशसूत्रशीक्षादिलक्षणैः ॥ २३ ॥
इति ज्ञेयानि लक्ष्याणि याजुषैस्तैत्तिरीयके ॥

३. संहिता

पादबन्धं विना मन्त्रभागानां यजुषामृचाम् ।
परस्परं संहतत्वात् संहितेत्यभिधीयते ॥ २५ ॥
संहितां विविधैः पाठैः पदक्रमजटाघनैः ।
अधीयते श्रोत्रियास्तु सवर्णक्रमलक्षणैः ॥ २६ ॥
काण्डप्रश्नानुवाकैश्च पञ्चाशद्भिः पदैरपि ।
वर्णमात्रास्वराद्यैश्च व्यत्यस्येन्न हि सा क्वचित् ॥ २७ ॥
सर्वाभिरपि संस्थाभिर्बिभर्त्येन्तर्हि संहिता ।
पुरोडाश्येन चारब्धा मेधेन विरमत्यसौ ॥ २८ ॥

४. ब्राह्मणम्

पारक्षुद्रारुणकठैर्दृष्टाभिर्मुनिपुङ्गवैः ।
शाखाभिस्तिसृभिश्चान्यद्ब्राह्मणं त्रिविधं श्रुतम् ॥ २६ ॥

काण्डस्थानेऽष्टकं विद्यात् प्रश्नैरष्टभिरन्वयात् ।
अष्टकेषु त्रिषु प्रश्नाः पञ्चविंशतिरीरिताः ॥ ३० ॥
काठकाख्ये त्रयः प्रश्ना दश चारण्यके तथा ।
सर्वत्रर्चः पादवद्धा वाक्यानि च पृथक् पृथक् ॥ ३१ ॥
व्रातो दशानां वाक्यानां दशिन्यप्यत्र संज्ञिता ।
अग्न्याधेयमुपक्रम्य मेधान्तोऽप्यत्र दृश्यते ॥ ३२ ॥
शुक्रामन्थिगता मन्त्रा यद्यप्यादावुदीरिताः ।
तथापि मङ्गलार्थाय ब्रह्मोपात्तमुपक्रमे ॥ ३३ ॥
कठे त्रिषु तथारण्ये षड्भिः कर्म समापितम् ।
आरभ्य सप्तमं ब्रह्मकाण्डमाह चतुष्टये ॥ ३४ ॥

५. पदक्रमजटाघनानि

पदान्यधीत्याङ्गुलिभिः संख्यायाध्यायसंहिताम् ।
यतो गुरोरधीयीत यथा शीक्षादिलक्षणम् ॥ ३५ ॥
प्रग्रहेङ्ग्योपसर्गाणामितिकारो विधीयते ।
उपसर्गा नेतिपरा वाक्यान्ताश्च स्वमध्यमाः ॥ ३६ ॥
लक्षणैरेवमन्यैश्चाप्यात्रेयीं पदसंहिताम् ।
पदस्वरूपावगत्या अधीयीत यथाविधि ॥ ३७ ॥
आद्यं पदद्वयं युञ्ज्याद्विहायाद्यं ततो द्वयम् ।
इङ्ग्यं चेत् पुनरुच्चार्य समस्तं तद्विभाजयेत् ॥ ३८ ॥
पदत्रये त्रिक्रमः स्यात् समानस्वरयुक्पदे ।
सर्वत्रैवमधीयीत यथासंहितमेव तम् ॥ ३९ ॥
क्रमेणादौ द्वितीयं द्विर्व्युत्क्रम्याथ द्विरादिमम् ।
ततः क्रमात् समाने तु क्रम एव पदद्वये ॥ ४० ॥
यथार्षं सन्धिकार्यादि जटापाठी पठेत् समम् ।
सन्धिस्वरादिकार्याणि यथार्षं तु पदद्वये ॥
विदित्वा पठेद् घनाध्यायी त्रिक्रमे तु चतुष्पदे ॥ ४१ ॥

## ६. स्वरस्थानानि

त्रिषु वायुः शरीरस्थोऽनलेनोत्थापितस्त्रिधा ।
मन्द्रमध्यमताराख्याः स्वराः स्युः श्रुतिगोचराः ॥ ४२ ॥
कण्ठेऽधिके हकारोऽल्पे नादः श्वासश्च विस्तृते ।
अर्कोऽतिविस्तृते चैते वर्णप्रकृतयो मताः ॥ ४३ ॥
प्रातिशाख्ये श्वास एव शीक्षास्वर्कोऽप्युदीरितः ।
तृतीयपञ्चमान्तस्थाः स्युरचो नादतो यमाः ॥ ४४ ॥
प्रथमे तद्यमे श्वासादन्योऽर्कादिति निर्णयः ।
कण्ठोष्ठतालूरोनासादन्तवक्त्राणि वै दश ॥ ४५ ॥
स्थानं करणमादीनां वर्णानां भागयोर्भवेत् ।
अच्तृतीयोत्तमयणो लोऽनुस्वारश्च संवृताः ॥ ४६ ॥
घोषा अल्पासवश्चाद्या अन्येऽघोषा महासवः ।
हकारो होऽत्नु घोषेषु नादः श्वासः परेषु च ॥ ४७ ॥
अवर्णस्य हनुःस्थानं हन्वोष्ठौ करणं भवेत् ।
नातिव्यस्ते च दीर्घादौ ह्रस्वे नात्युपसंहृते ॥ ४८ ॥
तालुस्थानं चोष्ठजिह्वामध्यावप्युपसंहृतौ ।
ईषत् करणमप्याहुरिवर्णस्य विचक्षणाः ॥ ४९ ॥
दीर्घोत्तरोष्ठः स्थानं स्यादीषच्चाप्युपसंहृतः ।
उवर्णस्याधरोष्ठः स्यात् करणे तु विशेषतः ॥ ५० ॥
ऋवर्णस्य हनुः स्थानमीषत् स्याच्चोपसंहृतः ।
करणे त्वोष्ठजिह्वाग्रादीषदप्युपसंहृतौ ॥ ५१ ॥
ऋवदेव लृकारस्य स्थाने बर्स्वोऽधिको भवेत् ।
उपसंहृततरेणैनो हनुना सहितो भवेत् ॥ ५२ ॥
जम्भ्यस्तालूत्तरः स्थानं ह्र्यंशस्य करणे तथा ।
पदीषत्संनिकृष्टोष्ठजिह्वान्तःपार्श्वभाग्भवेत् ॥ ५३ ॥

अदितोदादुतोश्चैदोतावदुत्सम औत्तथा ।
अमश्च हनुमूलं स्यान्नासार्धविवृतस्तथा ॥ ५४॥
स्थाने तु करणे जिह्वानासार्धोऽशोऽपि भिद्यते ।
कर्णोपरिष्टात्तदधोभागौ सर्गस्य ते मते ॥ ५५ ॥

७. व्यञ्जनस्थानानि

स्थानं कस्य हनोर्मूलं चयशानां च ताल्वपि ।
उत्तरोष्ठं पफयोः स्यान्मूर्धा तु ळटवर्गयोः ॥ ५६ ॥
तसयोस्तु दतोमूलार्धोऽशो विवृतनासिकाः ।
उत्तमाश्चोद्दतोमूलप्रत्यग्भागस्तु रेफगः ॥ ५७ ॥
लस्योत्तरं दन्तमूलमुद्दतोऽग्रस्तु वस्य च ।
मूर्धा विवृतमध्यः षो हः स्यात् स्वोपरिभागभाक् ॥ ५८ ॥
जिह्वामूलोपरिष्टात्तु ≍कस्येति च कथ्यते ।

८. व्यञ्जनानां करणानि प्रयत्नाश्च

करणं कस्य जिह्वाया मूलं चस्य तु मध्यमः ।
टतयोरग्र एवास्याः किन्तु टः प्रतिवेष्टितः ॥ ६० ॥
षळौ हि टसमौ स्यातां तथा पस्याधरोष्ठता ।
यो जिह्वामध्यपार्श्वांशो रलौ जिह्वाग्रमध्यगौ ॥ ६१ ॥
वस्यान्तर्बहिरोष्ठान्तौ हः स्यात्कण्ठाद्यधोऽशभाक् ।
जिह्वामध्याग्रभागौ तु शसोर्विवृतमध्यगौ ॥ ६२ ॥
जिह्वामूलस्य तदधोभागो विवृतमध्यगः ।
उपध्मानो विवृतमध्योऽप्यधरोष्ठस्तथैव च ॥ ६३ ॥
ह्रस्वाकारे संवृतः स्याद्विवृतेऽपि स्वरोष्मसु ।
स्पर्शेषु स्पृष्टमीषच्च यत्नो यादिचतुष्टये ॥ ६४ ॥

९. स्वरभक्तयः

असंयुतोष्मसु रलोर्भक्तिः स्याद्विविधैः स्वरैः ।
बर्हिः करेणुः पूर्वाङ्गं हलन्ता संवृता भवेत् ॥ ६५ ॥
मल्हास्तु कर्विणी ज्ञेया शिष्टं वर्हिर्वदुन्नयेत् ।
हरिणी विवृताऽजन्ता रेफात् शादौ पराङ्गभाक् ॥
तथा लाद्धारिताऽजन्ता वल्शश्चोत्तरभागिह ॥ ६६ ॥

१०. द्वित्वम्

इयाद्वल्हल्यचो द्वित्वमचो रोऽल्परकश्च हल् ।
स्पर्श एव लवाभ्यां चेत् स्वारयोर्लवयोरपि ॥ ६७ ॥
नङोरपि तथा ह्रस्वाद् द्वित्वं विद्यात् परे हलि ।
अनुस्वारो ह्रस्वपूर्वस्तत्परो हल् हलावपि ॥ ६८ ॥
स्वरादिमेषूष्मणो न तद्वर्ग्योऽनुत्तमे तथा ।
सवर्णोर्ध्वे सवर्णश्च नेयाद् द्वित्वं तु लक्ष्यतः ॥ ६९ ॥

११. आगमः

द्वित्वलक्षणतः प्राप्ते द्विरूपे पूर्व आगमः ।
द्वितीये प्रथमस्तुर्ये तृतीयश्च यथाक्रमम् ॥ ७० ॥
लक्ष्यानुरोधात् सर्वत्र सन्ध्यादावागमं पठेत् ।
कठे चाम्भस्यागमो यो मानं न स जटादिषु ॥ ७१ ॥
हान्त्योष्मणः स्यात् प्रथमः स्पर्शो तत्सम आगमः ।
उत्तमेऽविकृतात् स्पर्शात् प्राग्यमस्तत्समो भवेत् ॥
द्वितीय ऊष्मण्यादेशः केचिद् द्वित्वे परस्य वै ॥ ७२ ॥

१२. अङ्गम्

हलः पराङ्गता ह्रस्यौरस्यस्योत्तरपूर्वयोः ।
अनुस्वारविसर्गौ चेयातां पूर्वाङ्गतामुभौ ॥ ७३ ॥
अधृते ऋति रेफोऽन्त्यो भक्तिः सर्गोऽयुतश्च नः ।
तथा विरामो योगादिर्हल्पूर्वस्याङ्गमिष्यते ॥ ७४ ॥

धृतोपरि धृता भक्तिरसदृग् यण् तथा यणि ।
स्पर्शश्चोष्मणि नासिक्या ऊष्मादेशः परस्य ते ॥ ७५ ॥

१३. मात्राः

ह्रस्वदीर्घप्लुता एकद्वित्रिमात्रा अचां मताः ।
जिह्वामूलस्तथा ध्मानो नासिक्यो होऽङ्घ्रिमात्रिकः ॥ ७६ ॥
हलोः संयुतयोरादिर्विरामो वर्णयोरपि ।
पिपीलिकाविवृत्तिश्च भवेयुः पादमात्रिकाः ॥ ७७ ॥
स्पर्शोर्ध्वौ वो हलो भक्तिर्ह्रस्वाग्नो यवहोत्तरः ।
सर्गः सक्षपरोऽपि स्याद् द्विरोष्ठ्योऽप्यौवयोर्यमाः ॥ ७८ ॥
मध्यमाख्यविवृत्तिश्चाप्यर्धमात्रा भवन्त्यमी ।
विरामः पाकवत्यन्त्यो लश्चैतावूनमात्रिकौ ॥ ७९ ॥
वत्सानुसृतिह्रस्वाचो युक्तेऽनुस्वार एव च ।
असंयुतौ नङौ दीर्घाच्चैते स्युर्मात्रिका अपि ॥ ८० ॥
स्वरोत्तमोऽप्यनुस्वारो मतः पादाधिमात्रिकः ।
पपरप्रणवान्ते च वाक्यान्तावग्रहान्तयोः ॥ ८१ ॥
अध्यर्धमात्रा ज्ञेयाऽथ पदान्तप्रणवान्तिमौ ।
रेफोष्मोर्ध्वौऽप्यनुस्वारो हल्परे हे ङनावपि ॥ ८२ ॥
सोर्ध्वयोः खथयोः पूर्वौ ङनौ ह्रस्वादचः क्रमात् ।
आगमौ चेत्खथौ षोर्ध्वौ ङनौ ह्रस्वादचस्तथा ॥ ८३ ॥
एते द्विमात्रा विज्ञेया ओम्योत्सार्धद्विमात्रिकः ।
प्रणवे नैकधा मात्राभेदो दृष्टोऽथ वैदिकैः ॥ ८४ ॥
अर्धान्तश्चाप्यृगन्तश्च संहितायां विधावपि ।
ज्ञेयस्त्रिमात्रः सर्वत्र यत्र नैवर्ग् चतुष्पदी ॥ ८५ ॥
काण्डप्रश्नानुवाकान्ते दशाष्टपञ्चमात्रिकाः ।
ग्रन्थोपसंहृतौ ज्ञेयास्त्रिंशन्मात्रा विचक्षणैः ॥ ८६ ॥

## १४. स्वरिताः

नीचेनाऽतोच्च एङ्चाभिनिहतः स्वरितो भवेत् ।
इह्रुतोर्यवभावेऽचि नीचे क्षैप्र उदात्तयोः ॥ ८७ ॥
उच्चनीचोत्वयोरूत्वे प्रश्लिष्टः स्वरितो मतः ।
नित्यः स्वयं वा नीचाद्वा सयवे स्वरितः पदे ॥ ८८ ॥
तैरोव्यञ्जनसंज्ञः स स्वार उच्चात् स्थिते पदे ।
विवृत्तौ पदयोः स्वारः पादवृत्तः स ईरितः ॥ ८९ ॥
सांहितः स्वरितः प्रातिहतो नीचोच्चयोर्युतौ ।

## १५. स्वराणां स्वरसाधर्म्यम्

उच्चैरादीयते यस्मात् स उदात्तः स्वरो मतः ।
यो नोदात्तोऽभवन्नीचः सोऽनुदात्तः स्वरस्तथा ॥ ९१ ॥
एवं स्वर इतो जातः स्वरितोऽपीर्यते स्वरः ।
प्रचयात्मा चतुर्थाख्यः प्रचितो यः स्वरो भवेत् ॥ ९२ ॥
स्वारात् परस्तु नीचः स उच्चैष्ट्वमनुपद्यते ।
भवति प्रचयाख्योऽपि नीचधर्मप्रहाणतः ॥ ९३ ॥
स्वारसंनिधिमात्रेण परो नीचोऽपि स स्वरः ।
धृतः सन् प्रचितिं याति प्रचयोऽन्वर्थतां व्रजन् ॥ ९४ ॥
स्यादुदात्तः स्वरोऽजावद् गान्धारस्वरमाश्रितः ।
ह्रस्वो नीचश्चर्षभेण दीर्घः षड्जेन संमितः ॥ ९५ ॥
नित्यक्षैप्राभिनिहता निषादं बिभ्रति स्वरम् ।
प्रश्लिष्टप्रातिहतयोः पञ्चमः पिकवत् स्मृतः ॥ ९६ ॥
धैवतः स्यात् पादवृत्ततैरोव्यञ्जनयोः स्वरः ।
मध्यमस्वरमाश्रित्य प्रचयः क्रौञ्चवत् क्वणेत् ॥ ९७ ॥
तत्तत्स्वारोत्तरधृतः तत्तत्स्वारगुणाश्रयः ।
न्यञ्चमादौ निषादश्च मासूदादिषु पञ्चमः ॥ ९८ ॥

प्रउगादौ धैवतश्चेत्येके स्वरविदो विदुः ।
षट्सु स्थानेषु जिह्वादन्तनासोरःकण्ठतालुषु ॥ ९९ ॥
संश्रितः स स्वरः षड्जः केकारवसदृङ्मतः ।
नाभेः संमूर्च्छितो वायुर्नाडीहृत्पार्श्वमस्तके ॥ १०० ॥
स्पृशन् प्रजायते यस्तु स षड्ज इति वा मतम् ।
नाभेः समीरितो वायुः कण्ठे शीर्षे च संगतः ॥ १०१ ॥
नदत्यृषभवद्यस्मादृषभः संज्ञितो बुधैः ।
नाभ्युत्थितसमीरस्य कण्ठशीर्षाश्रयात्तथा ॥ १०२ ॥
नानागन्धवहत्वाच्च गान्धारः स्वर इष्यते ।
गान्धारदेशजन्यत्वाद्वेति केचिदिहोचिरे ॥ १०३ ॥
नाभेः समीरितस्यैव कण्ठोरःस्थानसंश्रयात् ।
नाभिमध्ये पुनः प्राप्त्या मध्यमोऽन्वर्थसंज्ञकः ॥ १०४ ॥
नाभिमध्ये भवो यस्य स वा मध्यम ईर्यते ।
नाभेरभ्युत्थितो वायुरुरुहृत्कण्ठमूर्धसु ॥ १०५ ॥
ताडितो विचरन् पञ्चस्वयं पञ्चम उच्यते ।
प्राणादिपञ्चसंस्थित्या पञ्चमो वा स संज्ञितः ॥ १०६ ॥
नाभेरधश्चरन् पश्चादूर्ध्वं धावन्निव स्वयम् ।
यस्माद्भवति स प्रोच्यो धैवतोऽयं मनीषिभिः ॥ १०७ ॥
अभिसन्धीयते यस्मात् स्वरानिति स धैवतः ।
धीमद्भिर्गीयमानो वा मुख्यो लालाटिको हि सः ॥ १०८ ॥
स निषादः स्वरो यत्र निषीदन्ति च बृंहिताः ।
नैषादानामजानां वा निषादः स्वर इष्यताम् ॥ १०९ ॥

१६. देवता जातयश्च

पञ्चादिमा वायुदेवाः स्पर्शान्तस्थाः स्वरोष्मणाम् ।
ऐत्तद्द्वितीयाश्चाग्नीशा ओत्तृतीयाश्च भौमकाः ॥ ११० ॥

औश्चतुर्था ऐन्द्वाश्च शिष्टांश्चार्काधिपाः स्मृताः ।
ब्राह्मा वर्गादिमौ चाचः क्षत्रा मध्यमतुर्यगाः ॥ १११ ॥

अथवा

ब्राह्मा वर्गादिमश्चाचः क्षत्रा वर्गेषु मध्यगाः ।
वैश्या यण् चोत्तमाः शिष्टाः शूद्राश्चेति विनिर्णयः ॥ ११२

१७. हस्तस्वरविन्यासः

क्रुष्टादीनां यमानां हि तृतीयो मध्यमो यमः ।
प्रचयः स धृतत्वाच्च धृत इत्यभिधीयते ॥ ११३ ॥
क्रुष्टादिषु द्वितीयादिमन्द्रान्तान् क्रमशः स्वरान् ।
उदात्तप्रचयस्वारनीचांस्तांस्तित्तिरिर्जगौ ॥ ११४ ॥
तर्जनीमध्यरेखायां मध्यमानामिकान्त्ययोः ।
कनिष्ठादौ चोच्चधृतस्वारनीचान् क्रमात् स्पृशेत् ॥ ११५
अङ्गुष्ठाग्रेण विद्वानित्येष नैसर्गिकः क्रमः ।
स्वोच्चस्वाराङ्गुलिस्थानं भक्तीनां शिक्षयोदितम् ॥ ११६ ॥
तत्तदङ्गुलिरेखाणां तूपरेखाश्च संमताः ।
नासिक्यस्वारवर्णानामयुतानामपीदृशम् ॥ ११७ ॥
भक्तिवत् स्वारविन्यासं लक्षणज्ञा बभाषिरे ।
उच्चस्वरितकम्पेषु स्वरांशेष्वप्ययं क्रमः ॥
अत्रापि स्वरविन्यासक्रमेऽस्ति नैकधा भिदा ॥ ११९ ॥

इति कारिकाः ॥

## १८. अथ शुद्धवर्णक्रमः

वितास्तरीति सर्वेषां वर्णानामवबोधनम् ।
प्रयोगस्येति मत्वात्र शुद्धादीन् वर्णये दिशा ॥

**इषे त्वा** = इकार-षकार-एकार-तकारद्वित्व-वकार-आकाराः ।

**ऊर्क् च मे** = ऊकार-रेफ-ककारद्वित्व-चकार-अकार-मकार-एकाराः । ऊर्क् इत्यत्र नु वर्णसामान्यपरत्वाभावात् कस्य द्वित्वं नेष्यते ।

**अल्प्पाः** = अकार-लकार-पकारद्वित्व-आकार-विसर्जनीयाः ।

**ग्राव्णः** = गकार-रेफ-आकार-वकार-णकारद्वित्व-अकार-विसर्जनीयाः ।

**कल्ल्याणी** = ककार-अकार-लकारद्वित्व-यकार-आकार-णकार-ईकाराः ।

**बिल्ल्वः** = बकार-इकार-लकारद्वित्व-वकार-अकार-विसर्जनीयाः । अत्र "लकारस्य वकारस्य संयोगे स्वरितो यदि । तदा संयुक्त एव स्यादसंयुक्तस्तदन्यथा ॥" इति वचनेन बैल्व इत्यत्र केचन द्वित्वं नेच्छन्ति ।

**युङ्** = यकार-उकार-ङकाराः । अत्रोच्चारणे द्वित्वं दर्शयेदिति विशेषः ।

**तꣳस्स्वायै** = तकार-अकार-सगत्वानुस्वारद्वित्व-सकारद्वित्व-वकार-आकार-यकार-ऐकाराः ।

**भुङ्क्तः, युङ्ग्ध्वम्** = भकार-उकार-ङकार-आगमककार-तकार-अकार-विसर्जनीयाः । युङ्ग्ध्वमित्यत्र गश्च बोध्यः । धात्ववयवयोः ककारगकारयोरागमत्वं लक्ष्यानुसारीति वैदिकमात्रैः स्वीकृतम् । मूलशास्त्ररीत्या नेत्यपि बोध्यम् । आङ्क्त इति पदे आत्मनेपदस्यार्षत्वेऽपि कस्यागमत्वं न साम्प्रतमिव ।

**अक्खिदद्र्राः** = अकार-आगमककार-खकार-इकार-दकारद्वित्व-रेफ-आकार-विसर्जनीयाः ।

**धामच्छदे** = धकार-आकार-मकार-अकार-आगमचकार-छकार-अकार-दकार-एकाराः । अत्र कारिकायां लक्ष्यानुरोधादिति निर्देशाद् वेदे यत्र यत्रागमो लक्ष्यते तत्र तत्रैवमूहनीयम् । किञ्च, मूलशास्त्रोक्तोपसर्गसंख्यासंकोचतः क्वचित् पदनिर्देशश्चावश्यकः स्यात् । अतिच्छन्दादिस्थलेषु लक्ष्यानुरोधादेवाप्राप्तोऽप्यागमो लक्ष्यते । एवं च क्वचिदप्राप्तस्य क्वचित् प्राप्तस्यैवानुवादः क्रियते । यथा "पतयः स्याम" इत्यादौ । इह प्राप्तानुवादो मूलशास्त्रानुरोधेन । तत्र हि "पतयः स्याम"

इत्यादौ विसर्गो विकल्प्यते । सत्वपक्षे प्राप्तसद्द्वित्वस्यात्र विसर्गलोपमुक्त्वा निमित्ते सति द्वित्वमूरीकृतम् । अयमेव मूलशास्त्रप्राप्तसद्द्वित्वस्यात्र सनिमित्तद्वित्वेनानुवाद इति कथ्यते । अतो यत्र द्वित्वस्य पूर्वावयवः सन्नेवावस्थान्तरं पठ्यते तत्रानुवाद एव युक्तः ।

**सꣳस्पृणोति** = सकार-अकार-मगत्वानुस्वारद्वित्व-मकार-पकारद्वित्व-ऋकार-णकार-ओकार-नकार-इकाराः ।

**यक्क्ना** = यकार-अकार-ककार-नासिक्यककार-नकार-आकाराः ।

## १९. स्वरवर्णक्रमः

**ते᳚ऽमन्यन्तासु॑रेभ्यः** = तकार-दृढतरप्रयत्नाभिनिहतस्वरितएकार-मकार-प्रचयअकार-नकार-द्वित्व-यकार-विक्रमसंज्ञकानुदात्तअकार नकार-तकार-उदात्तआकार-सकार-तैरोव्यञ्जनस्वरितउकार-रेफ-प्रचयएकार - आगमबकारभकार-यकार-प्रचयअकार-विसर्जनीयाः ।

## २०. मात्रावर्णक्रमः

**स आदित्यः** = अर्धमात्रिकसकार-एकमात्रिकउदात्तअकार - मध्यमासंज्ञकार्धमात्रिकविवृत्तिविराम-द्विमात्रिकपादवृत्त [ = प्रातिहृत = सूत्रव्याख्याभिदा पक्षभेदः ] स्वरितआकार-पादमात्रिकविराम - अर्धमात्रिकदकार - एकमात्रिकविक्रमसंज्ञकअनुदात्तइकार - अर्धमात्रिकविराम-द्व्यणुमात्रिकतकारद्वित्व -अर्धमात्रिकयकार-एकमात्रिक उदात्त-अकार-अणुमात्रिकविराम-अर्धमात्रिकविसर्जनीयाः ।

## २१. अङ्गवर्णक्रमः

**तान् यज्ञः** = अर्धमात्रिकपराङ्गभूततकार - उदात्तद्विमात्रिकआकार - अणुमात्रिकविराम-पूर्वाङ्गभूत-नादसंज्ञकएकमात्रिकनकार - अणुमात्रिकविराम - पराङ्गभूतअर्धमात्रिकयकार - विक्रमसंज्ञकानुदात्तअकार-अर्धमात्रिकविराम - अणुमात्रिकपूर्वपराङ्गभूतजकार - अर्धमात्रिकपराङ्गभूतञकार-एकमात्रिकोदात्तअकार-अणुमात्रविराम-अर्धमात्रिक-विसर्जनीयाः ।

अत्र 'असंयुत' इति नकारमात्रस्य विशेषणं केचिदिच्छन्ति । परे तु वर्णसामान्यस्यापीति व्यासशीक्षामूलपाठस्य व्याख्यार्थो द्विधास्तीति ।

**व्यतिषजेत् स्त्येवा···** = अत्र तादिचतुष्टयस्य पूर्वाङ्गत्वम्। तस्य रेफयकारयोश्च पराङ्गतेति विवेकः।

**तत्सवितुः** = अत्र थसयोः पराङ्गता। एवमन्यत्रापि। इदं तु व्यामर्शाचार्यरीत्या। एते हि ऊष्मपरप्रथमस्य द्वितीयमादेशमभिप्रयन्ति। अपरे तु पदान्तस्यैव तस्य द्वित्वं तदितरस्यादेश इति मत्वा तत्सवितुरित्यादौ द्वित्वमन्यत्रैवादेश इति विभज्य पक्षान्तरं प्रदर्शयन्ति।

## २२. स्वाराणां स्वराणां च वर्णसारः

'पक्षद्वयेन सुधियां हृदाकाशे कृतास्पदा।
भासतां साऽभया शश्वद्वर्णसाराह्वपत्रिका॥

**उदात्तः** = भूमिदेवताकब्राह्मणजातिसात्त्विकगुणसहिततर्जन्यङ्गुलीमध्यरेखान्यासयोग्याध्येतृदेहदैर्घ्यध्वनिकाठिन्यकण्ठाकाशकृशत्वजनिताजारुततुल्यगान्धारस्वरहेतुभूतमूर्धस्थानोद्भव उदात्तस्वरः। पक्षे—अध्येत्रादिजनितान्तस्थाने "शरीरायामश्लक्ष्णीकृतगलबिलविनिःसृतपरुषध्वनिकः" इति पाठ्यम्। शेषं प्राग्वत्।

**ह्रस्वानुदात्तः** = अग्निदेवताकक्षत्रियजातितामसगुणसहितकनिष्ठिकाङ्गुल्याद्यरेखान्यासयोग्याध्येतृदेहह्रस्वत्वध्वनिमार्दवकण्ठाकाशमहत्त्वजनितवृषभरुततुल्यऋषभस्वरहेतुभूतहृदयस्थानोद्भवो ह्रस्वानुदात्तस्वरः। पक्षे—"योग्यशरीरह्रासैधितगलबिलविनिःसृतमृदुध्वनिक···" इत्यादि। शेषं प्राग्वत्। दीर्घानुदात्ते तु केकारुततुल्यषड्जस्वरहेतुभूतेति विशेषः। शेषं ह्रस्वानुदात्तवत्।

**नित्यक्षैप्राभिनिहतस्वराः** = चन्द्रदेवताकवैश्यजातिराजसगुणसहितानामिकाङ्गुल्यन्त्यरेखान्यासयोग्याध्येतृदेहदैर्घ्यह्रस्वत्वध्वनिकाठिन्यमार्दवकण्ठाकाशकृशत्वमहत्त्वसमाहारजनितगजबृंहिततुल्यनिषादस्वरहेतुभूतकर्णमूलोद्भवदृढतरप्रयत्ननित्यसंज्ञकः स्वरितः। एवमितरयोः। पक्षे—"योग्योच्चैष्ट्वनीचैष्ट्वधर्मद्वयसमाहारजनिततदाश्रयविजातीयगज···" इति विशेषः। एवमितरत्र।

**प्रश्लिष्टप्रातिहतौ** = चन्द्रदेवताकेत्यादिजनितान्तं नित्यवत्। कोकिलरुततुल्यपञ्चमस्वरहेतुभूतकर्णमूलोद्भवमृदुतरप्रयत्नप्रश्लिष्टसंज्ञकः स्वरित इति विशेषः। एवमन्यस्यापि

**पादवृत्ततैरोव्यञ्जनौ** = नित्यवजनितान्तं समानम्। हयहेत्रातुल्यधैवतस्वरहेतुभूतकर्णमूलोद्भवा-ल्पतरप्रयत्नपादवृत्तसंज्ञकः स्वरितः। एवमितरस्यापि।

**प्रचयः** = सूर्यदेवताकशूद्रजातितामसगुणसहितमध्यमाङ्गुलिमध्यरेखान्यासयोग्याध्येतृदेहदैर्ध्यध्वनि-काठिन्यकरणठाकाशकृशत्वजनितोच्चकल्पतद्विलक्षणक्रौञ्चकणनतुल्यमध्यमस्वर-हेतुभूतसर्वाङ्गस्थानोद्भवः प्रचयसंज्ञकः स्वरः। पक्षे—°योग्योच्चकल्पतद्वि-लक्षणेति विशेषः। अत्र तत्तल्लक्षणलक्षितस्वारोत्तरवृत्तिप्रचयस्य तत्तत्स्वार-गतस्वरतुल्यत्वमुन्नेयम्। इदं कारिकासु स्पष्टम्।

**अ** = संवृतकण्ठोत्थितसंवाराख्यबाह्यप्रयत्नसहितनादध्वनिजनितनात्युपसंहृतहनुस्थानतथाभूतोष्ठक-रणसंवृतप्रयत्नैकमात्रिकयथासंभवमुदात्तादिगुणकवायुदेवताकब्राह्मणजातिह्रस्व-संज्ञासहितः अकारः। अत्र स्वरेषु वर्णसारोक्तिसमये ध्वनिमारभ्यैव केचित् पठन्ति। तेषां मतेन स्थानकरणाभ्यां त्वयं प्रकारः। [अ] नात्युपश्लेषेष-द्विश्लेषहनुस्थाननात्युपसंहृतेषद्विवृतोष्ठकरणेति विशेषः।

**आ. आ. ३. ४.** = संवृतेत्यादिजनितान्तं समानम्। किन्तु नातिव्यस्तहनुस्थानतादृशोष्ठकरणविवृ-तप्रयत्नद्विमात्रिकयथासंभवमुदात्तादिगुणकवायुदेवताकब्राह्मणजातिदीर्घसंज्ञासहित आकारः। प्लुते त्रिमात्रिकः, प्लुतेति च विशेषः। पक्षे—अल्पोपश्लेषितातिविश्लेषहनुस्थाननात्युपसंहृतातिविवृतोष्ठकरणेति स्थानकरणयोर्विशेषः।

**इवर्णः** = जनितान्तं समानम्। तालुस्थानोपसंहृततरोष्ठजिह्वामध्यकरणविवृतप्रयत्नैकमात्रिकयथा-संभवमुदात्तादिगुणकाग्निदेवताकब्राह्मणजातिह्रस्वसंज्ञासहित इकारः। द्वित्रिमा-त्राभ्यां दीर्घप्लुतसंज्ञाभ्यां च ईकारप्लुतयोर्विशेषः। पक्षे—°तालुस्थानजिह्वा-मध्यकरणेति भेदः।

**उवर्णः** = जनितान्तं समम्। उपसंहृततरदीर्घोत्तरोष्ठस्थानतादृशाधरोष्ठकरणविवृतप्रयत्नैकमात्रिक-यथासंभवमुदात्तादिगुणकभूमिदेवताकब्राह्मणजातिह्रस्वसंज्ञासहित उकारः। द्वित्रि-मात्राभ्यां दीर्घप्लुतसंज्ञाभ्यां च ऊकारप्लुतयोर्विशेषः। पक्षे—°उपश्लेष-दीर्घोत्तरोष्ठस्थानतथाभूतकरणेति विशेषः।

**ऋ ॠ** = जनितान्तं प्राग्वत्। उपसंहृततरहनुबर्स्वस्थानोपसंहृततरोग्रजिह्वाग्रकरणविवृतप्रयत्नैकमा-त्रिकयथासंभवमुदात्तादिगुणकचन्द्रदेवताकब्राह्मणजातिह्रस्वसंज्ञासहित ऋकारः। दीर्घसंज्ञासहित ॠकारेति द्विमात्रेति च विशेषः।

पक्षे—उत्तरदन्तमूलोपरिभागस्थानोपसंहृततरहन्वत्युपसंहृतेषद्विवृतोष्ठजिह्वाग्रकरणेति । [लृ] देवतायां सूर्यो विशेष्यः । शेषं ऋवत् ।

**ए (सव्यञ्जनः)** = जनितान्तं समानम् । ०उपसंहृततरहनुतालुस्थानेषत्संनिकृष्टोष्ठजिह्वामध्यकरणविवृतप्रयत्नद्विमात्रिकयथासंभवमुदात्तादिगुणकवायुदेवताकब्राह्मणजातिदीर्घसंज्ञासहितः सव्यञ्जन एकारः ।

पक्षे—०ओष्ठजिह्वामध्यकरणविवृतप्रयत्नपादमात्राद्यांशभूतः अकारः, सत्रिपादान्त्यार्धांशभूत इकार इति ।

**ए (अव्यञ्जनः)** = उपसंहृततरहनुसहितताल्लूत्तरजम्भ्यस्थानेषत्संनिकृष्टोष्ठजिह्वामध्यपार्श्वभागकरणेति स्थानकरणाभ्यां भेदः ।

**ऐ** = जनितान्तं समम् । नात्युपसंहृतहनुस्थानतथाभूतोष्ठकरणसंवृतप्रयत्नार्धमात्रिकाद्यांशभूतः अकारः, तादृशध्वनिजनिततालुस्थानजिह्वामध्यकरणविवृतप्रयत्नाध्यर्धमात्रिकोत्तरांशभूत इकारः, उभयांशद्विमात्रिकयथासंभवमुदात्तादिगुणकाग्निदेवताकब्राह्मणजातिदीर्घसंज्ञासहित ऐकारः ।

पक्षे—०उपसंहृततरहनुतालुस्थानोष्ठजिह्वामध्यकरणविवृतप्रयत्नार्धमात्राद्यांशभूतसंवृतकरणधर्मविशिष्टः अकारः, अध्यर्धमात्रान्त्यार्धांशभूत इकारः, अग्निदेव... ।

**ओ** = जनितान्तं समम् । ०नातिव्यस्तहनुसहितोपसंहृततरदीर्घोत्तरोष्ठस्थानतथाभूताधरोष्ठकरणविवृतप्रयत्नद्विमात्रिकयथासंभवमुदात्तादिगुणकभूमिदेवताकब्राह्मणजातिदीर्घसंज्ञासहित ओकारः ।

पक्षे—अतिविश्लेषरहितहनूपसंहृततरदीर्घोत्तरोष्ठस्थानोपसंहृततरदीर्घाधरोष्ठकरणविवृतप्रयत्नपादमात्राद्यार्धांशभूतः अकारः, सत्रिपादमात्रान्त्यार्धांशभूत उकारः, भूमिदेवताक... ।

**औ** = जनितान्तं समम् । नात्युपसंहृतहनुस्थानतथाभूतोष्ठकरणसंवृतप्रयत्नार्धमात्रिकाद्यांशभूतः अकारः, तादृशध्वनिजनितोपसंहृततरदीर्घोत्तरोष्ठस्थानतादृशाधरोष्ठकरणविवृतप्रयत्नाध्यर्धमात्रिकोत्तरांशभूत उकारः, उभयांशद्विमात्रिकयथासंभवमुदात्तादिगुणकचन्द्रदेवताकब्राह्मणजातिदीर्घसंज्ञासहित औकारः ।

पक्षे—विवृतप्रयत्नान्तम् ओकारवत् । विशेषस्तु अर्धमात्राद्यांशभूतसंवृतकरण-

धर्मविशिष्टः अकारः, अध्यर्धमात्रान्त्यार्धांशभूत उकारः, चन्द्रदेवताकब्राह्मण-जातिक इति च बोध्यमिति ।

पक्षद्वयमुपस्थाप्य यथाशीक्षादिलक्षणम् ।
स्वाराणां च स्वराणां च वर्णसारो विवेचितः ॥

## २३. व्यञ्जनानां वर्णसारः

क = विवृतकण्ठोत्थितविवाराघोषाल्पप्राणाख्यबाह्यप्रयत्नसहितश्वासध्वनिजनितहनुमूलस्थानजिह्वामूलकरणस्पृष्टप्रयत्नार्धमात्राकालपराङ्गभूतवायुदेवताकब्राह्मणजातिप्रथमस्पर्शसंज्ञासहितः ककारः ।

क (यमः) = स्थाने संवृतनासिकेति पूर्वं योज्यम् । अणुश्च मात्रा । अत्रापि ध्वनिमारभ्यैव पक्षान्तरे पाठः । अल्पश्वासध्वनिजनितेति । शेषं प्राग्वत् ।

ख = विवृतकण्ठोत्थितविवाराघोषमहाप्राणाख्यबाह्यप्रयत्नसहितश्वासध्वनिजनितहनुमूलस्थानजिह्वामूलकरणस्पृष्टप्रयत्नार्धमात्राकालपराङ्गभूताग्निदेवताकब्राह्मणजातिद्वितीयस्पर्शसंज्ञासहितः खकारः । यमस्य स्थानमात्रयोः कवत् ।

ग = संवृतकण्ठोत्थितसंवारघोषाल्पप्राणाख्यबाह्यप्रयत्नसहितनादध्वनिजनितहनुमूलस्थानजिह्वामूलकरणस्पृष्टप्रयत्नार्धमात्राकालपराङ्गभूतभूमिदेवताकक्षत्रियजातितृतीयस्पर्शसंज्ञासहितो गकारः । यमस्य स्थानकरणयोः प्राग्वत् ।

घ = मध्यमकण्ठोत्थितसंवारघोषमहाप्राणाख्यबाह्यप्रयत्नसहितहकारध्वनिजनितहनुमूलस्थानजिह्वामूलकरणस्पृष्टप्रयत्नार्धमात्राकालपराङ्गभूतचन्द्रदेवताकक्षत्रियजातिचतुर्थस्पर्शसंज्ञासहितो घकारः । यमस्य प्राग्वत् ।

ङ = जनितान्तं गवत् । विवृतनासिकहनुमूलस्थानजिह्वामूलकरणस्पृष्टप्रयत्नार्धमात्राकालपराङ्गभूतसूर्यदेवताकवैश्यजाति(नासिक्य)उत्तमस्पर्शसंज्ञासहितो ङकारः ।

पक्षे—खे अतिश्वासध्वनिः, अतिस्पृष्टप्रयत्नः, क्षत्रियजातिः । घे अतिस्पृष्टेति । ङे हनुमूलमुखनासिकास्थानेति । स्थाने च विशेषः । शेषं प्राग्वत् ।

इह प्रयत्नमात्राङ्गदेवता जातयः क्रमात् ।
प्रथमादिषु वर्गाणां तत्तेषु समतामियुः ॥
प्रतिवर्गं विभिद्येते स्थानं करणमित्युभे ।
स्पर्शेष्वेवं समुन्नीय वर्णसारं वदेद् बुधः ॥

**चवर्गः**=जनितान्तं कवर्गवत् । स्थानकरणयोस्तालुस्थानजिह्वामध्यकरण इति विशेषः । शेषं कवर्गवत् । उत्तमेषु विवृतनासिकत्वमेव । पक्षे कवर्गवद् ध्वनिप्रयत्नजातयो बोध्याः ।

**टवर्गः**=जनितान्तं कवर्गवत् । स्थानकरणयोर्मूर्धस्थानप्रतिवेष्टितजिह्वाग्रकरण इति विशेषः । शेषं कवर्गवत् । उत्तमेषु विवृतनासिकत्वमेव । पक्षे कवर्गवद् ध्वनिप्रयत्न-जातयो बोध्याः ।

**तवर्गः**=जनितान्तं कवर्गवत् । स्थानकरणयोरुत्तरदन्तमूलाधोभागस्थानप्रतिवेष्टितजिह्वाग्रकरण इति विशेषः । शेषं कवर्गवत् । उत्तमेषु विवृतनासिकत्वमेव । पक्षे कवर्गवद् ध्वनिप्रयत्नजातयो बोध्याः ।

**पवर्गः**=जनितान्तं कवर्गवत् । स्थानकरणयोरुत्तरोष्ठस्थानाधरोष्ठकरण इति विशेषः । शेषं कवर्गवत् । उत्तमेषु विवृतनासिकत्वमेव । पक्षे कवर्गवद् ध्वनिप्रयत्नजातयो बोध्याः ।

**य**=जनितान्तं गवत् । तालुस्थानजिह्वामध्यपार्श्वभागकरणेषत्स्पृष्टप्रयत्नार्धमात्राकालपराङ्गभूतवायु-देवताकवैश्यजात्यन्तस्थासंज्ञासहितो यकारः ।

**र**=जनितान्तं यवत् । उत्तरदन्तमूलप्रत्यग्भागस्थानजिह्वाग्रमध्यकरणेषत्स्पृष्टप्रयत्नार्धमात्राकालपराङ्ग-भूताग्निदेवताकवैश्यजात्यन्तस्थासंज्ञासहितो रेफः । पक्षे प्रत्यगिति स्थाने उपरीति वाच्यम् ।

**ल**=जनितान्तं प्राग्वत् । उत्तरदन्तमूलस्थानजिह्वाग्रमध्यकरणेषत्स्पृष्टप्रयत्नार्धमात्राकालपराङ्गभूत-भूमिदेवताकवैश्यजात्यन्तस्थासंज्ञासहितो लकारः ।

**व(अन्तरोष्ठः)**=जनितान्तं समम् । उत्तरदन्ताग्रस्थानान्तरोष्ठान्तकरणेषत्स्पृष्टप्रयत्नार्धमात्राकाल-पराङ्गभूतचन्द्रदेवताकवैश्यजात्यन्तस्थासंज्ञासहितो वकारः । बहिरोष्ठे बहिरोष्ठो वकारः । पक्षे द्वयेऽप्यधरोष्ठान्तेत्येव पाठः ।

**श**=जनितान्तं खवत् । तालुस्थानविवृतमध्यजिह्वामध्यकरणविवृतप्रयत्नार्धमात्राकालपराङ्गभूतवा-युदेवताकशूद्रजात्यूष्मसंज्ञासहितः शकारः । पक्षे अतिश्वासेति स्थाने विशेषः ।

**ष**=जनितान्तं खवत् । मूर्धस्थानविवृतमध्यप्रतिवेष्टितजिह्वाग्रकरणविवृतप्रयत्नार्धमात्राकालपराङ्ग-भूताग्निदेवताकशूद्रजात्यूष्मसंज्ञासहितः षकारः ।

**स** = जनितान्तं खवत्। उत्तरदन्तमूलाधोभागस्थानविवृतमध्यजिह्वाग्रकरणविवृतप्रयत्नार्धमात्राकालपराङ्गभूतभूमिदेवताकशूद्रजात्यूष्मसंज्ञासहितः सकारः।

**≍क** = जनितान्तं खवत्। जिह्वामूलोपरिभागस्थानविवृतमध्यतदधोभागकरणविवृतप्रयत्नार्धमात्राकालपूर्वाङ्गभूतसूर्यदेवताकशूद्रजात्यूष्मसंज्ञासहितो जिह्वामूलीयः।

**≍प** = जनितान्तं खवत्। उत्तरोष्ठस्थानविवृतमध्याधरोष्ठकरणविवृतप्रयत्नार्धमात्राकालपूर्वाङ्गभूतसूर्यदेवताकशूद्रजात्यूष्मसंज्ञासहित उपध्मानीयः। पक्षे श्वासस्थाने अतिश्वासेति।

**ह ( कण्ठ्यः )** = जनितान्तं घवत्। कण्ठोपरिभागस्थानतदधोभागकरणविवृतप्रयत्नार्धमात्राकालपूर्वाङ्गभूतचन्द्रदेवताकशूद्रजातिकण्ठ्यसंज्ञासहितो हकारः। पक्षे उरःस्थान-उरःकरणेति भेदः।

**ह (नासिक्यः)** = जनितान्तं घवत्। नासिकोपरिभागस्थानतदधोभागकरणविवृतप्रयत्नाणुमात्राकालपूर्वाङ्गभूतचन्द्रदेवताकशूद्रजातिनासिक्यसंज्ञासहितो हकारः। परे तु हकारध्वनिजनितनासिकोरःस्थानतत्करणविवृतप्रयत्नचन्द्रदेवताकशूद्रजातिपूर्वपराङ्गभूतोष्मसंज्ञासहितनासिक्यत्वोरःस्यत्वोभयधर्मविशिष्टो हकारदित्वः। नकारणकारमकारेषु नासिक्यत्वम्, अन्तस्थापरेष्वौरस्यत्वमिति।

**ह (औरस्यः)** = जनितान्तं घवत्। उरःस्थानउरःकरणेति विशेषः। पक्षे समम्।

**अं (अनुस्वारः, धर्मी सगत्वः)** = स्पृष्टप्रयत्नान्तं गवत्। आद्यांशभूतगकारसहिततादृशध्वनिजनितविवृतनासिकोपरिभागस्थानतदधोभागकरणविवृतप्रयत्नैकद्विमात्राकालपूर्वाङ्गभूतसूर्यदेवताकशूद्रजात्यागमानुस्वारः। अगत्वानुस्वारे द्विमात्राकालकेवलानुस्वारसंज्ञेति भेदः।

**: विसर्गः** = जनितान्तं खवत्। कण्ठोपरिभागस्थानतदधोभागकरणविवृतप्रयत्नार्धमात्राकालपूर्वाङ्गभूतसूर्यदेवताकशूद्रजातिहल्संज्ञासहितो विसर्जनीयः। पक्षे सगत्वानुस्वार एक एव। आद्यर्धगकारो गवत्। नादध्वनिजनितोत्तरोष्ठमुखनासिकास्थानाधरोष्ठकरणस्पृष्टप्रयत्नसूर्यदेवताकवैश्यजात्यपरार्धानुनासिकद्विमात्रागमपूर्वाङ्गानुस्वारेति पाठः। विसर्गे हकारध्वनिजनितकण्ठस्थानेति विशेषः।

**स्वरभक्तिः** = अंशद्वयवतीयं स्वरभक्तिः। आद्यांश ऋकारः स्वरः। स्वरलक्षणं प्राग्वत्। अपरांशो रेफो व्यञ्जनात्मकः। रेफलक्षणं च प्राग्वत्। उभयत्राणुरेव मात्रा। एवं स्वरव्यञ्जनयोः क्रमेण लक्षणमुक्त्वा स्वरव्यञ्जनोभयात्मकधर्मत्रयरहितोच्चरित-

संवृतकरणव्यञ्जनादेयार्धमात्राकालपूर्वाङ्गभूता करेणुस्वरभक्तिः। एवं पञ्चापि स्वरभक्तयः। बर्हिर्यजतीत्यादिशीच्चोक्तिरप्यत्रोन्नेया। इयं च—अजन्ता, हलन्तेति द्विविधा। ऋकारोऽशद्वयवान्। तथा रेफश्च। तत्राद्यांश ऋकारः, आद्यांशो रेफश्चेति एका हलन्ता। एवं रेफांश ऋकारांशश्चेति अजन्ता स्वरभक्तिरिति विवेकः।

**ळ (दुश्लिष्टः)** = संवृतेत्यादि डकारवत्। विवृतः प्रयत्नः। सूर्यो देवता। शूद्रो जातिश्चेति विशेषः।

**कम्पः** = संवृतकण्ठोत्थितसंवाराख्यबाह्यप्रयत्नसहितनादध्वनिजनितोपर्महृतहनुतालुस्थानेपत्संनिकृष्टोष्ठजिह्वामध्यकरणविवृतप्रयत्नाणून्यूनद्विमात्रिकच्चैप्रादिगुणकपूर्वांशसहितानुदात्तगुणकापरांशोदात्तगुणकाणुकोभयांशद्विमात्रिकवायुदेवताकब्राह्मणजात्यादिसहितच्चैप्रादिसंज्ञकः कम्प एकारः।

पक्षे—चन्द्रदेवताकवैश्यजातिराजसगुणसहितानामिकाङ्गुल्यन्त्यरेखान्यासयोग्याध्येतृदेहदैर्घ्यह्रस्वत्वध्वनिकाठिन्यमार्दवकण्ठाकाशकृशत्वमहत्त्वसमाहारजनितगजबृंहिततुल्यनिषादस्वरहेतुभूतकर्णमूलस्थानोद्भवमृदुतरप्रयत्नाद्यार्धांशत्रिपादाधिकैकमात्रिकस्वरित-अग्निदेवताकक्षत्रियजातितामसगुणसहितानामिकाङ्गुल्याद्यरेखान्यासयोग्याध्येतृदेहह्रस्वत्वध्वनिमार्दवकण्ठाकाशमहत्त्वजनितवृषभरुततुल्यऋषभस्वरहेतुभूतहृदयस्थानोद्भवोत्तरांशाणुमात्रिकनिहतोभयांशसंमेलितद्विमात्रिकदीर्घस्वरितः कम्प एकारः। एवमोकारस्यापि यथालक्षणमूहनीयम्।

**रङ्गप्लुतः** = संवृतकण्ठोत्थितसंवाराख्यबाह्यप्रयत्नसहितनादध्वनिजनितनातिव्यस्तहनुस्थानतथाभूतोष्ठकरणविवृतप्रयत्ननिरनुनासिकहृदयकमलोत्थिताद्यांशभूतद्विमात्राकालकांस्यघण्टानादतुल्यकम्पसहितमूर्धस्थानजनिततृतीयांशभूतैकमात्रिकश्रुतिसुखाव्यक्तसूक्ष्मनादसहितनासिकाबिलद्वयविनिःसृततुरीयांशभूतैकमात्रिकसौराष्ट्रिकनारीस्वरसमाद्यन्तचातुर्मात्रिकभूमिदेवताकब्राह्मणजातिसात्त्विकगुणसहिततर्जन्यङ्गुलिमध्यरेखान्यासयोग्यशारीरायामश्लक्ष्णीकृतगलबिलविनिःसृतपरुषध्वनिकाऽजारुततुल्यगान्धारस्वरहेतुभूतमूर्धस्थानोत्पन्नोदात्तगुणसहितवायुदेवताकब्राह्मणजात्यवर्णरङ्गप्लुतः। रङ्गदीर्घस्य द्विमात्रतायां विशेषः।

पक्षे सुश्लोका ४ इत्यत्र अल्पश्वासध्वनिजनितहनुमूलस्थानजिह्वामूलकरणस्पृष्टप्रयत्नार्धमात्राकालवायुदेवताकब्राह्मणजातिपराङ्गभूतप्रथमस्पर्शसंज्ञासहितककार-

नादध्वनिजनिताऽल्पोपश्लेषातिविश्लेषहनुस्थानाल्पोपसंहृताति विवृतोष्ठकरणविवृतप्रयत्नवायुदेवताकब्राह्मण जातिप्लुतसंज्ञासहितसात्त्विकगुण सहितभूमिदेवताकब्राह्मण जातितर्जन्यङ्गुलिमध्यरेखान्यासयोग्याध्येतृदेहदैर्घ्यध्वनिकाठिन्यकण्ठाकाशकृशत्व जनिता जारुततुल्य गान्धारस्वरहेतुभूतमूर्धस्थानोद्भवनिरनुनासिकाद्यर्धहृदयकमलोत्थितशार्दूलरुतोपमितमन्द्रध्वनिसंयुतपूर्वभागस्थितांशभूतद्विमात्रिकमूर्धस्थानजनितकांस्यघण्टानादतुल्यकम्पविशिष्टमध्यमभागतृतीयांशभूतैकमात्रिकनासिकाबिलद्वयविनिःसृतश्रुतिसुखाव्यक्तसूक्ष्मनादसहितापरार्धतुरीयांशभूतैकमात्रिकसौराष्ट्रिकनारीतक्रविक्रयस्वरतुल्यस्वराद्यन्तचातुर्मात्राकालोदात्तावर्णरङ्गप्लुतः । एवं रङ्गदीर्घस्यापि बोध्यम् । मात्रायां विशेषः ।

वर्णक्रमोक्तिसमये वक्तव्यवचनैः सह ।
प्रातिशाख्यप्रमाणेन यथामति विवेचितः ॥
तथापि शीक्षावचसामनुरोधादपीरितः ।
वर्णसारोऽयमत्यन्तमुपकुर्यात् स्वधीतिनाम् ॥

## २४. अथ पारिभाषिकपदार्थसूची

वर्णक्रमविवेकेऽस्मिन् कारिकावर्तिनामथ ।
पारिभाषिकशब्दानामर्थः संसूच्यतेऽधुना ॥

**अघोषाः** = हं विनोष्माणः पञ्च, विसर्गः, प्रथमे द्वितीयाश्च वर्णाः ।

**अनुदात्तः** = ताल्वादिस्थानाधोभागोत्पन्नोऽश्लिष्टः स्वरः ।

**अनुनासिकः** = नासिकयोच्चार्यमाणोऽनुस्वारः, उत्तमश्च वर्णः ।

**अनुवाकः** = अनेकेषामृग्यजुषां वैदिकः सांकेतिको विरामविशेषः । अनेकपञ्चाशदात्मकः, क्वचित् पञ्चाशदन्तोऽपि ।

**अनुस्वारः** = अमः संज्ञा । स्वरव्यञ्जनाभ्यामश्लिष्टो व्यञ्जनत्वाभिमतश्च । एष सगत्वागत्वाभ्यां द्विविधः । शषपरश्चेत् केवलः । शान्तिःशा-सरूपोऽपिकेवल एव ।

**अन्तस्थाः** = यरलवा वर्णाः ।

**अभिनिहतः** = नीचेऽकारे उच्चयोरेदोतोर्भवन् स्वरितविशेषः ।

**अम्भसि** = तैत्तिरीयारण्यके १० प्रश्नः ।

**अर्कः** = शीक्षामतेनानुप्रदानश्चतुर्थः, सूर्यश्च देवता ।

## वर्णक्रमविवेकः

**अर्धान्तः** = ऋचोऽर्धस्य विरामः। प्रायः सांहितिकः।

**अवग्रहः** = समस्ते पदे पूर्वपदम्, वैदिकमात्रविषयः।

**अष्टकम्** = तैत्तिरीयब्राह्मणे अष्टानां प्रश्नानां समूहात्मकः। छत्रिन्यायेन तृतीयाष्टकस्यापि संज्ञा।

**आत्रेयी** = आत्रेयर्षिप्रवर्तितपदसमाम्नायरूपा।

**आरण्यशीक्षा** = तैत्तिरीयारण्यकमात्रविषयो लक्षणग्रन्थः। अरुणऋषिदृष्टतयारुण्येत्यपि स्थाने।

**आरण्याः** = अरण्येऽधीयमानाः।

**इङ्ग्यम्** = असंख्यानेऽवान्तरानेकपदात्मकम्, संख्याने त्वेकम्। परम् इङ्ग्यपदविभागेऽवग्रहोत्तरयोरपि पृथक्पदत्वमस्ति, स्वस्य निमित्तकार्यभाग्भावे लाक्षणिकैः पदत्वोरीकारात्।

**ईषत्स्पृष्टम्** = अन्तस्थानामाभ्यन्तरप्रयत्नविशेषः।

**उच्चकम्पः** = कठमात्रविषय उदात्तकम्पः। न कश्चनानुवाके तु शाखान्तरीयानुवादादत्राग्रहणं तस्य।

**उत्तमाः** = स्पर्शेषु पञ्चमाः। ङञणनमाः। नित्यनासिक्याह्वाः।

**उदात्तः** = ताल्वादिस्थानोर्ध्वभागोत्पन्नोऽश्लिष्टः स्वरविशेषः।

**उद्धृतः** = उत्तरदन्तस्य।

**उपध्मानः** = पफवर्णोर्ध्वकस्य विसर्गस्य संज्ञा।

**उपसर्गः** = क्रियापदाव्यवहितपूर्वभावी सन्नर्थान्तरद्योतकपृथक्पदात्मकः। यो ह्यादिप्राप्तौ क्वचिदवग्रहोऽपि।

**ऊष्माणः** = शषसहᳲकᳳपा वर्णाः।

**कठाः** = तैत्तिरीयब्राह्मणान्तर्गताः कठप्रवर्तितशाखाभेदाः।

**कम्पः** = द्विस्वारसमावेशजः। अयं स्वरितोदात्तभेदेन द्विविधः। उदात्तस्तूक्तः। स्वरितस्तु कठादन्यत्र। स च केवलसांहितिकः।

**करणम्** = वर्णसामान्ये उच्चारणप्रभवताल्वाद्यवयवविशेषः।

**करेणुः** = हकारपरकरेफस्वरभक्तिः।

**कर्विणी** = हपरकलकारस्वरभक्तिः।

**काण्डः** = अनेकप्रश्नसमुदायः प्रकरणसमाप्तिरूपः।

**कामिता** = कटपयादिसंकेतिता ( ६५१ ) संख्या।

**कोनुवीरः** = कटपयादिसंकेतिता ( २४०१ ) संख्या ।
नकोवीरः ( २४१० ) इति वा पाठः ।

**क्रमः** = त्रिविधसमाम्नायान्तर्गतः । पदद्वयसंहितात्मकः ।

**क्षत्राः** = क्षत्रियजातयः ।

**क्षैप्रः** = उदात्तेवर्णोकारस्थानिकयवयोः परत्र विद्यमानोऽनुदात्तः स्वरितश्चेत् सः

**घनः** = पदत्रयविषयकः, आद्यन्तक्रमव्युत्क्रमसंहितावान् ।

**घोषाः** = हः, अनुस्वारः, ३, ४, ५ माः, अन्तस्थाश्च ।

**चतुर्थाः** = स्पर्शेषु चतुर्थाः, घझढधभाः ।

**चागमः** = चकारागमः ।

**जम्भ्यः** = हनुमूलप्रान्तभाग उपर्यधश्च, उभयपार्श्वदन्तभागो वा ।

**जटा** = पदद्वयविषयिणी, क्रमव्युत्क्रमसंहितात्मिका ।

**जिह्वामूलः** = कखपरो विसर्गः ।

**तद्भवाः** = प्रकृतिभूतब्रह्मात्मशब्दप्रभवाः ।

**तद्द्वितीयाः** = स्पर्शान्तस्थास्वरोष्मणां द्वितीयाः ।

**तारः** = शिरस्यभ्याहतान्तरवायोरुद्भवोऽभ्यधिकध्वनिविशेषः ।

**तृतीयाः** = स्पर्शेषु तृतीयाः, गजडदबाः ।

**तैरोव्यञ्जनः** = समानपदे उदात्तपूर्वः स्वरितविशेषः ।

**त्रिक्रमः** = आङुपसर्गगर्भे पूर्वोत्तरं पदद्वयम्, पूर्वपदमन्तोदात्तं चेत् । एवं त्रयाणां क्रमो हि त्रिक्रम इति ।

**दधिपूराः** = कटपयादिसंकेतिताः (२१९८) ।

**दशिनी** = दशानां वाक्यानां समुदायरूपा, अधीतिसौकर्याय प्राग्भिः प्रवर्तिता ।

**दीर्घः** = आयतो द्विमात्रिकः, मात्रापेक्षयाऽस्यायतत्वात् ।

**दीर्घरङ्गः** = कठशाखान्तर्गतः प्लुतसधर्मा, भृगुस्थश्च ।

**दीर्घस्वारः** = संयुक्तपरः (अन्तश्च) स्वरितः ।

**दुश्लिष्टः** = लकारः ।

**द्वितीयाः** = स्पर्शेषु द्वितीयाः, खछठथफाः ।

**धृतः** = प्रचयः स्वारोत्तरानुदात्तस्योदात्तसमः स्वरविशेषः ।

**नादः** = स्वरघोषवर्णोत्पादकध्वनिः संकुचितकण्ठभवः ।

**नासिक्याः** = यमाः, उत्तमे परेऽनुत्तमेभ्यस्तत्समाः स्पर्शाः, अनुस्वारः, उत्तमाः, एते नित्या भवन्ति ।

**नित्यः** = अखण्डपदस्थो नीचपूर्वोऽपूर्वो वा सयः सवश्च स्वरो यत्र स्वर्यते स स्वरितः ।

**पञ्चमाः** = स्पर्शेषु तादृशाः, ङञणनमाः ।

**पञ्चाशत्** = तैत्तिरीयसंहितामात्रविषयः ५० पदसमुदायरूपः, किञ्चिन्न्यूनाधिकतायामप्ययं व्यवहारः ।

**पदम्** = समाम्नायरूपः, संख्यानयोग्यं सुप्तिङन्तमपि ।

**पाकवती** = समानपदविवृत्तिविरामः ।

**पादवृत्तः** = भिन्नपदयोर्विवृत्तौ दृश्यमानः स्वरितः ।

**पारक्षुद्रम्** = तैत्तिरीयब्राह्मणे ३ अष्टकानि ।

**पिपीलिका** = नानापदीयसवर्णदीर्घविवृत्तिविरामः ।

**पुरोडाश्यम्** = उभा वां वर्ज्यमिषे प्रश्नः ।

**पृक्तः** = ऋवर्णो लकारश्च ।

**प्रग्रहाः** = इतिशब्दोत्तरद्योतिताः पदान्ता ईदूदेदोतो वर्णा अनवग्रहस्थाः ।

**प्रचयः** = धृतपदं द्रष्टव्यम् ।

**प्रथमाः** = स्पर्शेष्वाद्याः; कचटतपा वर्णाः ।

**प्रश्नः** = अनुवाकसमुदयो नानाप्रकरणात्मा ।

**प्रश्लिष्टः** = उच्चनीचयोरुवर्णयोः सन्धौ भवः स्वरितः ।

**प्रातिहतः** = अविवृतिविग्रये पदयोरव्यक्तिदशायामुदात्तात् परो हि स्वरितः ।

**प्लुतः** = मात्रामतिक्रम्य प्लवनात् प्लुतः २, ३, ४ मात्रिकः ।

**बर्स्वः** = दन्तमूलोपरिभागो, मांसलो देशः ।

**ब्राह्माः** = ब्रह्मजातयः ।

**भवः** = सांकेतितः (४४) संख्याकः ।

**भूतभूधरः** = सांकेतिकः (२६४६४) संख्याकः ।

**भौमकाः** = भूमिदेवताकाः ।

**मध्यमा** = नानापदस्थसवर्णयोर्विरामः ।

**मध्यमाः** = स्पर्शेषु तृतीयाः ।

**मन्द्रः** = उरस्याहतस्यान्तरवायोरुद्भवो ध्वनिविशेषः ।

**मात्रा** = अङ्गुलिस्फोटनसमसमयः ।

**मेधः** = अश्वमेधः ।

**यजुः** = वेदान्यतमः । अपादलक्षणो वाक्यसमूहश्च ।

**यमाः** = नासिक्याः ।

**रङ्गः** = ४ मात्रिको रङ्गप्लुतः, २ मात्रश्चेद् रङ्गदीर्घः ।

**लक्ष्यम्** = अनिमित्तं समाम्नातद्वित्वादि ।

**वत्सानुसृतिः** = असवर्णाचोर्विवृत्तिविरामः ।

**वाकाः** = अनुवाकाः ।

**विक्रमः** = पूर्वोत्तरस्थनीचान्यस्वरमध्यस्थनीचः स्वरः ।

**विधिः** = ब्राह्मणम् ।

**विवृत्तिः** = द्वयोरचोरसन्धिः ।

**विसर्गः** = अः इति व्यञ्जनम्, हृदयस्थवायुना कण्ठेऽभिहत्योच्चारितो वर्णः ।

**श्लोकाद्याः** = सुश्लोका इत्याद्याः ।

**श्वासः** = अघोषजनको ध्वनिविशेषः ।

**संस्थाः** = पाकहविः सोमाख्याः संस्थाः । अत्र प्राचां सांकेतिको व्याहारः—

औपावैपाष्टमासिश्रा सर्पेशौ पाकयज्ञकाः ।
होत्रेष्ट्याग्रयचातुर्निरूसौपिण्डा हविर्ह याः ॥
अग्निष्टोत्युक्थ्यषोवाजातिराप्तोर्याश्च सोमकाः । इति ।

**संहिता** = विविधविषयवाक्यानां निरन्तरः संनिकर्षः । लाक्षणिकाः पदाक्षरवर्णाङ्गानामपि तां भणन्ति । यथा प्रातिशाख्ये—

४, ५, ६, ११, १३ पदसंहिता ।
१० अक्षरसंहिता ।
१३, १४ वर्णसंहिता ।
२१ अङ्गसंहिता ।

शीक्षास्वप्येवमूह्या ।

**सभा** = सांकेतिकी (४७) संख्या ।

**सहस्रधनिकाः** = सांकेतिकी (१०६२८७) संख्या ।

**स्थानम्** = उच्चारणहेतुताल्वाद्युपसंहाराधिष्ठानभागः ।

**स्पर्शाः** = काद्या मान्ता वर्णाः ।

**स्पृष्टम्** = स्पर्शानामाभ्यन्तरप्रयत्नः ।

**स्वमध्यमाः** = उपसर्गमध्यमाः ।

**स्वरभक्तिः** = ऋॡस्वरयुक्तौ ऋॡवर्णौ ।

**स्वरितः** = उच्चनीचसमाहारः । असांहिते उदात्तोत्तरभावि अनुदात्तस्थानिकः स्वरः ।

**स्वारः** = अङ्गप्रकरणेऽनुस्वारः स्वरितश्च । स्वारकम्पस्यार्थश्च कम्पपदे द्रष्टव्यः ।

**हकारः** = हृचतुर्थमात्रवर्णानामुत्पादको ध्वनिः ।

**हरिणी** = शषसपरऋकारस्वरभक्तिः ।

**ह्रस्वाः** = ( धर्मी ) मात्रिका अचः ।

**इति पारिभाषिकपदार्थसूची ।**

अघनाशपुरीख्यातश्रीकृष्णशर्मणः सुतः ।
वासिष्ठस्यात्मजोऽनन्तपूर्वो नारायणः स्वयम् ॥
वर्णक्रमविवेकाख्यमिमं शीक्षादिसंमतम् ।
कारिकाभिः पदार्थैश्च वर्णानां पञ्चभिः क्रमैः ॥
विदुषां मोदमाधातुं निबन्धं व्यलिखन्नवम् ।
अनेन प्रीयतां लोकजननीप्रभुरव्ययः ॥

——

# जगत्सर्गप्रयोजनम्

श्रीरघुनाथशर्मा, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी ।

भोगापवर्गसिद्ध्यर्थं जगत्सर्गं वितन्वतीम् ।
विद्याऽविद्याविभागेन परमां प्रकृतिं नुमः ॥

अथातो जगत्सर्गप्रयोजनचिन्ता । सर्वा हि प्रेक्षावत्कर्तृका सृष्टिर्लोके फलकामिनो दृष्टा । एष च जगत्सर्गो भूतग्रामसमुदायहेतुकः स्वाभाविकः, प्रकृतिकर्तृकः, चेतनावत्कर्तृको वा भवेत्; सर्वथाऽपि स्रष्टुः फलकामित्वं न संभवति, अचेतने फलकामनाया असंभवात् । चेतनेऽपि मनसाऽप्यचिन्त्यरचनारूपस्य जगतोऽस्मद्विलक्षणे सर्वज्ञे सर्वशक्तौ सर्वेश्वरे आप्तकामे स्रष्टरि तस्या असंभव एवेति । तत्प्रसिद्ध्या उपपादितं कविभिः—

विदितं वो यथा स्वार्था न मे काश्चित्प्रवृत्तयः ।
ननु मूर्तिभिरष्टाभिरित्थंभूतोऽस्मि सूचितः ॥ इति ।

तत्र जगत्सर्गे दर्शनभेदेन बहुधा विप्रतिपत्तयो वादिनां दुरधिगमत्वादस्यार्थस्योपलभ्यन्ते । ता अनुसृत्यैव यथाक्रमं सर्गफलं प्रविचिन्त्यते । तत्रापि दर्शनानामारोहक्रमेणैव तदारभ्यते । तत्र यद्यपि सर्वेष्वपि दर्शनेषु स्रष्टरि चेतनेऽचेतने वा सर्गफलं न संभवति, तथापि स्रष्टव्ये तु संभवत्येवेति धिया तद्विविच्यते ।

## चार्वाकमतम्

तत्र प्रथमं प्रत्यक्षमात्रप्रामाण्याभ्युपगन्ता देहात्मवादी चार्वाकः समुपतिष्ठते । नास्ति कश्चनास्मदादिविलक्षणो जगत्स्रष्टा, प्रत्यक्षानुपलम्भात्; प्रत्यक्षातिरिक्तस्य च प्रामाण्यानुपगमात् प्रत्यक्षातिरिक्तप्रमाणखण्डने च प्रासङ्गिके गौरवाद् बिभ्यता उदास्यते । तत्र पृथिव्यादीनि चत्वारि भूतानि तत्त्वानि, तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यो मदशक्तिवत् चैतन्यमुपजायते; तेषु विनष्टेषु सत्सु स्वयं विनश्यति । तच्चैतन्यविशिष्टो देह एवात्मा, देहातिरिक्ते आत्मनि प्रमाणाभावात् । अङ्गनालिङ्गनादिजन्यं सुखमेव भोगरूपं पुरुषार्थः । अनुमानानङ्गीकारे तत्साध्यादृष्टेश्वरस्वर्गादिकं नास्ति । जगत्सर्गस्तु चतुर्भ्यो भूतेभ्यः स्वभावादिति । तदेतत्सर्वं समग्राहि सर्वदर्शनसंग्रहे समुद्धृतपद्यैः—

अत्र चत्वारि भूतानि भूमिवार्य्यनलानिलाः ।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते ॥
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत् ।
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः ॥
देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः ।
अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथाऽनिलः ।
केनेदं चित्रितं तस्मात् स्वभावात्तद् व्यवस्थितिः ॥ इति ।

तथा च चार्वाकमते जगत्सर्गस्य स्वाभाविकत्वेऽपि स्रष्टव्येषु जन्तुषु भोगरूपं फलं सर्गायत्तमेवेति निष्कर्षः ।

## बौद्धमतम्

बौद्धास्तु चत्वारः—वैभाषिकः, सौत्रान्तिकः, विज्ञानवादी योगाचारः, शून्यवादी माध्यमिकश्च । एष च संज्ञाभेदो भगवतस्तथागतस्य देशनाभेदेन । तथा हि बाह्येषु गन्धादिषु, आन्तरेषु रूपादिस्कन्धेषु च सत्स्वपि तत्रानास्थामुत्पादयितुं सर्वं शून्यमिति प्राथमिकान् विनेयानचीकथद् भगवान्, अपरांस्तु विज्ञानमात्रग्रहाविष्टान् विज्ञानमेवैकं सदिति, अन्यांस्तूभयं सत्यमित्यास्थितान् विज्ञेयमनुमेयमिति[१] विरुद्धां भाषाम्। सूत्रस्यान्तं पृच्छतां भवन्तश्च सूत्रस्यान्तं पृष्टवन्तः[२] सौत्रान्तिका भवन्त्विति च । तदुक्तं बोधिचित्तविवरणे—

देशना लोकनाथानां सत्त्वाशयवशानुगाः ।
भिद्यन्ते बहुधा लोके उपायैर्बहुभिः किल ॥
गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणा ।
भिन्ना हि देशनाऽभिन्ना शून्यताद्वयलक्षणा ॥ इति ।

---

१. विरुद्धां भाषां वर्णयन्तो वैभाषिकाख्ययाख्याताः. अभिधर्मविभाषाया अभ्युपगमाद् वा । तदुक्तं स्फुटार्थायां विवृतौ [१।३] कारिकाव्याख्याने—"विभाषया दीव्यन्ति चरन्ति वा वैभाषिकाः, विभाषां वा विदन्ति वैभाषिकाः" इति ।

२. सूत्रस्यान्तोऽवसानमर्थनिर्णयो निर्णीतार्थस्तमधिकृत्य श्रद्धया प्रवर्तमानाः सौत्रान्तिका इति । तदुक्तं स्फुटार्थायां विवृतौ [१।३] कारिकाया व्याख्यावसरे—"कः सौत्रान्तिकार्थः, ये सूत्रप्रमाणका न तु शास्त्रप्रमाणकास्ते सौत्रान्तिकाः" इति ।

तत्र वैभाषिकाणामस्ति विज्ञानाद् व्यतिरिक्तो बाह्योऽर्थः सामान्यविशेषाभ्यामनेकात्मकतया प्रत्यक्षोऽनुमेयश्च। तथा हि सन्ति तावद् द्विविधाः परमाणवः सौत्रान्तिकवैभाषिकयोरुभयोरपि संमताः-द्रव्यपरमाणुः, संघातपरमाणुरिति। तत्र सौत्रान्तिकसमये परमाणुसंघातः प्रत्यक्षः। वैभाषिकमते परमाणुसंघातः सामान्यरूपेण (संघातरूपेण) प्रत्यक्षः, विशेषरूपेणानुमेयः। वस्तुमात्रस्याक्षयोग्यस्य प्रत्यक्षत्वमनुमेयत्वं चेति हि वैभाषिकसमयः। सौत्रान्तिकानां त्वक्षयोग्यः संघातः प्रत्यक्ष एव। न तु तदानीमेव तस्यानुमेयत्वमपि, विरोधात्। द्रव्यपरमाणवस्त्वसंघातरूपा अनुमेया एव।

विज्ञानवादिनां तु विज्ञानाकार एवार्थो नास्ति बाह्य इति—"विज्ञप्तिमात्रमेवैतदसदर्थावभासनात्" इति विंशतिकाप्रथमकारिकातः, "विज्ञप्तिमात्रमेवेदमित्यपि ह्युपलम्भतः" इति त्रिंशिकासप्तविंशकारिकातश्च, "सहोपलम्भनियमादभेदो नीलतद्धियोः" इत्यादितश्च सुप्रतीतमेव।

शून्यवादिनां तु शून्ये तत्त्वे भ्रान्तिकल्पिताः सर्वे भावाः। शून्यं तत्त्वमिति तूक्तमाचार्यनागार्जुनेन मध्यमककारिकायां निर्वाणपरीक्षायाम्—"विद्यादनन्तरं किञ्चित् सुसूक्ष्मं विद्यते" इति। भावानां सांवृतत्वं तु साधितं मध्यमकवृत्तौ प्रत्ययपरीक्षाप्रकरणे—"तदुक्तं भगवता नास्त्यत्र तथता वाऽवितथता वा, मोषधर्मकमप्येतत्, प्रलोपधर्मकमप्येतत्, मृषाऽप्येतत्। मायेयं बाललापिनी" इति। तथा—

फेनपिण्डोपमं द्रव्यं वेदना बुद्बुदोपमा।
मरीचिसदृशी संज्ञा संस्काराः कदलीनिभाः॥
मायोपमं च विज्ञानमुक्तमादित्यबन्धुना। इति।

तथा च सौत्रान्तिकानां तु विज्ञानातिरिक्त एवार्थ इन्द्रिययोग्यत्वायोग्यत्वाभ्यां प्रत्यक्षश्चानुमेयश्च। विज्ञानवादिनां तु विज्ञानाकार एवार्थः, नास्ति बाह्यः। शून्यवादिनां शून्ये तत्त्वे भ्रान्तिकल्पिता एव सर्वे भावाः, अतः संवृतिसन्तः सांवृतिका वाऽभिधीयन्ते। तत्रैवं परस्परं प्रविभागे सत्यप्याभ्यन्तराः सर्वे चित्तचैत्ताश्चतुर्भिः प्रत्ययैः संवृत्याऽसंवृत्या वा समुपजायन्त इत्यत्र न विसंवादः। तदुक्तम्—"उत्पादात्यन्तविघ्नोऽन्यो निरोधोऽप्रतिसंख्यया" इत्यभिधर्मकारिकायाः स्फुटार्थायां विवृतौ—"चतुर्भिरेव हि प्रत्ययैर्हेतुसमनन्तरालम्बनाधिपतिप्रत्ययैश्चित्तचैत्ता उत्पद्यमाना उत्पद्यन्ते, तेषामन्यतमवैकल्येऽप्यनुत्पत्तिः" इति।

तत्र चत्वारः प्रत्यया उक्ता मध्यमकवृत्तौ—

चत्वारः प्रत्यया हेतुश्चालम्बनमनन्तरम् ।
तथैवाधिपतेयश्च प्रत्ययो नास्ति पञ्चमः ॥ इति ।

[ प्रत्ययपरीक्षा० २ का० ]

चित्ते चैत्ते चाभ्यन्तरे एतेषां प्रत्ययानां समन्वयो यथा भामत्याम्—"नीलाभासस्य चित्तस्य नीलादालम्बनप्रत्ययान्नीलाकारता । समनन्तरप्रत्ययात् पूर्वविज्ञानाद् बोधरूपता । चक्षुषोऽधिपतिप्रत्ययाद् रूपग्रहणप्रतिनियमः । आलोकात् सहकारिप्रत्ययात् स्पष्टार्थता । एवं सुखादीनामपि चैत्तानां चित्ताभिन्नहेतुजानां चत्वार्येतान्येव कारणानि" इति ।

तदेवं बाह्यं भूतं भौतिकं चाभ्यन्तरं चित्तं चैत्तं च सर्वमपि चतुर्भिः प्रत्ययैर्भवतीति सिद्धम् । मध्यमकस्यैतत् प्रत्याख्यानं तु परमार्थदृष्ट्या । किञ्च, सर्वं जायमानं हेतूपनिबन्धतः प्रत्ययोपनिबन्धतश्च जायत इत्यत्रापि संवाद एव ।

तत्र हेतूपनिबन्ध एकैककारणसंबन्धः, प्रत्ययोपनिबन्धः कारणसमुदायसंबन्धः । सर्वस्य च प्रतीत्यसमुत्पादरूपत्वम् । प्रतीत्यसमुत्पादपदस्य च द्विधा व्याख्या दर्शिता मध्यमकवृत्तौ चन्द्रकीर्तिना—"तत्र प्रतीत्य इति प्राप्येत्यर्थकं ल्यबन्तम् । हेतुप्रत्ययौ प्राप्य समुत्पादः प्रतीत्यसमुत्पाद इत्येकः पक्षः । एतिर्गत्यर्थः, तस्मात् कर्तरि बाहुलकाद् अच्, यन्ति गच्छन्ति विनश्यन्तीति इत्या विनाशिनः । प्रतिशब्दश्च वीप्सार्थे । प्रति प्रति इत्यानां समुत्पादः" इति । अत्रापि हेतुप्रत्ययावेव प्रत्यर्थवीप्साविषयौ, हेतुप्रत्ययौ प्रति प्रतीत्यर्थः । तदेवं प्रकारद्वयमाश्रित्यापि जगत्सर्गे कश्चन स्रष्टृत्वाभिमन्ता चेतनः प्रत्ययः पञ्चमो नास्ति, यत्र जगत्सर्गफलं कल्प्येत । तथा च बौद्धानामपि जगत्सर्गायत्तावेव भोगापवर्गौ फले जीवानाम् ।

तत्र वैभाषिकस्यापवर्गस्वरूपम्—"उत्पादात्यन्तविघ्नोऽन्यो निरोधोऽप्रतिसंख्यया" इति कारिकाव्याख्याने स्फुटार्थायाम्—"तदेवंजातीयकानामनागतानां धर्माणां प्रत्ययवैकल्यात् प्रतिसंख्यामन्तरेणोत्पादस्य नियतरोधभूतो यो धर्मः सोऽप्रतिसंख्यानिरोध इत्युच्यत इति वैभाषिकाः" [ पृ० ३० ] इत्युक्त्या दर्शितम् । अत्र च धर्मत्वोक्त्याऽप्रतिसंख्यानिरोधस्य द्रव्यसत्त्वमुक्तम् ।

सौत्रान्तिकास्त्वतीतानां क्लेशानामनागतानां च प्रतिसंख्याऽप्रतिसंख्यानिरोधद्वयरूपं प्रहाणम्, अतीतानां निवृत्तिरूपमनागतानां चानुत्पादरूपमेव निर्वाणं न तु तद् द्रव्यसदिति मन्वते ।

विज्ञानवादिनस्तु निर्वाणस्वरूपं विज्ञप्तिमात्रतासिद्धौ त्रिंशिकायाम्—"समनालम्ब्या

लम्बकं निर्विकल्पं लोकोत्तरं ज्ञानमेव निर्वाणम्" इति। तदुक्तम्—"कदा पुनर्विज्ञानग्राहस्य प्रहाणं चित्तमात्रतायां वा प्रतिष्ठितो भवतीत्यत आह—

यदा त्वालम्बनं ज्ञानं नैवोलभते तदा।
स्थितो विज्ञानमात्रत्वे ग्राह्याभावे तदग्रहात् ॥" [ त्रिंशिका, २८ ] इति।

यदैवं विज्ञप्तिमात्रतायां चित्तमवस्थितं भवति तदा कथं व्यपदिश्यत इत्याह—

अचित्तोऽनुपलम्भोऽसौ ज्ञानं लोकोत्तरं च तत्।
आश्रयस्य परावृत्तिर्द्विधा दौष्ठुल्यहानितः ॥
स एवानास्रवो धातुरचिन्त्यः कुशलो ध्रुवः।
सुखो विमुक्तिकायोऽसौ धर्माऽख्योऽयं महामुनेः ॥ [ त्रिंशि० २९-३० ]

माध्यमिकानां तु सर्वप्रपञ्चसंस्कारोपशम एव शान्तः शिवो निर्वाणम्। तदुक्तम्—

अनिरोधमनुत्पादमनुच्छेदमशाश्वतम्।
अनेकार्थमनानार्थमनागमगनिर्गमम् ॥
यः प्रतीत्यसमुत्पादं प्रपञ्चोपशमं शिवम्।
देशयामास संबुद्धस्तं वन्दे वदतां वरम् ॥ [ मध्यमकवृ० ११ पृष्ठे ]
अनित्यास्ते तु संस्कारा उत्पादव्ययधर्मिणः।
उत्पद्य हि निरुध्यन्ते तेषां व्युपशमः सुखः ॥ [मध्यमकवृ० ३८ पृष्ठे ]

किञ्च, फेनपिण्डोपमं द्वयमित्यादिप्रागुक्तमध्यर्धश्लोकमुपन्यस्योक्तम्—

एवं धर्मान् वीक्षमाणो भिक्षुरारब्धवीर्यवान्।
दिवा वा यदि वा रात्रौ संप्रजानन् प्रतिस्मृतः ॥
प्रतिविध्येत् पदं शान्तं संस्कारोपशमं शिवम् ॥ इति ॥

[ मध्यमकवृ० ४२ पृष्ठे ]

## जैनमतम्

जैनास्तु जीवाजीवौ, धर्माधर्मौ, आस्रवः, संवरः, निर्जरणम्, बन्धः, मोक्षश्चेति नवतत्त्वानि। तत्र जीवा द्विविधाः—संसारिणः, मुक्ताश्च। भवाद् भवान्तरप्राप्तिमन्तः संसारिणः। ते च द्विविधाः—समनस्काः, अमनस्काश्च। तत्र संज्ञिनः समनस्काः। शिक्षाक्रियालापग्रहणरूपा संज्ञा। तद्विधुरास्त्व-मनस्काः। ते चामनस्का द्विविधाः—त्रसस्थावरभेदात्। तत्र द्वीन्द्रियादयः शङ्खगण्डोलकप्रभृतय-श्चतुर्विधास्त्रसाः। पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः। स्थावराश्च स्पर्शनैकेन्द्रियाः। तत्र

पृथिव्यादीनां चतुर्णां प्रत्येकं चत्वारो भेदाः । तद् यथा—पृथिवी, पृथिवीकायः, पृथिवीकायिकः, पृथिवीजीवः । तत्र मार्गगता धूलिः पृथिवी, इष्टकादिः पृथिवीकायः, पृथिवी कायत्वेन येन गृहीता स पृथिवीकायिकः, पृथिवीं कायत्वेन यो ग्रहीष्यति स पृथिवीजीवः । तत्र पृथिवीजीव एव स्थावरत्वेन गृह्यते, जीवत्वात् । भवान्तरप्राप्तिविधुरा मुक्ताः । धर्माधर्माकाशास्तिकायास्ते एकत्वशालिनो निष्क्रियाश्च । यतो द्रव्यस्य देशान्तरप्राप्तिहेतू धर्माधर्मौ प्रसिद्धौ । अन्यवस्तुप्रदेशमध्येऽन्यवस्तुप्रवेशोऽवगाहः, तदाकाशकृत्यम् । स्पर्शरसवर्णवन्तः पुद्गलाः । ते च द्विविधाः—अणवः, स्कन्धाश्च । भोक्तुमशक्या अणवः, द्व्यणुकादयः स्कन्धाः । तत्र द्व्यणुकादिस्कन्धभेदादण्वादिरुत्पद्यते । अण्वादिसंघाताद् द्व्यणुकादिरुत्पद्यते । अत एव पूरयन्ति गलन्तीति पुद्गलाः । कालस्यानेकप्रदेशत्वाभावेनास्तिकायत्वाभावेऽपि द्रव्यत्वमस्ति, तल्लक्षणयोगात् । गुणपर्यायवद् द्रव्यमिति । कायवाङ्मनःकर्मयोगः कर्मवासनारूप आस्रवः । स च शुभाशुभकर्मभेदाद् द्विविधः । सकषायत्वाज्जीवः कर्मभावयोग्यान् पुद्गलानादत्ते स बन्ध इति । मिथ्यादर्शनाविरतिप्रमादकषाया बन्धहेतवः । आस्रवनिरोधः संवरः । येनात्मनि प्रविशत्कर्म प्रतिषिद्ध्यते स गुप्तिसमित्यादिः संवरः । संसारकारणाद् योगादात्मनो गोपनं गुप्तिः । आस्रवस्रोतसो द्वारं संवृणोतीति संवरः ।

संसारबीजभूतानां कर्मणां जरणादिह ।
निर्जरा सम्मता द्वेधा सकामाकामनिर्जरा ।
स्मृता सकामा यमिनामकामा त्वन्यदेहिनाम् ॥ [सर्वदर्शनसंग्रह, आर्हत० ]

बन्धहेतुभवहेतुनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षणं मोक्ष इति । तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात् ।

ज्ञानाद्भिन्नो न चाभिन्नो भिन्नाभिन्नः कथञ्च न ।
ज्ञानं पूर्वापरीभूतं सोऽयमात्मेति कीर्तितः॥ [सर्वदर्शनसंग्रह, आर्हत०]

कर्तुश्च सावयवत्वम्, निरवयवत्वे व्यापित्वविरोधात् परमाणुवत् । सर्वज्ञश्चार्हन्नेव । तस्य च सार्वज्ञमावरणक्षयसाध्यम् । नास्ति कश्चन नित्यसिद्धः सर्वज्ञ ईश्वरः । सप्तभङ्गीनयं चैते सर्ववस्तुषु स्वीकुर्वन्ति, तेन च सर्ववस्तूनामनैकान्तात्मकत्वम् । स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यः, स्यादस्ति च नास्ति चावक्तव्य इति सप्तभङ्गीनयाकारः ।

अस्मिन्नपि मते सर्वज्ञस्येश्वरस्य जगत्स्रष्टुरभावाददृष्टाधीनाऽणुहेतुकैव सृष्टिरिति नास्ति स्रष्टरि सृष्टेः फलम्, स्रष्टव्येषु तु भोगापवर्गरूपं तदस्त्येव ।

## न्यायवैशेषिकमतम्

नैयायिकानां तु यद्यप्यस्ति नित्यसिद्धः सर्वज्ञ ईश्वरो नित्यज्ञानेच्छाकृतिसम्पन्नः स्रष्टा कार्यमात्रे निमित्तकारणम्। तस्य ज्ञानेच्छाकृतीनां नित्यत्वेऽपि सदा न सृष्टिः, सृज्यमानप्राण्यदृष्टानामपि कादाचित्कानां सहकारित्वात्। एतन्मतेऽप्यदृष्टवदात्मसंयोगात् परमाण्वाद्यक्रियाद्वारिका द्व्यणुकादिसृष्टिः। कालवशेन विपक्वानामभिव्यक्तानां वाऽदृष्टानामेव कार्यारम्भकत्वमिति संसारानादित्वेन सदाऽदृष्टसद्भावेऽपि सदा न सृष्टिः। ईश्वरस्य विग्रहाभावेऽपि मणिमन्त्रादिन्यायेनालौकिकमेव कारणत्वम्। केचित्तु परमाणव एव ईश्वरस्य शरीरमित्याहुः। तन्न; अणुषु ईश्वरस्याऽभिमानाभावेन तेषां भोगायतनत्वाभावेन च शरीरत्वासंभवात्, नित्यं प्रमातरि भगवति आहार्यारोपस्याप्यसंभवाच्च। प्रतिमादौ त्वस्माकमेवाहार्यारोपरूपा शास्त्राहिता विष्णवादिबुद्धिः। तथा चैतन्मतेऽपि नित्यज्ञानादिमति भगवति न किञ्चित् सृष्टिफलं संभाव्यते। नैयायिकानां मोक्षस्वरूपं चैकविंशतिदुःखध्वंसरूपम्। "लोकवत्तु लीलाकैवल्यम्" [२।१।३३] इति वेदान्तसूत्रेष्वभिहितं लीलारूपमपि सृष्टेः फलं न संभवति, अकायस्य क्रीडाया असंभवात्। वेदान्तिनां तु मायया कायसंबन्धेन लीलासंभवः। एवं च न्यायमतेऽपि स्रष्टरि न सर्गफलं किन्तु स्रष्टव्येष्वेव भोगापवर्गरूपम्। एतत् सर्वं च वैशेषिकमतेऽपि बोध्यम्, न्यायवैशेषिकयोः प्रायः समानतन्त्रत्वात्।

## मीमांसकमतम्

मीमांसकास्तु वेदप्रामाण्यरक्षणे बद्धपरिकरा ईश्वरसत्तामेव नोपयन्ति। ईश्वरसत्त्वे हि वेदस्य तत्कर्तृकत्वे पुरुषत्वाविशेषेण तत्रापि भ्रमादिदोषसंभवेन वेदस्याप्रामाण्यापत्तिः। पर्वतसमुद्रादीनां चन्द्रसूर्यादीनां च नोत्पत्तिविनाशौ, किन्त्ववयवानामुपचयापचयावेवेति सर्गाभावे तत्फलचिन्ता दूरापेता।

## सांख्यमतम्

सांख्यानां तु प्रकृतिरेव जगत्स्रष्ट्री। नास्ति परमेश्वरस्तस्या जगत्सर्गे प्रवर्तकः। सृज्यमानप्राण्यदृष्टवशाच्चाचेतनापि प्रकृतिः सर्गे प्रवर्तते। तदुक्तम्—

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य॥ [ सां० का० ५७]

## योगमतम्

योगिनां तु यद्यप्यस्ति परमेश्वरः, तथाप्ययस्कान्तस्येव सन्निधानमात्रेण तस्य प्रकृतिप्रवर्तकत्वम्, असङ्गेऽपरिणामिनि च तत्र व्यापारासंभवात्। भगवत्सन्निधानं तु प्रकृतेर्यद्यपि शाश्वतिकम्, तथाप्यदृष्टानां कादाचित्कत्वेन जगत्सर्गकादाचित्कत्वनिर्वाहः। तथा च सांख्यानामिव

## जगत्सर्गप्रयोजनम्

१योगिनामपि पुरुषस्य भोगापवर्गाविव जगत्सर्गप्रयोजनम्। सांख्ययोगयोर्मोक्षस्वरूपं तु विवेकख्यात्या स्वरूपसाक्षात्कारेण प्रकृतिप्रवृत्तिनिवृत्तिपूर्वकं स्वस्वरूपावस्थितिरूपम्।

## वेदान्तमतम्

वेदान्तिनां तु जीवेशावाभासेन करोति। "माया च अविद्या च स्वयमेव भवति" [ नृसिंहोत्तर० ६।२ ] इति श्रुत्यनुसारेण मायाशक्त्युपहितस्येश्वरस्य जगत्स्रष्टृत्वम्। मायया च जगत्सर्गे सर्वा अप्यनुपपत्तयः परिहृता भवन्ति। तदुक्तम्—

किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं
किमाधारो धाता सृजति किमुपादान इति च।
अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः॥ इति।

[ महिम्नस्तोत्रे, श्लो० ५ ]

एतन्मते स्रष्टरि भगवति जगत्सर्गफलं केवलं लीलैव। तथा च प्रागुपदर्शितं पारमर्षं सूत्रम्—"लोकवत्तु लीलाकैवल्यम्" [ ब्रह्मसू० २।१।३३ ] इति।

गौडपादास्त्वाहुः—

देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा। [ मा० का० १।९ ] इति।

गौडपादकारिकासु चाजातिवाद एव श्रुतिसम्मतत्वेन व्यवस्थापितः। तथा चाद्वैतिनां मायिक ईश्वरः, मायिकी सृष्टिः, भोगापवर्गरूपं च स्रष्टव्येषु फलम्। अद्वैतिनामपवर्गस्तु—"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" इत्युक्तलक्षणः सच्चिदानन्दात्मरूपः।

## पुराणमतम्

पुराणेषु तु सर्गप्रकरणे क्वचित् सांख्यं क्वचिच्चाद्वैतवेदान्तशास्त्रं समाश्रितम्। यथा श्रीमद्भागवते "जन्माद्यस्य यतः" इत्यादिमे श्लोकेऽद्वैतसिद्धान्त एव समाश्रितः। मातरं प्रति कपिलस्योपदेशो सांख्यशास्त्रं समालम्बितम्।

## धर्मशास्त्रमतम्

धर्मशास्त्रेऽपि मन्वादिषु सांख्यप्रक्रियैव समादृता। एवञ्च पुराणधर्मशास्त्रादिप्रतिपादित-सर्गफलमपि सांख्यशास्त्रवेदान्तशास्त्रपद्धत्या बोध्यम्।

अन्ते च प्रत्यक्षतोऽद्वैतमतानुसारि परोक्षतश्चावसरपाठेन न्यायमतमनुसरदिदमुदयनवाक्यं जगत्सर्गे फलप्रतिपादनोद्यतमुपन्यस्य विरम्यते—

कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन्
हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीडति ।
तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवं
विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि ॥

[ न्यायकुसुमाञ्जलौ २।४ ]

# स्वर्गपातालादिविमर्शः

**श्रीमदनन्तशास्त्रिफडके, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी ।**

प्राचीनपुराणभारतादिग्रन्थावलोकनेनाधुनिकेतिहासभूगोलादिविद्वज्जनलेखाद्यालोचनेन च स्वर्गपातालनरकलोकादिविषये महान् सन्देहो विचारकाणां चेतसि प्रादुर्भवति । यतः प्राचीननवीन-मतयोः सर्वांशेन प्रायो विरोधो दृश्यते । तथा हि—जम्बूद्वीपभारतवर्षभारतविषयकमानेऽप्यनेकानि मतान्युपलभ्यन्ते ।[1] केचन स्वर्गपातालयोर्भारतवर्ष एव समावेश इत्यभिप्रयन्ति ।[2] अन्ये जम्बूद्वीप-भारतवर्षभारतानामैक्यं वर्णयन्ति । [3]अपरे पुनर्जम्बूद्वीपस्थमेरुप्रभृतिपदार्थान् काल्पनिकत्वेन लिखन्ति । एवं नरकलोकस्थानविषये सन्दिहानाः [4]केचन अमेरिकाखण्डे तत्स्थानं प्रतिपादयन्ति । तथा भारतवर्षेषु कुमारिकाखण्डं पञ्चमत्वेन वर्णयित्वा तत्प्रामाण्यं पौराणिकमिति मत्वापि तत्प्रामाण्य-विषये ज्यौतिषसंहिताग्रन्थमुपन्यस्यन्ति[5] । एवं प्लक्षादिद्वीपविषये पौराणिकं वर्णनमधुना नोप-लभ्यत इति कृत्वा सर्वथा तत्काल्पनिकमिति वदन्ति[6] । एवमस्मिन् विवादग्रस्ते विषये विज्ञपाठ-कानां पुरतः किमपि सप्रमाणमिदमीयं विमर्शजातं निवेदयितुं प्रयत्यते । तत्सूक्तासूक्तविषये विद्वांस एव प्रमाणम् ।

शीर्षकस्थादिपदेन मृत्युलोकप्लक्षादिलोकनरकादिलोका ग्राह्याः । अत्र यद्यप्यतिप्रसिद्धे मृत्वैव पुण्येन स्वर्गं जयति, पापकर्मणा च नरकम्, पातालादिकं च भूम्यन्तर्भागे जलमिव

१. श्रीसातवलेकररचिता "महाभारत की समालोचना" भाग २

२. हिन्द्याङ्ग्लपाठशालासु प्रचलितः "भारतवर्ष का इतिहास" पृष्ठ २

३. श्रीचिन्तामणिराववैद्यमहोदयविरचितः "भारत का उपसंहार"

४. श्रीचित्रावरचित 'चरित्रकोश' द्वितीयपरिशिष्टस्थनरकलोकवर्णनम् । स्वर्गीयजायसवालरचितः "अन्धकारयुगीन भारत"

५. श्रीभास्कराचार्यरचितगोलाध्यायस्थः—"ऐन्द्रं कशेरुशकलं किल ताम्रपर्णमन्यद् गभस्ति-मदतश्च कुमारिकाख्यम् ।" इति श्लोकः । एवमेतट्टीकायां मरीचिकाख्यायाम्—"ऐन्द्रं कशेरुसंज्ञं च ताम्रपर्णं गभस्तिमान् । कुमारिकाख्यं नागं च सौम्यं वारुणसंज्ञकम् ॥ गान्धर्वमिति खण्डानि नव ज्ञेयानि भारते ॥ इति वृद्धवसिष्ठोक्तेः" इति ।

६. आधुनिकं सर्वप्रसिद्धविद्वज्जनमतम् । "भारत का उपसंहार" इत्याख्यो ग्रन्थश्च ।

स्थितमिति नानेन शरीरेण गन्तुं शक्यमिति निश्चिते विषये नास्ति विचारस्यावश्यकतेति प्रतिभायादथापि सन्ति बहूनि वचनानि स्वर्ग-पाताल-नरक-मेरुप्रभृतीनां द्वैविध्यबोधकानि। यथा ता ताण्ड्यब्राह्मणस्थमेतद् वचनं दृश्यताम्—

"चतुश्चत्वारिंशदाश्वीनानि सरस्वत्या विनशनात् प्लक्षः प्रास्रवणस्तावदितः स्वर्गो लोकः। सरस्वतीसंमितेनाध्वना स्वर्गं लोकं यन्ति" [ ताण्ड्य० २५।१०।१६ ] इति।

आश्वीनो नाम—एकेन शीघ्रगामिनाश्वेन यो मार्ग आक्रम्यते एकस्मिन् दिवसे तावान् मार्गः। एवं च ताण्डिब्राह्मणनिवासस्थानाद्यद्यश्वः शीघ्रगामी प्रतिदिनं त्रिंशत्क्रोशमितं देशमाक्रामति तदा चतुश्चत्वारिंशद्दिनैः १३२० विंशत्यधिकत्रिशतोत्तरसहस्रक्रोशसंख्यया दूरः स्वर्गो गन्तुं शक्य आसीत्। तथा सरस्वतीतीरेण स्वर्गगमनमार्गश्च निश्चितः। सामवेदीयकौथुमिशाखाध्येतॄणां ताण्डिब्राह्मणानां देशो नर्मदोत्तरभागे गुर्जरदेश इति—

माध्यन्दिनी शाङ्खायनी कौथुमी शौनकी तथा।
नर्मदोत्तरभागे च यज्ञकन्याविभागिनः॥

इति महार्णववचनेन, गुर्जरदेशे कौथुमी प्रसिद्धेति चरणव्यूहटीकावचनेन च ज्ञायते। एवं चास्मिन्निबन्धे स्वर्गद्वयं मेरुद्वयं पातालद्वयं नरकद्वयं च सप्रमाणं निरूप्यते। एको मृत्वा गमनार्हः, एकश्चानेन देहेन गन्तुं शक्यः। यश्च मरणोत्तरगम्यस्तस्य स्थानं श्रुत्यादिनिर्णीतमेव, यश्च जीवनदशायां गमनार्हस्तस्य स्थानादिकं श्रुतिपुराणेतिहासादिवचनेन च ज्ञातुं शक्यत एवेति विशेषः।

अत्र पूर्वं केचन विचारणीया अपि वस्तुस्थितिबोधका अंशाः प्रदर्श्यन्ते—

( क ) पुराणस्थभूगोलादिवर्णनं क्वचित् प्रत्यक्षानुभूतमेव कृतमुपलभ्यते। यथा—भारतस्थनदीदेशपर्वतादीनाम्। क्वचित् श्रुतानुश्रुततया। यथा—महाभारतस्यादिपर्वस्थमातलिकर्तृकपातालगमनवर्णनम्। क्वचित् प्रतिभया। यथा—प्लक्षादिद्वीपानाम्। उक्तं च तत्र तत्र स्पष्टम्—

द्वीपभेदसहस्राणि सप्त चान्तर्गतानि च।
न शक्यते क्रमेणेह वक्तुं वै सकलं जगत्॥
सप्तैव तु प्रवक्ष्यामि चन्द्रादित्यग्रहैः सह।
तेषां मनुष्यतर्केण प्रमाणानि प्रचक्षते॥

[ मत्स्य० ११३।४-५ ]

एवमन्यत्र—"यथाधीतं यथा श्रुतम्" इत्युक्तम्।

( ख ) क्वचिन्मूलपुराणस्थवर्णनमेव स्वानुभवेन श्रवणादिना च विशद्य विस्तार्य च कृतमुपलभ्यते। यथा—गर्गसंहितास्थविश्वजित्खण्डगतप्रद्युम्नकृतदिग्विजयवर्णनम्। अतः सर्व-पुराणस्थाः केचन श्लोकाः सर्वत्रैकरूपा एवोपलभ्यन्ते। यथा—भारत-भारतवर्षप्रमाणवर्णनपराः, तथा भारतवर्षमाहात्म्यादिबोधकाश्च।

( ग ) यद्यपि सम्प्रति बहोः कालस्यातिक्रान्ततया पुराणादिग्रन्थस्थनगरवनपर्वतादिनाम्नां तत्तन्नाम्नैव नोपलब्धिर्यतो भिन्नभिन्ननृपाणां शासनभेदेन तत्तन्नाम्ना तत्तन्नगरादीनां व्यवहारेण च, यथाधुना फरूखाबाद, फैजाबाद इत्यादीनाम्; तथापि तत्तत्पर्वतनदीनां विशिष्टवर्णनोपलब्ध्याऽ-तिप्राचीननगरादिकल्पना कर्तुं शक्यते।

( घ ) भूकम्पकारणेषु ज्वालामुखपर्वतस्य प्रकटीभवनं नदीप्रवाहानीतमृत्तिकापाषाणादि-कानां चाधिक्यमित्यादिभिर्भूभागानां समुद्राणां पर्वतानां वनानां नाशो वैपरीत्यं पुनरुत्पत्तिश्च भवतीति निश्चित्यातिप्राचीनवर्णनं सर्वथाधुनिकदेशादिविभागैः सह न संवदतीति नातिचित्रम्। परन्त्वधुना यत्र महान् वालुकामयप्रदेशो वर्तते यथा भारतस्थमरुदेशः, अफ्रीकास्थसहाराप्रदेशः, चीनदेशस्थगोबीभागः; तत्रावश्यमतिप्राचीनतमे काले समुद्रस्थितिरासीदिति कल्पनयाऽतिप्राचीन-कालिकस्थितिमवलम्ब्यैव पुराणादिषु जम्बूप्लक्षादिद्वीपानां सप्तसमुद्राणां च वर्णनं कृतं भवेदित्येषा कल्पना सर्वथा सुसंगतैवेति विदुषां मतम्।

( ङ ) एवं च पुराणेषु देश-वर्ष-पर्वत-वन-द्वीप-खण्डवर्णने क्वचिदधिकाधिकमानं प्रदर्शितं तत्प्राचीनकालिकदेशादिस्थित्यपेक्षया, अथवा—"तेषां मनुष्यतर्केण प्रमाणानि प्रचक्षते" इति मत्स्यपुराणस्थरीत्या कृतमिति क्वचिद् विसंवदतीति नाश्चर्यकरम्।

अथाधुना जम्बूद्वीपस्य मानं सामान्येन तत्स्वरूपं च प्रदर्श्यते—

सप्त वर्षाणि वक्ष्यामि जम्बूद्वीपं यथाविधम्।
विस्तरं मण्डलं यच्च योजनैस्तन्निबोधत॥
योजनानां सहस्राणि शतं द्वीपस्य विस्तरः।

[ मत्स्य० ११३।७-८ ]

प्रागायता महापार्श्वाः षडिमे वर्षपर्वताः।
अवगाह्य ह्युभयतः समुद्रौ पूर्वपश्चिमौ॥

[ मत्स्य० ११३।१०-११ ]

हिमवान् हेमकूटश्च निषधश्चास्य दक्षिणे ।
नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ॥

[ विष्णु० २।२।११ ]

जम्बूप्लक्षादिसप्तद्वीपानां मध्ये जम्बूद्वीपं मध्यस्थम् । तत्रापि मेरुर्मध्यस्थः । मेरोश्चतुर्दिक्षु इलावृतं वर्षं विद्यते । एवं मेरोर्दक्षिणेऽन्ते हिमवान्, तत उत्तरस्यां दिशि हेमकूटः, ततो निषधः । एवमुत्तरे नीलश्वेतशृङ्गिसंज्ञकाः पर्वता विद्यन्ते । तत्र मेरोर्दक्षिणे प्रथमं हरिवर्षं ततः किंपुरुषं ततो भारतवर्षम् । उत्तरे च रम्यकं हिरण्मयमुत्तराः कुरवाश्च । मेरोः पूर्वदिशि भद्राख्यं वर्षं पश्चिमाशायां केतुमालम् । एवं नववर्षाणि जम्बूद्वीपे विद्यन्ते ।

अरुणोद-महाभद्र-असितोद-मानससंज्ञकानि चत्वारि सरांसि विद्यन्ते । अत्र मेरुपर्वते ब्रह्मादयो देवाः स्वस्वस्थानेषु निवसन्ति । इलावृतवर्षे च देवाः क्रीडन्तीति वर्णयन्ति पौराणिकाः । जम्बूद्वीपप्रमाणं लक्षयोजनमिति । अत्र ज्यौतिषविद्याप्रवीणैर्भास्कराचार्यप्रभृतिभिर्जम्बूवर्णनविषये यदिदं व्यलेखि—"भूगोलस्यार्धमुत्तरं जम्बूद्वीपम् । तस्य क्षाराब्धेश्च सन्धिर्निरक्षदेशः । तत्र लङ्का रोमकं सिद्धपुरं यमकोटिरिति पुरचतुष्टयं भूपरिधिचतुर्थांशान्तरं कथितम् । तेभ्यः पुरेभ्यो यस्यां दिशि मेरुः सोत्तरा" इति । इदं तात्पर्यमत्र—भूगोलस्योत्तरार्धं नाम भारतवर्षं कनाडोत्तरामेरिकासहितं यद् भूमेरर्धं तज्जम्बूद्वीपमायाति । परन्तु पौराणिकैर्मेरुपर्वतस्योत्तरदिग्भागे ये नीलश्वेतशृङ्गिसंज्ञकाः पर्वताः पूर्वपश्चिमसागरलीनाः प्रोक्तास्ते कनाडाऽमेरिकादेशे संभवेयुः । परन्तु सम्प्रति तादृशाः पूर्वपश्चिमसमुद्रलीना हिमवद्धेमकूटनिषधसदृशाः पर्वताः कनाडाऽमेरिकास्थाने मेरुपर्वतसन्निधौ पूर्वपश्चिमायता नैव सन्तीति कृत्वायं मेरुपर्वतो जम्बूद्वीपे लक्षयोजनपरिमिते कनाडादिरहिते देशे पञ्चचत्वारिंशदक्षांशेषु कल्पनीयः, अर्थात् प्रकृते साइबेरियादेशे स आयाति । एवं चोत्तरध्रुवादारभ्यैकस्मिन् विभागे ध्रुवाद् दक्षिणस्यां दिशि शृङ्गी पर्वतस्ततः श्वेतो गिरिस्ततो नीलपर्वतस्ततो मेरुस्ततोऽपरपार्श्वे निषधनीलहिमवन्तः पर्वताः । एवं च जम्बूद्वीपमध्ये मेरुपर्वत इत्यादिकथनं सङ्गच्छते । जम्बूद्वीपमानं चोत्तरध्रुवादारभ्य लङ्कां यावल्लक्षयोजनानि, "योजनानां सहस्राणि शतं द्वीपस्य विस्तरः" इति मात्स्योक्तेः । अत एव श्रीमद्भागवते पञ्चमस्कन्धे—"जम्बूद्वीपस्य च राजन्नुपद्वीपानष्टौ हैक उपदिशन्ति, सगरात्मजैरश्वान्वेषण इमां महीं परितो निखनद्भिरुपकल्पितान् । तद्यथा स्वर्णप्रस्थश्चन्द्रशुक्ल आवर्तनो रमणको मन्दरहरिणः पाञ्चजन्यः सिंहलो लङ्केति" [ १९।२९-३० ] । जम्बूपद्वीपेतिकथनादेव जम्बूसमीपवर्तिद्वीपप्रतीतेः, दक्षिणास्थलङ्केति कथनाच्च लङ्कापर्यन्तमष्टो-

द्वीपानां सत्ताया बोधनाज्जम्बूद्वीपस्य दक्षिणावधिर्निश्चितो भवति। एतद्विषये मतान्तरं भारत-भारतवर्षवर्णनप्रसङ्गे कथयामः। अस्तु, जम्बूद्वीपस्थमेरुपर्वते देवानां वास इति प्रतिपादितम्—

स पर्वतो महादिव्यो दिव्यौषधिसमन्वितः।
तत्र देवगणाश्चैव गन्धर्वासुरराक्षसाः॥
शैलराजे प्रमोदन्ते सर्वतोऽप्सरसां गणैः॥ [ मत्स्य० ११३।४१-४२ ]

अत्र मेरौ पूर्वादिदिक्षु सहस्राक्षप्रभृतिदिग्पालानां शङ्करविष्णुब्रह्मणां नगर्यः सन्तीति विष्णुपुराणादिभिर्ज्ञायते। अत्र मेरुस्थितेन्द्रभवनादिषु कार्यकरणार्थं मनुजानां गमनागमनं संभवतीति ज्ञायते। तथा हि मत्स्यपुराणे द्विचत्वारिंशाध्याये ययातेरष्टकस्य च संवादे ययातिप्रभृतयः सदेहं स्वर्गं गता इति ज्ञायते—

अष्टक उवाच

कस्यैते प्रतिदृश्यन्ते रथाः पञ्च हिरण्मयाः।
उच्चैः सन्तः प्रकाशन्ते ज्वलन्तोऽग्निशिखा इव॥

ययातिरुवाच

भवतां मम चैवैते रथा भान्ति हिरण्मयाः।
आरुह्यैतेषु गन्तव्यं भवद्भिश्च मया सह॥
सर्वैरिदानीं गन्तव्यं सह स्वर्गो जितो यतः।
एष वो विरजाः पन्था दृश्यते देवसद्मगः॥ [१३,१४, १६]

एवमर्जुनोऽपि सदेहं सहस्राक्षप्रेषितमातलिना सह रथमारुह्य गतवान्—

मातलिरुवाच

भो भो शक्रात्मज श्रीमन् शक्रस्त्वां द्रष्टुमिच्छति।
आह माममरश्रेष्ठः पिता तव शतक्रतुः।
कुन्तीसुतमिह प्राप्तं पश्यन्तु त्रिदशालयाः॥
[म० भा० व० ४२।११-१२]

एवं बलेः [ भाग० ८।१५ ], पिप्पलादस्य [ ब्रह्म० ११०।२२५ ], ककुस्थस्य [ भाग० ९।६ ], दिलीपस्य [ पद्म० उ० २०२ ], विष्णुपुराणोक्तरेवतस्य, नारदस्य, रावणस्य, अन्येषां बहूनां च स्वर्गगमनं पुनरागमनं च दृश्यते। एवञ्च मेरुस्थितः स स्वर्गो देवादिकानां साहाय्येन मानवैरपि गन्तुं शक्यः। परन्त्वस्माद् भिन्नोऽप्येकः स्वर्गो विद्यते, यत्र मानवैर्मृत्वैव गन्तुं शक्यते।

यतो योऽर्जुनो मातलिना सह स्वर्गं गतवान्, स एव महाप्रस्थानसमये स्वर्गं गन्तुमशक्तः सन् मध्येमार्गमेव शरीरं त्यक्तवान्। यथा भारते महाप्रस्थानपर्वणि—

तांस्तु प्रपतितान् दृष्ट्वा पाण्डवः श्वेतवाहनः।
पपात शोकसंतप्तस्ततो नु परवीरहा॥
तस्मिंस्तु पुरुषव्याघ्रे पतिते शक्रतेजसि।
म्रियमाणे दुराधर्षे भीमो राजानमब्रवीत्॥

[ महाभारत, महाप्र० २।१८-१६ ]

एवं युधिष्ठिरो विशेषपुण्येन सदेहः स्वर्गतोऽपि तत्र युद्धे मृतान् दुर्योधनादीन् दृष्ट्वाऽतप्यदिति स्वर्गारोहणपर्वणि दृश्यते। गीतायां च—"हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्" [२।३७] इति। एवं यो मृत्वा लब्धव्यस्तादृशः स्वर्गः पूर्वप्रदर्शिताद् मेरुस्थोऽन्य एव, स च मेरुरपि भिन्न एव। पूर्वोक्तो मेरुर्वर्षमध्यगतः। अयं मेरुः सर्ववर्षाणामुत्तरस्थः। अत एव पुराणे—"सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः" इत्युक्तम्। एवं चैतादृशो मेरुरुत्तरध्रुवरूप एव स्यात्। अत्यतिप्राचीने काल उत्तरध्रुवप्रदेशो मनुष्यवासयोग्य आसीत्तदा मनुष्याणां तत्र देवैः सह संवादः सहवासश्च प्रवर्तते स्म। परन्तु भूमिजलाग्न्यादिकानां न्यूनाधिक्येन क्वचिद् हिमाधिक्यं हिमप्रलयश्च समजायत, तत्र सोत्तरध्रुवसमीपस्था भूर्वासायाऽयोग्या समजनि। तत्र स्थितानां देवानां षण्मासपर्यन्तोऽहस्तावती रात्रिश्चासीत्। तत्र वासाऽयोग्ये स्थाने संजाते तत्रत्या देवा मनुष्याश्च यत्र यत्र गतवन्तस्तत्र सौख्याधिक्ययुतस्य पर्वतोपरिस्थितस्य स्थानस्य ते मेरुरिति नाम चक्रुरिति संभाव्यते। एवं स्वमूलस्थानभूते मेरौ स्वीयेनानेन शरीरेण जीवितावस्थायां न गन्तुं शक्यतेति कृत्वा तत्र मृत्वा मनुष्या गच्छन्तीति कल्पनां कृतवन्त इति संभाव्यते। आस्तां तावत्।

जम्बूद्वीपस्य सर्वतो लवणोदसागरो विद्यते। स च सागरः प्लक्षद्वीपेन वेष्टित इत्यादिवर्णनं सर्वत्र पुराणेषूपलभ्यते। एवं च तत्र प्लक्षादिषु मनुष्यैः सशरीरेण गन्तुं न शक्यत इति पुराणादितो ज्ञायते। परन्तु वाल्मीकीयरामायणस्थकिष्किन्धाकाण्डस्थवर्णनदर्शनेन तत्र सर्वत्र प्लक्षशाल्मल्यादिषु द्वीपेषु गन्तुं शक्यते, वानरैस्तत्र प्लक्षादिषु गत्वा सीताऽन्वेष्टव्येति सुग्रीवो वानरान् कथितवानिति तत्प्रकरणावलोकनेन स्पष्टं भवति। तथा हि—

यवद्वीपमतिक्रम्य शिशिरो नाम पर्वतः।
दिवं स्पृशति शृङ्गेण देवदानवसेवितः॥ [४०।३१]

अत्र प्रोक्तः पर्वतः शिशिरः प्लक्षद्वीपस्थः ।

ततो रक्तजलं प्राप्य शोणाख्यं शीघ्रवाहिनम् ।
गत्वा पारं समुद्रस्य सिद्धचारणसेवितम् ॥ [ ४०।३३ ]

अत्र टीका गोविन्दराजीया—'एवं जम्बूद्वीपं लवणसमुद्रं चोक्त्वा प्लक्षद्वीपप्रदेशानाह-तत इत्यादिना ।'

ततः समुद्रद्वीपांश्च सुभीमान् द्रष्टुमर्हथ । [ ४०।३६ ]

अत्र तिलकटीका—'समुद्रद्वीपानुक्तदेशात्परिवर्तीक्षुसमुद्रद्वीपान् ।' गोविन्दराजीयापि समाना ।

तत्राऽसुरा महाकायाश्छायां गृह्णन्ति नित्यशः । [ ४०।३७ ]
ततो रक्तजलं भीमं लोहितं नाम सागरम् ॥
गत्वा प्रेक्ष्यथ तां चैव बृहतीं कूटशाल्मलीम् ॥ [४०।३६]

अत्र टीकात्रये 'तत्र तस्मिन् इक्षुसमुद्रे ।' तिलकटीकायां 'तत इक्षुसागरात् परतः ।...कूट-शाल्मलीं शाल्मलीद्वीपत्वप्रयोजकवृक्षम् ।'

ततः पाण्डुरमेघाभं क्षीरोदं नाम सागरम् ॥ ४३ ॥
क्षीरोदं समतिक्रम्य तदा द्रक्ष्यथ वानराः ॥ ४७ ॥
जलोदं सागरं शीघ्रं सर्वभूतभयावहम् ॥ ४८ ॥
स्वादूदस्योत्तरे तीरे योजनानि त्रयोदश ॥ ५० ॥
आसीनं पर्वतस्याग्रे सर्वदेवनमस्कृतम् ।
सहस्रशिरसं देवमनन्तं नीलवाससम् ॥ ५२ ॥
ततः परं हेममयः श्रीमानुदयपर्वतः ॥ ५४ ॥
काञ्चनस्य च शैलस्य सूर्यस्य च महात्मनः ।
आविष्टा तेजसा सन्ध्या पूर्वा रक्ता प्रकाशते ॥ ६३ ॥
पूर्वमेतत् कृतं द्वारं पृथिव्यां भुवनस्य च ।
सूर्यस्योदयनं चैव पूर्वा ह्येषा दिगुच्यते ॥ ६४ ॥
ततः परमगम्या स्याद्दिक् पूर्वा त्रिदशावृता ।
रहिता चन्द्रसूर्याभ्यामदृश्या तमसावृता ॥ ६६ ॥
अभास्करममर्यादं न जानीमस्ततः परम् ॥ ६८ ॥

अनेन प्रकरणेनेदं सिद्ध्यति यज्जम्बूद्वीपवत् प्लक्षादिद्वीपेष्वपि गन्तुं शक्यते, गतश्चासीत् सुग्रीवः। एवं चैष सर्वोऽपि द्वीपविस्तारोऽस्यां मनुष्यगमनार्हायां पृथिव्यां प्रायो जम्बूद्वीपसंज्ञिकाया-मेवेति विवेचनार्थमिदं प्रकरणमुपन्यस्तम्। अस्तु।

सम्प्रति भारतवर्षभारतवर्णनं विवेचनाय प्रदर्श्यते—

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः॥
नवयोजनसाहस्रो विस्तारोऽस्य महामुने।
[ विष्णु० २। ३ ।१-२ ]

भारतस्यास्य वर्षस्य नव भेदान्निशामय।
इन्द्रद्वीपः कसेरुश्च ताम्रपर्णो गभस्तिमान्॥
नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः।
अयं तु नवमस्तेषां द्वीपः सागरसंवृतः॥
[ विष्णु० २। ३ । ६-७ ]

अर्थाद् भारतवर्षमिदं हिमाद्रिं मर्यादीकृत्य दक्षिणतो नवयोजनसहस्रमानतो विस्तीर्णं विद्यते। अस्य दक्षिणदिग्भागे समुद्र एव केवलं विद्यते, न कश्चिदपि संलग्नो भूभागः। भारतवर्षे यानि नव द्वीपानि विद्यन्ते, तत्र भारतस्यैव मध्यमसंज्ञया व्यवहारो दृश्यते। यथा विष्णुधर्मोत्तरे प्रथमखण्डे भारतवर्षस्याष्टौ द्वीपानुक्त्वा भारतविषये—

तेषां तु नवमो मध्ये द्वीपो नाम्ना तु मध्यमः। [ १। ८ । ६ ]

क्वचित् कुमारिकापदेनापि व्यवह्रियते। यथा—

इन्द्रद्वीपः कसेरुश्च ताम्रद्वीपो गभस्तिमान्।
नागः सौम्यश्च गान्धर्वो वरुणश्च कुमारिका॥

[ स्कन्द० माहे० ख० कौ० ख० ३९।६६ ]

इदं पुराणवचनमाश्रित्यैव भास्कराचार्येण—"अन्यद् गभस्तिमदतश्च कुमारिकाख्यम्" [ सिद्धान्तशिरोमणि, गोला० भुवनकोश०, श्लो० ४१ ] इति भारतमुद्दिश्योक्तम्। एतेषां भारतवर्षभागानां समुद्रपर्वतादिव्यवधानेन सरलरीत्या गन्तुं न शक्यत इत्यपि प्रतिपादितम्। यथा—

भारतस्यास्य वर्षस्य नव भेदाः प्रकीर्तिताः ।
अष्टभिर्गिरिभिश्छन्ना ये त्वगम्याः परस्परम् ॥
[ विष्णुध० प्र० ख० ८।२ ]

शृणुध्वं भारतं वर्षं नवभेदेन भो द्विजाः ।
समुद्रान्तरिता ज्ञेयास्ते त्वगम्याः परस्परम् ॥
[ ब्रह्म०२५।१४ ]

एतेषु भारतवर्षभागेषु केचन समुद्रस्थिता द्वीपाः, केचन पर्वतेनागम्या भूभागसंबद्धा इति ज्ञायते । तेषां भारतदिक्षु कुत्र स्थितिरिति विचारणायां महेन्द्रात् पर इन्द्रद्वीपः, उत्तरस्थित-पारियात्रपर्वतादर्वाक् कौमारिकखण्डं भारतपदवाच्यं स्थितम् । यथा—

महेन्द्रात्परतश्चैव इन्द्रद्वीपो निगद्यते ।
पारियात्रस्य चैवार्वाक् खण्डं कौमारिकं स्मृतम् ॥
[ स्कन्द० मा० ख० कौ० ख० ३६।११३ ]

एवं सिद्धान्तशिरोमणौ गोलाध्याये भुवनकोशे ( श्लो० ४१ ) मरीचिटीकायाम्—
मध्ये कुमारीशकलं तथैन्द्र्यामैन्द्राख्यमग्नेर्दिशि ताम्रवर्णम् ।
गभस्तिमद्यामगतं च वारुणं रक्षःसुगान्धर्वदलं प्रतीच्याम् ॥
वायव्यदिङ्नागदलं च सौम्ये सौम्यं तथैशे विलिखेत् कशेरुम् ।
इति रोमकोक्तसिद्धान्तवचनादिना निश्चीयते ।

हिमाद्रितो दक्षिणदिशि "नवयोजनसाहस्रो विस्तारोऽस्य महामुने" [ २।३।५१ ] इति विष्णुपुराणादिप्रतिपादिते नवसहस्रयोजनमिते देशे ये भूभागा द्वीपपदवाच्याः, जलभागा वा; ते सर्वे भारतवर्षान्तर्गता एव । भारतं चैकसहस्रमितं भारतवर्षविभागेष्वेकोऽन्यतमो नवमो भागो भारतवर्षान्तर्गत एव । अत्र प्रमाणानि—

योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरम् ।
पूर्वे किराता ह्यस्यान्ते पश्चिमे यवनाः स्मृताः ॥
[ वायु० ४५ श्लो० ८०, ८२]
एतत्तु भारतं वर्षं चतुःसंस्थानसंस्थितम् ।
दक्षिणापरतो ह्यस्य पूर्वेण च महोदधिः ॥

हिमवानुत्तरेणास्य कार्मुकस्य यथा गुणः ।
तदेतद् भारतं वर्षं सर्वबीजं द्विजोत्तम ॥

[ मार्क० ५७।५८-६० ]

आयतस्तु कुमारीतो गङ्गायाः प्रवहावधिः ।

[मत्स्य० ११४।१०]

भारतस्य हिमवानुत्तरमर्यादाभूतः, दक्षिणपश्चिमपूर्वदिक्षु च सागरोऽवधिभूतः, सहस्रयोजनमितमेतद् दक्षिणोत्तरम् । अत्र सर्वपुराणेषु भारतवर्णनप्रसङ्गे प्रचलितभारतस्थितनगरपुरग्रामपर्वतनदीवनविभागानुक्त्वा योजनसहस्रपरिमाणं कथितमस्ति, तच्च क्रोशमाने पर्यवस्यति । क्रोशस्तु योजनचतुर्थांशो द्वि'मील'पदवाच्यः । योजनं च चतुःक्रोशमितम् । एवमन्यत्रापि द्रष्टव्यम् । भारतवर्षभारतयोर्मर्यादाभूत उत्तरत्र हिमवानेक एव, परन्तु तयोर्दक्षिणतो विस्तारे महान् भेदः ।

यद्यपि क्वचिद् द्वीप-वर्ष-खण्डशब्दाः समानार्थका अवलोक्यन्ते, यथा—

जम्बूखण्डस्य विस्तारं तथान्येषां विदांवर । [मत्स्य० ११४।६०]
जम्बूवर्षः किंपुरुषः सुमहान् नन्दनोपमः । [ म० ११४।६२ ]
सप्त वर्षाणि वक्ष्यामि जम्बूद्वीपं यथाविधम् ॥ [म० ११३।७] इत्यादिषु,

एवं भारतस्यापि क्वचिद् भारतवर्षपदेन वर्णनमुपलभ्यते, यथा भारतवर्णनमुपक्रम्य—

एतत्तु भारतं वर्षं चतुःसंस्थानसंस्थितम् ।
दक्षिणापरतो ह्यस्य पूर्वेण च महोदधिः ॥

[ मार्क० ५७।५८-५९ ] इत्यादिषु;

तथापि सर्वत्र पुराणेषु भारतवर्षविभागवर्णनप्रसङ्गे भारतस्य वर्णनं कृत्वा भारतवर्षमानापेक्षया पृथग् मानं भारतस्य प्रदर्शितम् । अत एतादृशस्थलेष्वागतवर्षादिशब्दा न विशिष्टार्थपराः, किन्तूपक्रमाद्यनुसारेण तत्तत्प्रकरणस्थदेशप्रतिपादका इति । इमां स्थितिमविज्ञायैव बहुभिर्भारतं भारतवर्षं चैकीकृत्य पातालादिदेशा भारते हठात् संस्थापिताः ।

अथेदानीं भारतयात्रामुद्दिश्य कश्चिद्विचारः प्रस्तूयते—

भारतादेर्यात्रा प्रायस्त्रिविधप्रकारेण संभवति । एकाश्वमेधीयाश्वानुसरणाय, दिग्विजयार्थम्, द्रव्याद्यादानार्थं वा । यथा महाभारतग्रन्थोक्तसहदेवस्य [ म० भा० सभा० २६ तः ], गर्गसंहितायां विश्वजित्खण्डोक्तप्रद्युम्नस्य च [ अ० ५ तः ४० ] । अपरा प्रायश्चित्तार्थम्, यथार्जुनादिभिः कृता

[ भार० आदि० २२० ]। अन्या नष्टवस्त्वन्वेषणार्थं प्रवृत्ता, यथा सीतादेव्यन्वेषणार्थं गतानां वानराणाम्, इन्द्रचोरिताश्वान्वेषणपराणां सगरपुत्राणाम्। एवं पराऽप्येका स्वबलोन्मादेन दिग्विजयार्थं क्रियते, यथा रावणहिरण्याक्षादिभिः कृता [ रामा० उ० २३, भाग० ३।१८ ]। एवं या च साम्राज्यमधिजिगमिषुणा क्रियते सा केवलं भारतं विजित्यैवाश्वमेधानुसरणेन संपद्यते। यथा—

यस्त्वयं मानवो द्वीपस्तिर्यग्यामः प्रकीर्तितः।
य एनं जयते कृत्स्नं स सम्राडिति कीर्तितः॥ [ मत्स्य० ११४।१५ ]

प्रायश्चित्तार्थं च या प्रवर्तते सापि तीर्थानां प्रायो भारत एव स्थितेः कल्पनया भारत एव भवति। अन्वेषणार्थं स्वबलप्रदर्शनार्थं च या भवति सा भारते भारतवर्षे पातालादिषु च संभवति, यथा मातलेः स्वकन्याया वरान्वेषणार्थं [ म० भा० उ० अ० ९७।१०२ ], रावणस्य स्वबलप्रदर्शनार्थम्, हिरण्याक्षस्य च। सा च पातालादिषु वरुणादिलोकेषु च संवृत्ता। तद्यात्रावर्णनस्थलावलोकनेन पातालदिक् तद्वासिजनस्थितिर्नगरपुरादिसमृद्धयश्च ज्ञातुं शक्यन्ते।

यद्यपि पातालविषये "अवनेरप्यधस्तात् सप्तभूविवराः" [भाग० ५।२४।७] इति, एवम्—

धरण्यां विवृते गर्ते निपपात लघुक्रमः।
तस्यानन्तरमेवाथ स चाश्वीनृपतेः सुतः॥
निपपात महागर्ते तिमिरौघसमावृते।
प्रकाशं च सपातालमपश्यत्तत्र चार्चिषा॥ [ मार्क० १६।९-११ ]

इत्यादिमार्कण्डेयपुराणवचननिचयावलोकनेनैतादृशी कल्पना भवति यत्पातालादिकं भूमेरभ्यन्तरे कूपे जलमिव स्थितमिति; तथाप्यग्रे प्रदर्श्यमानप्रमाणवचनाद्यवलोकनेन भूमेरधस्तान्नाम भूमेर्निम्नदेशे समुद्रमध्ये द्वीपरूपाणि सप्त पातालान्यतमातलादीनि सन्तीति निश्चीयते। तथा हि—रावणो नारदवचनेन यमं जेतुं दक्षिणां दिशं प्रस्थितः। यमं जित्वा ततो वरुणरक्षितं रसातलं प्रविश्य वासुकिपालितभोगवतीं निवातकवचनिवासस्थानं च जित्वा वरुणालयान्वेषणपर इतस्ततो भ्रमन् अश्मनगरं कालकेयैरधिष्ठितं विजित्य वरुणस्य दिव्यं कैलासमिव पाण्डुरमेघाभं भवनमपश्यत्—

तस्मादेवं महाब्रह्म वैवस्वतवधोद्यतः।
गच्छामि दक्षिणामाशां यत्र सूर्यात्मजो नृपः॥ [रामा० उ० २०।२३]

ततो रसातलं रक्षः प्रविष्टः पयसां निधिम् ।
दैत्योरगगणाध्युष्टं वरुणेन सुरक्षितम् ॥
स तु भोगवतीं गत्वा पुरीं वासुकिपालिताम् ।
कृत्वा नागान् वशे हृष्टो ययौ मणिमयीं पुरीम् ॥
निवातकवचास्तत्र दैत्या लब्धवरा वसन् ।
[ वा० रा० उ० २३।४–६ ]

सलिलेन्द्रपुरान्वेषी भ्रमति स्म रसातलम् ।
ततोऽश्मनगरं नाम कालकेयैरधिष्ठितम् ॥
ततः पाण्डुरमेघाभं कैलासमिव भास्वरम् ।
वरुणस्यालयं दिव्यमपश्यद् राक्षसाधिपः ॥
[ वा० रा० उ० २३।१६–२० ]

इति रामायणीयप्रकरणावलोकनेनेदं निश्चितं भवति यद् रावणो यमविजयार्थं दक्षिणामाशां लङ्कातो गतवान्, तद्विजयानन्तरं वरुणविजयार्थं प्रचलितेन तेन मध्येमार्गं भोगवती-मणिमयीपुरी-अश्मकनगराणि च विजितानि, ततो वरुणालयं दृष्ट्वा तत्र गत्वा तद्विजित्य च पुनर्लङ्कामागतवान् । एवं च यमलोको दक्षिणस्यां दिशि सर्वान्ते विद्यते, यत्र च गतिमतां गतिर्नास्ति । यमवरुण-लोकयोर्मध्ये भोगवती-मणिमयी-अश्मकपुराणि विद्यन्ते । पश्चिमदिशि वरुणलोको रसातले, तच्चा-तलादिसप्तपातालेष्वन्यतमः । वाल्मीकिरामायणे किष्किन्धाकाण्डे सुग्रीवेण दक्षिणदिशि सीतान्वेषणार्थं सन्नद्धान् हनुमत्प्रभृतिवानरान् प्रत्युक्तम्—

चित्रसानुनगः श्रीमान् महेन्द्रः पर्वतोत्तमः ।
द्वीपस्तस्यापरे पारे शतयोजनविस्तृतः ॥
स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः ।
तमतिक्रम्य लक्ष्मीवान् समुद्रे शतयोजने ॥
गिरिः पुष्पितको नाम सिद्धचारणसेवितः ।
तमतिक्रम्य दुर्धर्षे सूर्यवान्नाम पर्वतः ॥
तत्र नेत्रमनःकान्तः कुञ्जरो नाम पर्वतः ।
तत्र भोगवती नाम सर्पाणामालयः पुरी ॥
ततः परं न वः सेव्यः पितृलोकः सुदारुणः ।
राजधानी यमस्यैषा कष्टेन तमसावृता ॥

शक्यं विचेतुं गन्तुं वा नातो गतिमतां गतिः ।

[ वा० रा० कि० ४१।२०–४५ ]

महेन्द्रपर्वततो शतयोजनमितसागरे लङ्का रावणदेशः, ततः परवर्तिनामतिदूराणां पुष्पितकसूर्यवत्कुञ्जरपर्वतानां स्थितिः । कुञ्जरपर्वते भोगवतीस्थितिः । ततोऽतिदूरं पितृलोकः, ततो यमलोकः । एवं च दक्षिणस्यां दिश्यन्तिमभागे यमलोकवद् रसातले पश्चिमस्यां दिशि वरुणस्यालयो विद्यते ।

एवं चाग्नेयदिशमारभ्य दक्षिणां दिशं नैऋतिदिशं पश्चिमदिग्भागं चाश्रित्य समुद्र जम्बूद्वीपान्तर्गते भारतवर्षेऽतलादीनि सप्त पातालानि विद्यन्ते, नामेरिकादेशे नान्यत्र चेति निश्चितम् । नागलोकोऽपि पातालमभितो विद्यते भारते ।

वरुणेनाभ्यनुज्ञातौ नागलोकं विचेरतुः ।

[ वा० रा० उ०, अ० ६८, श्लो०८ ]

एतत्तु नागलोकस्य नाभिस्थाने स्थितं पुरम् ।
पातालमिति विख्यातं दैत्यदानवसेवितम् ॥ [म० भा० उ० ६६।१]

एवं च पातालेषु सप्तसु पश्चिमदिक्स्थ'मदागास्कर'द्वीपः, एवं दक्षिणाग्नेयदिक्स्था बोर्निओ-मलाया-जावा-सुमात्रा-आस्ट्रेलिया-न्यूजीलंड-न्यूगिनीप्रभृतयो देशा समायान्तीति निश्चयेन वक्तुं शक्यते । दक्षिणध्रुवसमीपस्थदेशे स्थितो यमलोको देवमनुष्यवासार्हो यदासीत्, तदा तत्र मनुष्याणां देवानां चागमनागमनं प्रचलितमासीदिति कठोपनिषत्प्रोक्तनचिकेतसो गमनागमनेन, महापतिव्रतायाः सावित्र्याः सत्यवतो जीवनार्थं यमेन सह गमनसंवादादिकं रावणस्य गमनादिकं च दृष्ट्वा निश्चयेन यमभृत्यजनानां देवानां वास आसीदिति वक्तुं शक्यते । परन्तूत्तरध्रुववद् हिमप्रलयेन हिमाधिक्येन च तस्य मानववासायोग्यतया तत्र गन्तुमशक्यतया तत्रोत्तरध्रुवदेशवद् मृत्वैव गन्तुं शक्यमिति विचारेणैव रामायणे—

राजधानी यमस्यैषा कष्टेन तमसावृता ।
शक्यं विचेतुं गन्तुं वा नातो गतिमतां गतिः ॥

इत्युक्तम् । पातालेषु स्वर्गादपि विशिष्टा सुखसामग्री विद्यते । यथा—

स्वर्लोकादपि रम्याणि पातालानीति नारदः ।
प्राह स्वर्गसदो मध्ये पातालेभ्यो गतो दिवम् ॥ [ ब्रह्म० २१।५ ]

एवमन्यत्रापि वर्णनं दरीदृश्यते—

न नागलोके न स्वर्गे न विमाने त्रिविष्टपे ।
परिवासः सुखस्तादृग् रसातलतले यथा ॥
[ म० भा० आ०, अ० १०२, श्लो० १५ ]

संप्रति नरकलोकानां स्थितिर्भारते कस्यां दिशि संभवतीति निरूप्यते—

"अन्तराल एव त्रिजगत्यास्तु दिशि दक्षिणस्यामधस्ताद् भूमेरुपरिष्टाच्च जलात्" [भाग० ५।२६।४ ] अनेनैते लोका द्वीपवद् विद्यन्ते, न तु भूमेरभ्यन्तरे कूपे जलमिवेति । तेषां च स्थानं भारतस्य दक्षिणस्यां दिशि भूमेः समीपेऽतलस्य सप्तपातालान्यतमस्योपरि विद्यत इति स्पष्टमुपलभ्यते देवीभागवतस्याष्टमस्कन्धतः—

त्रिजगत्यामन्तराले दक्षिणस्यां दिशीह वै ।
भूमेरधस्तादुपरि त्वतलस्य च नारद ॥ [ २१।१६ ]

एवं च नरकलोकानां स्थानं भारतस्याधः समुद्रे दक्षिणस्यां दिशि सम्प्रति विद्यमानाऽण्डमान-निकोबारद्वीपप्रदेशा विद्यन्त इति निश्चीयते । तत्र चाधुनाप्यनेककष्टदायका वृश्चिकसर्पादयः प्राणिनो वनस्पतयश्च विद्यन्त इति प्रसिद्धमेव ।

एवं सप्तविधो भुवरादिस्वर्गो द्विधा—एको मृत्वा गन्तुं शक्यः, "हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्" इति गीतावाक्येन, "अनेन धूमेन यजमानः स्वर्गं लोकं याति" इति मरणसंस्कारप्रोक्त-ब्राह्मणवाक्येन च प्रदर्शितः । अन्यश्च भारतदेशस्थितो मनुष्यगमनयोग्यः, अर्जुन-दिलीप-सगरादिभिः कदाचित् कृतवासः । एवं चातलादिसप्तपातालान्यपि भारताद् बहिः समुद्रे दक्षिणपश्चिमयोर्दिशोः स्थितानि द्वीपभूतानि विद्यन्ते । यत्र च रावणो दिग्विजयं कर्तुं गतवान्, दुर्योधनप्रदत्तविषमिश्रितान्नभक्षणेन च भीमो नदीप्रवाहेण पाताले गतवानिति भारते आदिपर्वणि वर्णितमित्यलं विस्तरेण ।

---

# आर्याणामुत्पत्तिस्थानं त्रिलोकरहस्यं च

श्रीजनमेजयशास्त्री, आदर्श-उत्तरमाध्यमिकविद्यालयः, वाजिदपुर, पहितिया, गाजीपुर।

[ ११ वर्ष १-२ अङ्कतोऽनुवृत्तम् ]

## स्वर्गलोकः

आस्माकीने समाजे स्वर्गस्य महान् महिमा वर्ण्यते। सुकृतिनः पुरुषा एवात्र गन्तुं शक्नुवन्ति। ये शुभकर्मशीलाः सन्ति, ते मरणानन्तरं स्वर्गं यान्ति। बहूनां राज्ञां सशरीरं स्वर्गे गमनमागमनं च वर्ण्यते, येषु ककुत्स्थ-दशरथ-दुष्यन्तार्जुनादयो मुख्याः। तत्र कोऽयं स्वर्गलोको नाम? यथा ब्रह्मलोकवर्णने कथितं मया यद् ब्रह्मलोकाभिन्नभागे मेरुपर्वते चतसृषु दिक्ष्विन्द्रादीनां लोकपालानां भवनान्यासन्निति। इमानि लोकपालवासस्थानान्येव 'स्वर्ग' इति नाम्ना प्रसिद्धिमगमन्, येष्विन्द्रपुरं मुख्यमासीत्। यावद्दूरपर्यन्तं देव-यक्ष-गन्धर्व-किन्नरोरगादयो जातयो निवसन्ति स्म, तावत्पर्यन्तं देवलोकः स्वर्गलोको वाऽऽसीत्। किन्त्वत्र सर्वेभ्योऽधिकः सुरम्यो मानससरोवरनिकटवर्तिनो नन्दनवनस्य भाग आसीत्, यत्र स्वर्गस्य राजा इन्द्रो निवसति स्म। अतः सर्वे जना अत्रैव गन्तुमभिलषन्ति स्म। अस्यैव प्रशंसा चास्माकं साहित्ये परिपूरिता वर्तते।

इन्द्र इत्येका पदव्यासीत्। योऽपि व्यक्तिरस्या योग्यो भवति स्म, स ब्रह्मलोकस्य ऋषिः, देवलोकस्य देवः, पृथ्वीतलस्य मनुष्यो वा भवतु; इन्द्रत्वं प्राप्नोति स्म। अस्मै पदाय घोरतपसः क्रतूनां शतस्य वाऽऽवश्यकताऽऽसीत्। य इन्द्रो भवति स्म, सोऽन्येषां जनानां तपसि यज्ञे वा विघ्नं करोति स्म, यथा ते तस्येन्द्रत्वमपहर्तुं न शक्नुयुः। वृत्रवधे इन्द्रो यदा ब्रह्महत्यामवाप, तदा स मानससरोवरं गत्वा स्वात्मानं तिरोहयामास। तत्पदे रिक्ते सति ऋषयो देवाश्च पृथिव्याः शासकस्य आयोः पुत्रं नहुषमिन्द्रपदे नियोजयामासुः। विवरणमस्य महाभारते एवमस्ति—

"अथ देवा ऋषयश्चायुषः पुत्रं नहुषं नाम देवराज्येऽभिषिषिचुः। नहुषः पञ्चभिः शतैर्ज्योतिषां ललाटे ज्वलद्भिः सर्वतेजोहरैस्त्रिविष्टपं पालयांबभूव" [ महाभारते, मोक्षधर्म० ३५१।४४ ]। इन्द्रस्य ब्रह्महत्यायाः प्रायश्चित्तमृषयो यज्ञभूमौ आर्यावर्ते ( भारतस्योत्तरभागे ) कलशजलानामभिषेकैः चक्रुः। यत्रेन्द्रमलस्य परित्यागोऽभवत्, तत्र मलद-करूषनामधेयौ—देशावभवताम्। अधुना बिहारप्रान्ते बक्सरनामधेयस्य स्थानस्य पवित्रभूमिरेव तौ देशावास्ताम्।

अनेन प्रकारेण ऋषि-देव-गन्धर्व-यक्ष-किन्नर-दैत्य-मनुष्याद्या जातयः सर्वा आर्याणां सन्ततयः सन्ति। एतेषामार्याणां गमनागमन प्रायः ब्रह्मलोके ( मेरोरुच्चभागे ), देवलोके ( मध्यभागे ), मनुष्यलोके ( मेरोर्निम्ने पृथिवीतलभागे ) चेति त्रिष्वपि लोकेषु भवति स्म। वायुपुराणे स्वर्गस्य स्थितिर्मेरुपर्वत एवं वर्ण्यते—

तत्र ब्रह्मसभा रम्या ब्रह्मर्षिगणसेविता।
नाम्ना मनोवती नाम सर्वलोकेषु विश्रुता॥
तत्रेशानस्य देवस्य सहस्रादित्यवर्चसम्।
महाविमानसंस्थस्य महिम्ना वर्तते सदा॥
तत्रास्ते श्रीपतिः श्रीमान् सहस्राक्षः पुरन्दरः।
उपास्यमानस्त्रिदशैर्महायोगैः सुरर्षिभिः॥
तमिन्द्रलोकं लोकस्य ऋद्ध्या परमया युतम्।
दीप्यते त्वमरश्रेष्ठैस्त्रिदशैर्नित्यसेवितम्॥

[ वायु० ३४।७२–७७ ]

अस्येन्द्रपुरस्य स्थानं तदेव वर्तते, यत्र गन्धमादने कैलासहिमवतोर्भागो विद्यते। अस्य विस्तरस्तु पूर्वस्यां दिशि मन्दराचलपर्यन्तमासीत्, यत्र हि यक्षाणां निवासस्थलं वर्तते। किन्तु हिमवतः कैलासस्य च भागो मुख्य आसीत्। यक्षाणामधिपतिः कुबेरः, यो देवानां कोषाध्यक्षोऽप्यासीत्, अत्रैव कैलासे भगवतो रुद्रस्य शिवस्य वा पुर्याः समीपं निवसति स्म तथा भगवतः शङ्करस्य सभाया एको मुख्यः सभासदोऽप्यासीत्। अस्य पुराणे इत्थं वर्णनमायाति—

सव्ये हिमवतः पार्श्वे कैलासो नाम पर्वतः।
तस्मिन्निवसति श्रीमान् कुबेरः सह राक्षसैः।
अप्सरोगणसंयुक्तो मोदते ह्यलकाधिपः॥ [ वायु० ४७।१ ]

एवमेव वैदिकमन्त्रेष्वपि कुबेरस्य यद् वर्णनं मिलति, तेन तस्य शङ्करसमीपवर्तित्वं सिद्ध्यति।

कुबेर ते मुखं रौद्रं नन्दिन्नानन्दमावह।
ज्वरं मृत्युभयं घोरं विश नाशय मे ज्वरम्॥

[ पि० प्र० सू० ४६ ]

अस्मिन् मन्त्रे रुद्रेण तदीयनन्दिवृषभेण च सह कुबेरस्य संबन्धः संस्थाप्यते। इत्थं प्राचीनग्रन्थेषु सर्वेषां देव-यक्ष-गन्धर्व-किन्नराणां मेरोर्मध्यभागे निवासः कथितो वर्तते। आसां सर्वासां देवयक्षादिजातीनां 'देव'शब्दादपि सम्बोधनसम्बन्ध आसीत्। आसां जातीनां निवासस्थलं पुराणेष्वस्मिन्नेव पर्वते विस्तृतरूपेण वर्णितं विद्यते, किन्त्वत्र विस्तरभयान्न दातुं शक्यते। देवादीनां निवासस्थानं देवलोक-सुरलोक-स्वर्ग-नरकप्रभृतिभिर्नामभिर्व्यवहृतमस्ति। अस्य वर्णनं वायुपुराणे सुस्पष्टं श्रुत्यादिप्रमाणपुरस्सरमधिगम्यते—

महाविमानान्येतानि दिक्ष्वष्टासु शुभानि हि।
अष्टानां देवमुख्यानामिन्द्रादीनां महात्मनाम्॥
ऋषिभिर्देवगन्धर्वैरप्सरोभिर्महोरगैः।
सेवितानि महाभागैरुपस्थानगतैः सदा॥
नाकपृष्ठं दिवं स्वर्गमिति यैः परिपठ्यते।
वेदवेदाङ्गविद्भिर्हि शब्दैः पर्यायवाचकैः॥
तदेत्सर्वदेवानामधिवासो कृतात्मनाम्।
देवलोको गिरौ तस्मिन् सर्वश्रुतिषु गीयते॥
नियमैर्विविधैर्यज्ञैर्बहुभिर्नियतात्मभिः।
पुण्यैरन्यैश्च विविधैर्नैकजातिशतार्जितैः॥
प्राप्नोति देवलोकं तं स स्वर्ग इति चोच्यते॥

[ वायु० ३४। ९२-९६ ]

उपर्युक्ते वर्णनेऽस्मिन्नेव मेरुपर्वते ( हिमालये ) देवादीनां निवासस्थलमेव स्वर्गस्य पर्यायवाचकैर्नाक-दिवादिशब्दैः कथितमस्ति। अस्मिन्नेव पर्वते देवलोकस्य स्थितिमजस्रं प्रतिपादयन्तः पुराणानि कथयन्ति यत् सर्वासु श्रुतिष्वेवमेव निगदितमस्ति यदेतेषां देवानां निवास-स्थले त एव गच्छन्ति, ये बहुयज्ञकर्त्तारः, नियतात्मानः, पुण्यात्मानश्च वर्तन्ते। एषा देवलोक-प्राप्तिरेव 'स्वर्ग' इति नाम्ना कथ्यते।

एवमेव मरणानन्तरं यत् परलोकस्य वर्णनमायाति, तदप्युत्तरस्यां दिशि हिमवत्पार्श्व-वर्तिषु प्रदेशेषु जन्मग्रहणमेव मन्तव्यम्, पुराणप्रामाण्यात्। तद्यथा, एकदा भरद्वाजो भृगुं पप्रच्छ—

भरद्वाज उवाच

अस्माल्लोकात्परो लोकः श्रूयते नोपलभ्यते ।
तमहं ज्ञातुमिच्छामि तद्भवान् वक्तुमर्हति ॥

भृगुरुवाच

उत्तरे हिमवत्पार्श्वे पुण्ये सर्वगुणान्विते ।
पुण्यः क्षेम्यश्च काम्यश्च स परो लोक उच्यते ॥
लोभमोहपरित्यक्ता मानवा निरुपद्रवाः ।
स स्वर्गसदृशो देशस्तत्र युक्ताः शुभा गुणाः ॥

[ म० भा० मोक्ष० १६२।७–१० ]

अत्र परलोकः स्वर्गसदृशो वर्ण्यते । स्वर्गस्तु हिमालये शोभत एव, किन्तु हिमालयपार्श्ववर्तिन्यामधित्यकायां स्थिता कश्मीरादिप्रदेशा अपि स्वर्गतुल्याः सन्ति । उपर्युक्ते स्वर्गे देव-दैत्यानां मुहुर्मुहुर्युद्धमभवत्, तत्तु तेषां गृहकलहजन्यमेवासीत्, यत उभावपि कश्यपस्यैव संतती आस्ताम् । अस्मिन् स्वर्गे वेदव्यासः कृष्णद्वैपायनः स्वकीयान् पञ्च शिष्यान् वेदानितिहासं चाध्यापयति स्म—

विविक्ते पर्वततटे पाराशर्यो महातपाः ।
वेदानध्यापयामास व्यासः शिष्यान् महातपाः ॥

अत्रैव स्वर्गे इन्द्रसहायार्थं दशरथो गच्छति स्म । अत्रैवेन्द्रसहायार्थं दुष्यन्तो जगाम । अस्मिन्नेव स्वर्गे रावणो विजयाय प्रयाणमकरोत् । अत्रैव मानससरोवरसमीपे रावणह्रदे ( राक्षसताले ) स विहरति स्म, कैलासनिवासिनो भगवतः शङ्करस्य चोपासनां करोति स्म । कुबेरस्तस्य भ्राता आसीत् । अयं स एव कुबेरः, योऽलकायाः स्वामी देवानां कोषाध्यक्षश्चासीत् । रघुः कौत्साय गुरुदक्षिणां दातुममुमेव कुबेरं जेतुमियेष । तद्भयाच्च कुबेरदूता रात्रावेव रघोः कोषागारे स्वर्णवृष्टिं चक्रुः । अस्मिन्नेव स्वर्गे स्वपितुः (इन्द्रस्य) समीपेऽर्जुनो गच्छति स्म । ईदृश्योऽनेकाः कथाः पृथ्वीस्वर्गयोर्मानुषैर्जनैः संबद्धाः सन्ति ।

पुराऽस्मिन् स्वर्गे ( मेरौ ) त एव गन्तुं शक्नुवन्ति स्म, ये वायुयाने गन्तुं समर्थास्तपस्विनो वाऽऽसन् । अस्येदं कारणमासीत्, यदत्र गमनस्य कोऽपि युक्तः पन्था नासीत् । यद्यस्मिन्

स्वर्गे गन्तुमयोग्यो जनः येन केन प्रकारेण गन्तुमियेष, स्वर्गवासिनस्तं पातयन्ति स्म त्रिशङ्कुवत्। अस्य स्वर्गस्य विवरणं महाभारतकाले परीक्षितराज्याभिषेकपर्यन्तं ( ३११० ई० पू० ) सम्यक् प्राप्नोति। ततो भारतीया लेखकाः स्वर्गस्य यथार्थतायां महाकविकालिदासकालपर्यन्तं पूर्णं विश्वसन्ति स्म तथा स्वस्वरचनास्वस्यैव मेरुस्थितस्य स्वर्गस्य सुस्पष्टं वर्णनं कुर्वन्ति स्म। किन्तु गुप्तकाले ( ३२० ई० तः ५१० ई० यावत् ) धर्मे बहुविधानि परिवर्तनानि नानाविधानां सम्प्रदायानां संकलनं विनशनं चाभवत्। तदाप्रभृत्येव जनानां धारणा विभिन्नानां कल्पनानां रूपाणि धृतवत्यस्तथा जनाः शनैः शनैर्यथार्थतां परित्यज्याद्य काञ्चित् विचित्रां कल्पना-मुररीकुर्वन्ति।

## भूर्लोकः

देवानां निवासस्थानं यथा स्वर्ग आसीत्, तथैव मनुष्याणां निवासस्थानं भूर्लोकः ( पृथिव्या भागः ) आसीत्।

> मनुष्या मनुतो जाता मनुर्देवतनूद्भवः।
> देवानां वसतिः स्वर्ग इति श्रुत्यादिसम्मतम्॥

अनेन श्लोकेन स्फुटं प्रतीयते, यद् मनोः सन्ततिर्मनुष्यशब्देन व्यवहृता। अयं मनुर्देवानामेव वंशज आसीत्, ये च स्वर्गे निवसन्ति स्म। एते देवा मनुष्याणां सम्बन्धिनोऽनेन प्रकारेणाऽऽसन्—ब्रह्मणः पुत्रो दक्षप्रजापतिः, दक्षस्य पुत्री अदितिः, अदित्याः पुत्रो विवस्वान्, विवस्वतो मनुः, तथा मनुत इक्ष्वाक्वादयो दश पुत्रा अभवन्, येषां सन्ततयो मनुष्या आसन्। इत्थमेवान्येऽपि मनवः संभूताः, येषां वंशजा मनुष्या अभवन्। अदितिर्देवानां मनुष्याणां च जनन्यासीत्, अतो यदा दितेः पुत्राणां दैत्यानामदितेः पुत्राणां सुराणां च मध्ये महज्जन्यमजनि, तदा मनुष्यलोकस्था जना अदितिपुत्राणामेव साहाय्यं कुर्वन्ति स्म।

भूर्लोकान्तर्गतः पृथ्वीतलस्य यावान् भागो वर्तते, तस्मिन् सप्त महाद्वीपाः सन्ति। एषु महाद्वीपेषु जम्बु-( एशिया )-द्वीपान्तर्गतानि यानि नव वर्षाणि सन्ति, तेषु भारतवर्षम्, तस्मिन्नपि ब्रह्मावर्तः ( आर्यावर्तः ) आर्याणां कृते प्रियतर आसीत्। इदमेव स्थानं तेषां प्रियविषयस्य यज्ञस्य चयनस्थानमासीत्।

आर्याः पर्यटनशीला आसन्। विज्ञानदृष्ट्याऽपि ते भूमेः प्रत्येकस्य स्थलस्य शोभनं वर्णनमकुर्वन्। ते उत्तरीयध्रुवसमीपवर्तिनो देशानपि जानन्ति स्म, यत्र षाण्मासिकी रजनी

दिवसोऽपि च षाण्मासिको भवति। एवमन्येषां शीतोष्णवर्षयुक्तानां देशानां सम्यग् वर्णनं स्वकीयेषु ग्रन्थेषु कृतं तैः।

## त्रिलोकरहस्यम्

एवं ब्रह्मलोकस्य (मेरोरुच्चभागस्य), स्वर्गलोकस्य (मेरोर्मध्यभागस्य), भूर्लोकस्य (पृथ्वीतलस्य) च वर्णनं पुराणादिषूपलब्धं विवेचितमस्माभिः। एतेषां समाहार एव त्रिलोक-शब्दाद् व्यवह्रियते। एषु लोकेषु शब्द-स्पर्श-रूप-रस-गन्धानां पदार्थानां साम्राज्यमस्ति। एतेषु दीप्यमानौ सूर्याचन्द्रमसौ दीप्तिं प्रकिरतः। इदमेव त्रिलोकं जगदपि कथयन्ति जनाः। यथा वायुपुराणे—

सब्रह्मसदनं लोकं सदेवासुरमानुषम्।
त्रिलोकमिति विख्यातं यत्सर्वैर्व्यवहार्यते॥
चन्द्रादित्यावतप्तं यत्तज्जगत् परिगीयते।
गन्धवर्णरसोपेतं शब्दस्पर्शगुणान्वितम्॥

[वायु० ४१।८८१-८६]

अस्यां त्रिलोक्यां सूर्यप्रकाशमहत्तां गायत्रीमन्त्रोऽपि स्वीकरोति।

## आर्याणामुत्पत्तिस्थानम्

अनेन विवरणेन ज्ञायते यदार्याणामुत्पत्तिस्थानमयमेव मेरुः (हिमालयः) आसीत्। आर्याणामादिपुरुषो ब्रह्मा अस्मिन्नेव पर्वते निवसन् त्रिष्वपि लोकेषु सृष्टेर्व्यवस्थां विधाय प्रजापतिरिति संज्ञां लब्धवान्। देवर्षि-यक्ष-गन्धर्व-राक्षस-किन्नरोरग-मनुष्याद्याः सर्वा जातय आर्यवंशीया एव वर्तन्ते। केवलं विभिन्नेषु स्थलेषु वासेन तथा विभिन्नैः कर्मभिरासां जातीनां विभिन्नानि नामान्यभवन्। सर्वा उपर्युक्ता जातय ऋषीणामेव सन्ततयः सन्ति। अद्यापि यदा कश्चित् कमप्यार्यं (साम्प्रतं हिन्दुपदाभिधेयम्) तद्गोत्रं पृच्छति, तर्हि स कस्यचिद् ऋषेरेव नाम कथयति। यज्ञहवनादिकार्येषु यदि कस्यचित् पुरुषस्य गोत्रज्ञानं न भवेत्, तर्हि पुरोहितस्तं कश्यपवंशीयं मत्वा सङ्कल्पं कारयति। स्मरणीयेयं वार्ता, यदयमेव कश्यपो दित्य-दितिभ्यां द्वाभ्यां पत्नीभ्यां दैत्य-देव-मनुष्यादीनामुत्पत्तिं कृतवान्।

यथा पूर्वोक्तेषु श्लोकेषु वर्णनमुपलभ्यते, यद् देवादीनां वसतिः स्वर्गः (मेरुः), तथा

तथा मनुष्याणां पृथिव्यासीदिति। अनेन कथनेनावगम्यते यद्यदा पृथिव्याः व्यवस्था शोभना संजाता, तदा पर्वतवासिनो देवगन्धर्वयक्षादयः सर्वे निम्नतलमवतीर्य पृथिव्यामेवेतस्ततो वासं चक्रुः। तदा एतेऽपि मनुष्यसंज्ञां प्राप्तवन्तः। एवमेतेषां पूर्वासां संज्ञानां विनाशोऽभवत्। यथा मेरुनिवासिनो राक्षसा लंकायां गतवन्तः, तेत्रां 'राक्षस' इति नाम त्रेता-द्वापरयुगपर्यन्तमासीत्; किन्त्वधुना तत्र कोऽपि राक्षसशब्दवाची न श्रूयते।

कथनस्येदं तात्पर्यमस्ति यदार्याः कुत्रचिदन्यस्मात् स्थानान्नहि समागताः, अपितु तेषामुत्पत्ति-वृद्धिश्चात्रैव मेरुपर्वते संजाता। एतेषां सभ्यताया विकासोऽप्यत्रैव बभूवेति ऋग्वेदादितो ज्ञायते।

पश्येम शरदः शतम्, जीवेम शरदः शतम्। [ ऋ० ७।६६।१६ ]

अयं वैदिकमन्त्रस्तत्कालीनो वर्तते, यदार्यर्षयो मेरौ ( हिमालये ) निवसन्ति स्म तथा शीतकाल एव तेषां दृग्विषय आसीत्। एवमेव—

शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान्। [ ऋ० १०।१६१।४ ]

अयमपि मन्त्रस्तेषां शीतदेशनिवासित्वं सूचयति। इत्थमेव यत्र मेघानां जलवृष्टेर्वा विवरण-मागतमस्ति, तत्रापि पर्वतीयमेव दृश्यमस्ति। पश्यन्त्वेकस्मिन् स्थले संग्रामे गच्छत इन्द्रस्य कृष्णकवचस्य सादृश्यं जीमूतेन ( जलदेन ) दत्तमस्ति—

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे।
अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा पिपर्तु॥
[ ऋ० ६।७५।१ ]

एतादृशं दृश्यं हिमालयपर्वतस्यैव वर्तते, एतादृशानि जलप्रपातस्यापि दृश्यान्यागतानि सन्ति। आर्याणां पर्वतेषु निवासस्योदाहरणानि वेदेषु प्राप्यन्ते। पश्यन्तु नाम—

शतमश्मन्मयीनां पुरामिन्द्रो व्यास्यत्। दिवोदासाय दाशुषे॥
[ ऋ० ४।३०।२० ]

मन्त्रेऽस्मिन्निन्द्रः स्वस्मै यजमानाय दिवोदासाय प्रस्तरनिर्मिताः शतनगरीः प्रदत्तवानित्युक्तम्। एवमेवैकस्मिन् मन्त्रे एकां प्रस्तरयुक्तां नदीं तर्तुं प्रोत्साहनं दृश्यते। पर्वतीयमेव दृश्यमिदम्—

अश्मन्वती रीयते सं रभध्वमुत्तिष्ठत प्र तरता सखायः।
अत्रा जहाम ये असन्नशेवाः शिवान्वयमुत्तरेमाभि वाजान्॥
[ ऋ० १०।५३।८ ]

एवमेवान्येऽपि वैदिकमन्त्राः पर्वतीयानि दृश्यानि वर्णयन्ति—

इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम् ।
शतं जीवन्तु शरदः पुरूचीरन्तमृत्युं दधतां पर्वतेन ॥

[ ऋ० १०।१८।४ ]

इन्द्राग्नी मित्रावरुणादितिं स्वः पृथिवीं द्यां मरुतः पर्वताँ अपः ।
हुवे विष्णुं पूषणं ब्रह्मणस्पतिं भगं नु शंसं सवितारमूतये ॥

[ ऋ० ५।४६।३ ]

अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः ।
यः शंसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ अवन्तु देवाः ॥

[ ऋ० ८।६३।१२ ]

द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः
शान्तिः वनस्पतयः शान्तिः... शान्तिरेव शान्तिः ॥

अस्मिन् प्रसिद्धे शुक्लयजुर्वेदीये मन्त्रे दिवान्तरिक्षपृथिवीभ्यः जलौषधिवनस्पतिभ्यश्च शान्तिप्रार्थनाः वर्तन्ते। इमानि सर्वाणि पर्वतीयान्येव दृश्याणि सन्ति ।

अनेन प्रकारेणार्याणां तत्तद्ग्रन्थैः पदे पदे सिद्ध्यति यत्ते पुरैतेषु पर्वतेषु वसन्ति स्म। अत्रैव मेरौ तेषां सभ्यताया विकासोऽभवत्। आर्या नैव कुतश्चिदागताः, अपि त्वित एव अन्येषु स्थलेषु नूनं गताः। तेषु च ते आर्यधर्मविहीना भूत्वा, 'अनार्य'शब्दवाचिभिर्विभिन्नैर्नामभिः संबोध्यन्ते ।

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
पौण्ड्रकाश्चोड्रद्रविडाः काम्बोजा यवनाः शकाः ।
पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः ॥
मुखबाहूरुपज्जानां या लोके जातयो बहिः ।
म्लेच्छवाचश्चार्यवाचस्ते सर्वे दस्यवः स्मृताः ॥ [मनु० १०।४३–४५]

अनेन विवरणेनार्याणामन्येषु देशेषु गमनं स्फुटं सिद्ध्यति । आर्याणां पर्वतनिवासविषये शंकायास्तर्कस्य वा विषय उपस्थितो भवितुं शक्नोति। किन्तु यादृशं भूगर्भशास्त्रिणां कथनमस्ति—'आदिकालतोऽद्यावधि पृथ्वीतलस्य पर्वतानाञ्च विभिन्नानि परिवर्तनानि जातानि सन्ति' इति, तदनुसारमिमानि पर्वतीयस्थलानि कस्मिंश्चित् कालेऽवश्यमेव निवसितुं योग्यान्यासन्। अधुनाऽपि स्थानानीमानि प्राकृतिकसौन्दर्ययुक्तानि सन्त्येव ।

# श्रीहाराणचन्द्रभट्टाचार्याणां जीवनेतिवृत्तम्

श्रीनरहरिशास्त्री थत्ते, संस्कृतमहाविद्यालयः, लश्कर ।

शेषाशेषसदुक्तियुक्तिकुशलो यः साहितीतत्त्वविद्
मीमांसानयसांख्यसाररसिको वेदान्तशान्तान्तरः ।
श्रौताचारपरम्पराप्रतिफलत्तेजोविशेषोज्ज्वलन्
भट्टाचार्यपदान्वितो विजयते हाराणचन्द्रः सुधीः ॥

अस्ति वङ्गप्रदेशे 'राजशाही'मण्डले नवग्रामाख्यं स्थानम् । तदन्तर्गते 'वालुभरा'नाम्नि ग्रामे श्रीप्रसन्नचन्द्रचक्रवर्तिभट्टाचार्याख्यः प्रख्यातवंशो विप्रश्रेष्ठो बभूव । वङ्गदेशे चक्रवर्तीति, भट्टाचार्य इति च विप्रश्रेष्ठानामुपाधी प्रसिद्धौ । श्रीप्रसन्नचन्द्रस्य सप्तसु पुत्रेषु तृतीयोऽस्मच्चरितनायकस्तत्रभवान् श्रीहाराणचन्द्रभट्टाचार्य आसीत् । अयं १२६६ वङ्गाब्दे मार्गशीर्षकृष्णामावास्यायाम् ( ईशवीये १५-१२-१८८६ दिनाङ्के ) स्वजनुषाऽलमकरोत्स्वान्वयम् । बाल्यत एव प्रखरबुद्धेरस्य ज्ञातव्यवस्तुषु सद्योग्राहिताऽऽसीत् । वयसोऽष्टमेऽब्दे यथाविधि विहितोपनयनसंस्कारोऽयमध्येतुमुपाक्राम्यत् ।

यावदयं दशमवर्षदघ्नो भवति, तावन्महती दारुणाऽऽपत्तिरापतिताऽस्मिन् । वङ्गदेशीयां प्रथामनुसरन्ती न काऽपि कुलललना स्वीये वासगृहेऽपत्यं प्रसूते, अपि तु सा गृहपार्श्वे सद्योनिर्मितायां पर्णकुट्यामेव प्रसूतेर्दश दिनान्यतिवाहयति । तादृशे चैकस्मिन्नवसरे यदास्मच्चरितनायकस्य जननी कनिष्ठं पुत्रमजीजनत्तदैकस्मिन्दिने सहसा पर्णकुट्यां व्याप्तो ज्वलनः सवासगृहां तां पर्णकुटीं भस्मीचकार । परिणामतस्तस्मिन्हुताशेऽस्य मातुः, पितुः, भ्रातुः, स्वसुः, सद्योजाताशिशोश्चेति पञ्चानां जीवानामाहुतिरपतत् । हन्त ! अगम्या भगवल्लीला ! केवलमस्मच्चरितनायकोऽष्टवर्षदेशीयेन श्रीकालीकिङ्करचक्रवर्तिनाम्ना स्वकनीयसा भ्रात्रा साकं तस्मादग्नेः सुरक्षितो निरगात् । अथासौ न केवलमनाथतयाऽपि तु कनीयसो भ्रातुः संवर्धन-संगोपनचिन्तयाऽप्यत्यन्तमेवाक्राम्यत । ग्रामेवासिनां साहाय्येन त्रयोदशदिनानि मृतानां कथंचिदन्त्यविधीन् विधाय सत्वरमसौ भ्रात्रा सह रङ्गपुरे स्वमातुलगृहमगच्छत् । किन्तु तत्रायं शीघ्रमेवान्वभवद्यदस्य मातुलपरिवार इमौ बालावपि भाररूपौ मन्यत इति । यतोऽनयोर्मातरि दिवंगतायां न ते जनाः पूर्ववदाभ्यां व्यवहर्तुमिष्टममन्यन्त । स्पष्टमनयोरनाथतैव तत्र हेतुरासीत् ।

तर्कयन्तु सहृदया ईदृशे लघिष्ठे वयसि तादृशेषु चापत्तिप्रसंगेषु कीदृश्यस्य मनःस्थितिरभवदिति ! रात्रौ त्रिवादनवेलायां श्रीहाराणचन्द्रो भ्रात्रा सह केनाप्यज्ञातो मातुलगृहात्तूष्णीं निष्क्रम्य प्रस्थितः कुत्रापि सांमुखीने मार्गे पदातिरेव । स्वान्तिके न किमप्युपकरणमासीन्न वा किंचिद्धनम् । उभावेव क्षुत्क्षामकण्ठौ चलन्तावतीवाश्राम्यताम्, तथापि तस्यामपि स्थितावसौ कनीयांसं भ्रातरं परिसान्त्वयन् व्याकुल एवैकमेतादृशं स्थलं प्रापद्यत्र मोहम्मदीयानामेव वसतिरासीत् । तत्र कस्यचिद्यवनसद्मनो बहिश्चत्वरे श्रान्त उपाविशत्; कालीकिङ्करस्तु क्षुदावेगेनाचेतनकल्प एवाजायत ।

अथ कश्चिद्यवनसज्जनो दशामनयोः पश्यन्पृष्टवान् वृत्तम्, आप्लुतश्च दययाऽऽकर्ण्यानयोर्दुरवस्थाम् । स किल भोजनाद्यर्थमन्वरुणत्; परं नायं तद्गृहे स्वयं पक्त्वाऽप्यत्तुमैच्छत् । यवनग्रामेऽपि यदि भवेत्काचिद् गोशाला तर्हि तस्यां गोमयेनोपलिप्य भूमिं स्वयं पाके न कश्चिद्दोषो मन्यते स्म जनैः । अतस्तस्यैव यवनसज्जनस्य साहाय्येन तत्रत्यगोशाले सामग्रीं संचित्य स्नानाद्यनन्तरं कथंचिदोदनं पक्त्वा द्वावपि भ्रातरौ दुग्धौदनमात्ताम् ।

इत्थमनेकाः संकटपरंपरा अनुभवन्ताविमौ पदाती एव त्रिंशच्चत्वारिंशान् क्रोशान् मार्गमतीत्य स्वपितुर्यजमानस्य श्रीशरच्चन्द्रखाँमहोदयस्य तत्रत्यन्यायालयीयन्यायाधीशस्य भवनं प्राप्तौ । तत्रान्येद्युः कस्यचिद्यजमानान्तरस्य गेहे श्राद्धावसरे समाहूतः श्रीहाराणचन्द्रः स्वस्मै मुद्राद्वयमन्यविप्रेभ्यश्च तदधिका मुद्रा दक्षिणां दीयमानां दृष्ट्वा स्वस्याविद्वत्त्वं च तत्र वैषम्ये कारणं बुद्ध्वा तत्क्षण एव प्राक्षिपत्तां दक्षिणामघोषयच्च—'पाण्डित्यसंपादनोत्तरमेवात्र गृहे दक्षिणामादास्ये' इति । प्रत्यागतश्च शरच्चन्द्रखाँसमीपं प्रार्थयत्तं यत् कथमपि भवान् मां क्वचिदध्ययनार्थं प्रेषयेदिति । सोऽप्यस्यादम्यमुत्साहं दृढां पिपठिषां च ज्ञात्वा वाराणस्यां प्रातःस्मरणीय-महामहोपाध्याय-पण्डित-श्रीशिवकुमारशास्त्रिवर्याणामन्तिके प्रैषयदेनम् । शास्त्रिवर्यैर्बालस्यास्याकृत्या भाषितेन च सम्यगभिज्ञातं भावि वैदुषीपाटवं कृपापात्रत्वं च सद्यः । तेषामेवान्तिके संरक्षणे चायं सम्यक् शास्त्राण्यध्येतुमारभत, नैव चान्यस्य वस्तुनस्तदानीं विचारमप्यकरोत् । किञ्च भोजनशयनादिविषयामपि चिन्ताममुञ्चत् । तं कंचित् कालमसौ वङ्गीयायाः कस्याश्चिद्राज्ञ्याः सकाशात् षड्रूप्यकाणि मासिकीं वृत्तिमलभत, अनन्तरं च कियदवधि 'राजशाही'मण्डलान्तार्गत'दीघापतिया'स्थानेशितुः राज्ञः सकाशादष्टौ रूप्यकाणि प्रतिमासमलब्ध । एषां रूप्यकाणामधिका अंशाः पुस्तकक्रय एव व्ययीभवन्ति स्म । कदाचित्तु सकलैरेव रूप्यकैः पुस्तकानि क्रीत्वा मुष्टिं मुष्ट्यर्धं वा चणकान् भक्षयन् समयमयापयत् । किन्तु धन्यास्ते पितृकल्पा गुरवो यैर्न केवलं विद्यानामपि तु समये समये भोजनवस्त्रादीनामपि दानैरुपाक्रियत । प्रायेण पण्डितसभेष्वेतं नयन्तस्ते शास्त्रार्थेऽपि प्रावर्तयन् ।

किञ्चेदृशं गुरोर्वात्सल्यमस्मिन्विलोक्येर्ष्यन्ति स्म केचित्, किन्तु गुरुवर्यस्तान्निर्भर्त्स्य तूष्णीं करोति स्म ।

श्रीहाराणचन्द्रस्य विद्यार्जनदृढता केवलमेतावतैव ज्ञातुं शक्यते, यदसौ कदाचिदध्ययने प्रत्यूहकारिणीं निद्रां परिहर्तुं स्वहस्तपादं नागदन्तादिषु बध्नाति स्म । प्रसिद्ध एवैतत्परिपाको यदयं यावच्छास्त्रेषु तादृक् पण्डितप्रकाण्डमभवद्यन्न केवलमध्यापने कस्यापि ग्रन्थस्य काऽपि पङ्क्ति-रनेनाज्ञाता नाभवत्, अपि तु शास्त्रार्थसभेषु महान्तो महारथा अप्येतस्य विद्वत्तापूर्णान् पूर्वोत्तर-पक्षान् श्रावं श्रावं, तथानन्यसाधारणां कल्पकतां च दर्शं दर्शं चकिता भवन्ति स्म । अहो ! यादृशी श्लाघ्या सा गुरुकृपाऽऽसीत्तादृश्येव श्लाघ्या गुरुभक्तिरासीत् हाराणचन्द्रभट्टाचार्यस्य । सततं तन्मुखादस्माभिरिदमेवाकर्णितं यत्किमपि सकलं गुरुकृपाया एव विलसितमास्त इति । नासौ कदाऽपि गुरुसेवावसरमहापयत् । पठनपाठनशयनस्थानाभिमुखं सर्वदा दर्शनार्थं श्रीशिवकुमार-शास्त्रिपादानां चित्रं स्थापितमभवत् । प्रबुद्धो नियतं स तान्प्राणमत् । किञ्च गुरुमेवेष्टदेवममन्यत ।

छात्रावस्थायामयमेकदा मसूरिकारोगेणाक्रान्तः । तदानीं क्वचिदन्यत्र काशीवासेच्छया निवसन्ती एकाकिनी काचित् श्रीशरत्कामिनी देवी नाम साध्वी दयाक्रान्ता सर्वतोभावेन पुत्रीकृत्यामुं शुश्रूषितवती । लब्धस्वास्थ्योऽयं तामेव स्वमातरं मत्वा तदुत्तरं तया साकमेव न्यवसत् । अद्य सा माता अहह ! अशीतिवर्षकल्पा तत्सद्मन्येव पुत्रविरहशोकाश्रूणि मुञ्चन्त्यास्ते ।

काशिकराजकीयसंस्कृतमहाविद्यालयीय-व्याकरणाचार्यपरीक्षोत्तरणसमकालमेव श्रीहाराण-चन्द्रशास्त्रिणः समग्रेषु शास्त्रान्तरेषु समाप्ताध्ययना अप्याजीवनमध्ययनव्यवसायं नामुञ्चन् । अपि तु निरन्तरं 'न मयाऽद्यावि किमपि ज्ञातम्, इदानीमपि बह्ववशिष्यते पठितुम्' इत्येव भाषमाणा दृष्टाः, यद्यपि तदानीं यावदनेकशास्त्रेषु लब्धाचार्यपदवीका बहवः शिष्या एषां व्यराजन्त ।

आरम्भ इमे काशीस्थ-नगवापाठशालायामध्याप्य ततः षण्मासान् कलकत्तासंस्कृतमहा-विद्यालये स्वर्गीयधर्मप्राण-श्रीलक्ष्मणशास्त्रिद्राविडमहाभागानां स्थाने वेदान्तमध्यापयन् । ततो वर्षद्वयं काशीहिन्दूविश्वविद्यालये वेदान्तमध्याप्य वर्षमेकं महामनसां पण्डितमदनमोहनमालवीय-महाशयानामनुरोधेन तेषां गृह एव कार्यमकुर्वन् । किन्तु तावताऽसंतुष्टा एते जयपुरीयफतेहपुरस्थ-शेखावाटीसंस्कृतमहाविद्यालयाध्यक्षतामूरीकृत्यागमन् । परं तत्रापि काश्या विरहं तोषार्हपठन-पाठनाभावं चासहमानाः प्रायेण १९२५ ईशवीये संवत्सरे तत्पदं त्यक्त्वा काश्यां मारवाडीसंस्कृत-महाविद्यालये साहित्याध्यापका भूत्वाऽऽगच्छन् । अचिराच्च तत्रैव प्रधानाध्यापकत्वं लब्ध्वा व्याकरणं चाध्यापयितुमारभन्त ।

१६३२ ईशवीये वत्सरे श्रीमन्माध्वसंप्रदायाचार्याः श्रीसत्यध्यानतीर्थस्वामिपादाः काश्यामागत्य 'अद्वैतमतविमर्श'नाम पुस्तकं जनेषु वितीर्य भस्मरुद्राक्षादिधारणमवैधं प्रतिपादयन्तः श्रीशंकराचार्यविषये तदीयाद्वैतसिद्धान्तविषये चाश्रद्धामुत्पादयितुं प्रायतन्त। तदानीं श्रीहाराणचन्द्र-भट्टाचार्या एव केवलं तदसहमानाः स्वसत्यसिद्धान्तसंरक्षणाय स्वयमुक्तपुस्तकखण्डनात्मकम् 'अद्वैतमतविमर्शखण्डन'नामकं पुस्तकं भागद्वयात्मकं प्रकाश्य विना मूल्यं व्यतरन्, अघोषयंश्च—'श्रीस्वामिमहोदयाः स्वकथनं प्रमाणितं कुर्युश्चेदहं तेभ्यः सहस्रमुद्राः पारितोषिकं दास्ये, स्वयं च शङ्खचक्रान्वितो माध्वमतमङ्गीकरिष्ये' इति। जनास्तु तेन तोषमन्वभवन्नेव, श्रीस्वामिपादाश्च ततस्तूष्णीमतिष्ठन्।

१६३३ ईशवीये वर्षे श्रीहाराणचन्द्रभट्टाचार्यैरवगतं यत् उक्ते मारवाडीसंस्कृतमहाविद्यालये पर्याप्तद्रव्यसाहाय्याभावेन तत्रत्या अधिकारिणोऽध्यापकवेतनानि प्रतिशतं विंशतिमुद्राभिः पञ्चविंशतिमुद्राभिर्वा न्यूनीकर्तुमिच्छन्तीति। भट्टाचार्याः सद्य एव 'अहं स्वपदं त्यजामि, मदीयवेतनेनेतरेषां वेतनपूर्तिः क्रियताम्' इत्युक्त्वा पृथग्भूताः। श्रुत्वा चैतद्वृत्तं पूर्वोक्तशेखावाटीसंस्कृतमहाविद्यालयस्वामी श्रीरामप्रतापचमडियाख्यः कोटिपतिः श्रेष्ठी भूयः समाह्वयदेतान् तत्र। स्वीकृतवन्तश्च पुनस्तत्राध्यक्ष्यं भट्टाचार्या अगच्छंश्च काशीतः ३१-७-१६३३ दिनाङ्के। किन्तु भगवती सरस्वती कथं स्वीयमनन्योपासकं तत्र मरुभूमौ प्रतिष्ठापयेत्? षड्भिरेव मासैस्तत उद्विग्नाः ५-१-१६३४ दिनाङ्के काश्यां परावृत्ताः कंचित्कालं स्वगेह एवावृत्तिकमपाठयन्।

अथ २३-७-३४ दिनाङ्के काशिकराजकीयसंस्कृतमहाविद्यालये प्राध्यापकाः समभूवन् भट्टाचार्याः। १६३७ ईशवीये वर्षे च कलकत्ताराजकीयसंस्कृतमहाविद्यालये प्राध्यापकत्वमङ्गीकृत्यागच्छन्।

तत्रैव १६४१ ईशवीये वर्षे एभिः 'कालसिद्धान्तदर्शिनी' नाम लघुकायमपि महार्थमेकं पुस्तकं निर्मितं प्रकाशितं च, यत्र निरीश्वरसांख्यमतमारभ्य कालकारणिकमतं यावत् पञ्चाशतोऽधिकमतोक्तानां कालविषयकसिद्धान्तानां सम्यगूहापोहः कृत आस्ते, महामहोपाध्यायपण्डित श्रीगोपीनाथकविराज, एम० ए० महोदयानां भूतपूर्वकाशिकराजकीयसंस्कृतमहाविद्यालयाध्यक्षाणां प्राक्कथनं च विराजते।

१६४२ ईशवीये वत्सरे श्रीहाराणचन्द्रभट्टाचार्यमहोदयान् भारतसम्राट् सम्माननीयया, उच्चैस्तमया महामहोपाध्यायाख्यया पदव्या समभूषयत्।

अन्यानपि कांश्चिद्ग्रन्थान्प्रकाशयितुं यावत्प्रयतन्ते तावत् हा! हन्त! अस्माकं दैवदुर्विलसितेन विषमज्वरेण पीडिता भट्टाचार्याः पञ्चदशदिनोत्तरमेव १३५० वङ्गाब्दे आषाढकृष्ण-

दशम्याम् ( २७-६-१६४३ दिनाङ्के ) स्वकुटुम्बीयान् रुदतः परित्यज्य प्रयाता अस्मात् संसाराच्छाश्वते शिवलोके। तदुक्तम्—

सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः।
तदपि तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः॥ इति।

श्रीभट्टाचार्याणां पालिका माता श्रीशरत्कामिनी देवी तथा तेषां ज्यायसी धर्मपत्नी श्रीसुषमादेवी काश्यामेव तेषां स्वीयसद्मनि अनाथे कष्टमयं जीवनं कथमपि यापयतः। कनीयसी धर्मपत्नी अन्यत्र निवसति। श्रीभट्टाचार्याणां कनीयान् भ्राता श्रीकालीकिङ्करचक्रवर्ती कलकत्तानगरे वसन् वयसः सप्तविंशेऽष्टाविंशे वा वर्षे एव पञ्चत्वमगात्। शतशः शिष्या श्रीगुरुस्मारकरूपा अनेकेषु स्थानेषु अध्यापनादिकार्यं संपादयन्ति।

श्रीहाराणचन्द्रभट्टाचार्यनिर्मितस्य 'कालसिद्धान्तदर्शिनी'पुस्तकस्य मूल्यं रूप्यकद्वयमात्रम्। किन्तु विक्रयप्रबन्धाभावेन तानि पुस्तकानि काश्याम् अगस्त्यकुण्डास्थाने (नं० १३२) तद्धर्मपत्न्याः श्रीसुषमादेव्या निकटे स्थितानि। यदि कश्चित्प्रकाशकमहाशयस्तद्विक्रयप्रबन्धं कुर्यात्तर्हि स्वार्थं, ग्रन्थकृत्परिवारसाहाय्येन पुण्यं चापि संपादयिष्यति।

# दीक्षान्ताभिभाषणम्

डा० सुनीतिकुमारचट्टोपाध्यायः, पश्चिमवंगविधानपरिषदध्यक्षः, कलिकाता।

काशीहिन्दूविश्वविद्यालयोपकुलपति-श्रीवेणीशंकरझामहोदयाः, निखिलसंस्कृतशास्त्रमूर्त्त-प्रतीकविद्वद्वरेण्यसंस्कृताध्यापकमहोदयाः, काशिकराजकीयसंस्कृतमहाविद्यालयस्य माननीया अध्यक्षमहोदयाः, सभायां समुपस्थिता भद्रमहोदयाः, संस्कृतमहाविद्यालयस्य स्नातकास्तथापरे च विद्यार्थिनः !

संस्कृतवाङ्मयचर्चायास्तथा प्राचीनभारतीयज्ञानानुशीलनस्य प्रधानतमे केन्द्रे, अद्यतने सुमहत्यनुष्ठाने दीक्षान्तोपदेशकत्वेन वृता गीर्वाणवाण्या दीनसेवका वयं भवद्भ्यो हार्दमभिवादनं विज्ञापयामहे। परमस्मिन् सुमहत्यनुष्ठाने स्वकीयमनुपयुक्तत्वं विचार्य वयं भवद्भिरात्मानं क्षमयामहे च। स्वसंबन्धे केवलमेतदेवाहं वक्तुं शक्नोमि, यदहं संस्कृतवाङ्मयानुरागी भक्तः, तथा च अस्माकम् पित्र्यपैतामहं यद् रिक्थं न तत्केवलं भारतीयानां परं सर्वेषामेव विश्ववासिनां साधारणीभूतम्; तेन वयमात्मनो धन्यान् मन्यामहे।

भारतवर्षस्य सुमहान्तः प्रधानमन्त्रिणः श्रीपण्डितजवाहरलालनेहरूमहोदया उपरिष्टादुद्धृते संदर्भे सर्वेषामेव भारतसुसन्ततीनां हृदयाभिप्रायमेभिः शब्दैः प्रकटितवन्तः—"यदि कोऽपि मां पृच्छति, 'भारतस्य किं परममैश्वर्यम्, किं वा तस्य श्रेष्ठं रिक्थम्' इति, तत्राहमद्वैधं ब्रवीमि—'तत् खलु संस्कृतवाङ्मयम्, संस्कृतसाहित्यम्, यत् किंचिच्च तस्मिन्निहितम्' इति। सुमहत् खल्वेतदैश्वर्यम्। यावदेतद् विद्यते, अस्माकं जीवनयात्रां च प्रभावयति, तावदेव भारतवर्षस्य मौलिकी प्रतिभा प्रवर्त्तमाना स्थास्यति" इति।

संस्कृतभाषाया महत्त्वमेवमुद्घाट्य, अस्माकं प्रधानमन्त्रिमहोदयैरेतदेव प्रकाशितं यदन्तरतस्तत्रभवन्तः प्रकृतभारतीया एव। ईदृशं रिक्थमल्पेष्वेव देशेषु वर्तते, एतन्निमित्तं च यथार्थत एव मानिनो वयम्। संस्कृतवाङ्मयमेव आधुनिके विश्वस्मिन् साहित्यिकैतिह्यस्य साहित्यिकभावाभिव्यक्तेश्च सुदीर्घतमं सातत्यं प्रदर्शयति। आस्तां तावत् "संस्कृतभाषा मानवोत्पत्तेः-समकालिकी" इति प्राचीनपन्थिनां पण्डितानां मतम्; आधुनिकविदुषां सुचिन्तिते सावहितं निर्धारिते च मतेऽपि संस्कृतवाङ्मयस्य वर्षसहस्रत्रयं ततोऽप्यधिकतरं कालं वा यावदनिर्बाधं

कालेषु चैनिकसभ्यता बौद्धधर्ममाध्यमेन दार्शनिकचिन्तायां तथा चापरासु साहित्यविज्ञान-शिल्पादिविभिन्नशाखासु भारतीयसभ्यताद्वारा सुदृढं प्रभावितासीत्। तथापि सुगृहीतभारतीयोपादानाढ्या चैनिकसभ्यता स्वप्रकृत्या अद्वितीयैवासीत्। संस्कृतयवनभाषाभ्यां सह चैनिकभाषापि मानवजगति मौलिकचिन्ताधारायाः परमदिव्यानुभूतेश्चाभिव्यक्तिश्रेष्ठसाधनत्रये अन्यतमैव भवति। प्रतिदिवसमेतद् विस्पष्टतरं भवति, यद् भारतवर्षे वयं यवनेभ्यश्चैनिकेभ्यश्च कतिपयान्युपादानानि गृहीतवन्तस्तथैव ते विशेषतश्चैनिकाः, अस्मद्बहून्युपादानानि आप्तवन्तः।

भारतभूखण्डे एवास्मदीयभारतीयसभ्यताया विकासोऽभूत्। आधुनिकविदुषां मते तस्या घटने विभिन्नमौलिकजातीनां समवायो विद्यते। तासु चार्य-द्रविड-निषाद-किराताख्याश्चतस्र एव प्रधानाः। शुद्धा वा मिश्रा वा, सर्वास्ता जातयो भारते विकसितस्य वर्णाश्रमस्यापूर्वसमाजव्यवस्थायामन्तरभूवन्। तत्र न केवलं प्रधानवर्णचतुष्टयस्य, प्रत्युतानुलोम-प्रतिलोमादिविवाहसंस्कृतेभ्य उद्भूतानां बहुसंख्यकानां मिश्रजातीनामपि स्थानमासीत्। भारते हिन्दूजातीनां प्राचीनविकासस्य मूलमितिवृत्तं वा यत्किञ्चिदपि भवतु, किन्तु निःसन्दिग्धमेतद्यत् समग्रजातेर्जीवनयात्रा शनैः शनैः कतिपयसामाजिकमूल्यबोधकविशिष्टव्यवस्थायां सुघटिता अभूत्; व्यवस्थायाश्च तस्याः केषांचिद् विशिष्टोपादानानामद्यापि मानवहिताय गुरुत्वं विद्यते। दक्षिणाफ्रीकादेशे, अन्यत्र च काश्चित् श्वेतजातयो यन्निर्दयं 'पृथक्करणनीतिम्' अनुसरन्ति, तत्तु मानवताविरोधी अभिग्रह एव। समाजजीवने विभिन्नगणेभ्यो यथेच्छं पृथगवस्थानाय, परं तथैव चैकस्यैव साधारणसमाजस्याधिवासित्वाद् यथाप्रयोजनं यथासम्भवं सहावस्थानाय परस्पर-सहयोगित्वाय चावसरं प्रदाय जातिवैचित्र्यजन्यवैमत्यच्छेदाय प्रत्यभिग्रहस्तु केवलं भारतीयवर्णव्यवस्थयैव कर्तुं शक्यते, यद्यपि नाधुनिक्या सुकठोरया वर्णव्यवस्थया, परं प्राचीनमध्ययुगीय-भारते प्रचलितया शिथिलवर्णव्यवस्थया, यस्मिन् युगे प्राणवतां हिन्दूनां प्रगतिशीला जीवन-सम्बन्धिनी दृष्टिरासीत्।

तद्यथा तथा भवतु, अस्मदीयं संस्कृतरिक्थं सर्वैरेवास्माभिः समादरणीयम्, तथा न केवलमस्मदर्थं किन्त्वस्मदीयाभ्यः सन्ततिभ्यः निखिलमानवजातिभ्यश्च रक्षणीयम्। सर्वेषां भवतां सुपरिचितं विषयमधिकृत्य विस्तरवर्णनेन नाहं भवतां समयापहारमिच्छामि। सुमहदेतद् रिक्थं प्रधानतः पुरुषपरम्परया नैष्ठिकहिन्दूजैनसंस्कृतपण्डितानां तथा सम्प्रदायान्तरेष्वन्तर्भूतानां विदुषां निःस्वार्थपरसेवयैव सुरक्षितम्। ते च विद्वांसो जगत्समक्षे सरलजीवनयापनपूर्वकमुदात्त-चिन्तनस्य तथा प्रबलाननुकूलावस्थायामपि अतीतकालात् शाश्वतरिक्थसंरक्षणकर्मणि उज्ज्वलादर्शं

प्रकटितवन्तः। प्रगाढास्माकं कृतज्ञता तेभ्यः संस्कृतपण्डितेभ्यः, ये प्रकृतप्राचीनब्राह्मणादर्शानुप्राणिताः सन्तो दारिद्र्यदुःखादिकमविगणय्य देवर्षिपितृऋणपरिशोधार्थं स्वयं प्राचीनशास्त्रादिकमधीत्य समादर्शानुप्राणितान्तेवासिनः समध्याप्य च स्वान्तःसुखेनैव परितृप्ता आसन्।

आधुनिकयुगे नरनारीणां मनोवृत्तिः पारस्परिकसहयोगितायाः सेवाभावाच्च परिवर्तिता सती प्रतिस्पर्द्धितायां व्यक्तिगतविरोधाचरणे च पर्यवसिता। किन्त्वेतादृशादाधुनिकयुगात्प्राग् भारतीयसमाजः प्राचीनब्राह्मणादर्शस्य दैनन्दिनजीवने प्रयोगायानुकूल एवासीत्। न कदापि पण्डित आत्मचिन्तापरायणोऽभूत्, किन्तु आपामरप्राज्ञः समाजस्थो जनः सदैव तदर्थं समचिन्तयदेव। अर्थवन्तो राजपुरुषाः भूम्यधिकारिणश्च सामाजिकेषु पारिवारिकेषु चोत्सवादिषु भूमिमुद्रादिदानेन कर्त्तव्यमेतन्निष्पादितवन्तः। विभिन्नेभ्यो दिग्देशेभ्यो भरणपोषणपूर्वकं गृहीतच्छात्राः पण्डितप्रवरा अपि न कदापि तेषां स्वयंवृतकर्तव्यपालने अभावपीडिता अभूवन्। समाजजीवने कथञ्चिन्निम्नस्थानाधिरूढा जना अपि संस्कृतपण्डितेभ्यः सर्वसौकर्यविधानाय यथाशक्ति सचेष्टा आसन्। सर्व एव ते सुविज्ञातवन्तो यत्प्राचीनज्ञानसंरक्षणेन ते विद्वांसस्तेषां सामाजिकसांस्कृतिकजीवनस्य मर्मस्थानमेव रक्षन्त आसन्। जीवनयात्रामानं निखिलसमाजार्थं स्थूलतः समरूपमेवासीत्। नासीन्निष्ठुरनिर्दयसम्पत्समक्षे दारिद्र्यमुपस्थाप्य तत्सुदुस्सहतरं कर्तुं किमपि प्रबलं वैषम्यम्। आसीत् खलु भूसम्पदादिसहितं वंशकौलिन्यम्, किन्तु सांस्कृतिकाभिजात्यं सम्मानितततरमेवासीत्। तदानीमपि सदसदुपायैर्धनार्जनकारिणो धनिन आसन्। किन्तु इदानीन्तनकाले अस्मद्देशीयसमाजे यद्धनाभिजात्यं प्राधान्येन वर्तते, तत्तदा जनसाधारणानां स्वतःप्रवहमानां भक्तिं नार्हति स्म। एतन्निमित्तमेव संस्कृताध्ययनस्य पारमार्थिकत्वेन शास्त्रभावधारया चानुप्राणितैर्दरिद्रपण्डितैः सरलजीवनयापनपूर्वकमुदात्तचिन्तनेन अन्तःसुखलाभे किमपि ग्लानिकरत्वं दुःखावहत्वं वा नानुभूयते स्म। इदानीं तु सर्वमेव परिवर्तितम्। आधुनिकयुगाधारावशाद् व्यक्तिस्वातन्त्र्यस्य स्वार्थपरत्वस्य च साधारणी मनोवृत्तिः प्रादुर्भूता। अस्माकं सङ्घबद्धसमाजजीवनस्य मूलभित्तिरपि विध्वस्तप्राया। नास्माभिर्युगधारा व्यक्तिविशेषा वा दूष्यन्ते। सर्वं खलु परिवर्तनशीलम्, न च किमपि जगति शाश्वतिकत्वेन विराजते। 'जगति सर्वमेवेश्वराधीनम्, वर्तमानदुरितानि च कलियुगेऽवश्यम्भावीनि' इति चिन्तनेन धर्मनिष्ठैर्जनैः कथमपि सान्त्वना प्राप्तुं शक्येत नाम। क्रमशो वर्धमानया जनसंख्यया सह जीवनसंग्रामः कठोरात्कठोरतरो बोभूयते। लोकश्च सर्वस्मिन् विषये सुस्निग्धदृष्टिमत्सुखमयजीवनं परित्यक्तुं विवशो भवति। इदानीन्तने कठोरप्रतिस्पर्द्धितायुगे सर्वेऽपि जना अर्थपरायणा भवन्ति, तेषां

सूक्ष्ममनोभावा अपि स्तब्धीभवन्ति। एवमेव समाजो हि परिवर्त्तते, तेन च परिवर्त्तनेन सह लोकानामपि पारलौकिकविषयेषु कापि श्रद्धा कोऽपि अनुरागो वा न विद्यते। प्रकृता जननायकाः खलु सूक्ष्मानुभूतीनां क्रमशो वर्धमानयाऽवनत्या चिन्तान्विता एव। भगवद्विश्वासजातादर्शवाद-रहितैर्वस्तुतान्त्रिकैर्जडवादिभिर्वा नेतृभिरपि मानवतासंस्कृत्यनुरोधाद् वर्तमानदुरितप्रतिरोधार्थं यत्नाः क्रियन्ते।

फलितं तु तावदेतद्यद् हिन्दूजीवनधारा सर्वत्रैव ग्रहग्रस्तेव वरीवर्त्ति। तथा च धर्मकर्मादिना उत्सवाह्निकश्राद्धादिपार्वणप्रभृतिना च किंचित् सम्पृक्तास्मदीयधर्मजीवन-संस्कृतिमूलभित्तिरपि कथंचिद् बाधाप्रहता। फलेन चैतदनुष्ठानादिभिः सह सम्पृक्ताः संस्कृतपण्डिता अपि दुर्दशाग्रस्ता भवन्ति। जनसाधारणास्तेषां कृते नैव चिन्तयति। एतद्-विषये पृष्टाश्चेदेवं ते समामनन्ति यदेतेषां सामाजिकधार्मिकानुष्ठानानाम्, तेषामध्वर्यूणां च वर्त्तमानसमाजे किमपि स्थानम् (अन्ततो गुरुत्वपूर्णम्, अत एव सम्मानजनकं स्थानं) नास्ति। सर्वत्रैव ते महता कष्टेनातीवदुर्दशया च यथाकथंचिज्जीवनं यापयन्तीति प्रतिभाति। सत्यम्, अधुनापि तादृशानां निष्ठावतामैकान्तिकाभावो नास्ति, ये संस्कृतपण्डितानां कृते यथाकर्त्तव्यं सम्पादयितुं यतन्ते। किन्त्वेतादृशलोकानां संख्याऽनुदिनं क्षीणादपि क्षीणतरा बोभूयते।

संस्कृतपण्डितानां धार्मिकश्रौतस्मार्तसामाजिकानुष्ठानातिरिक्तोऽन्यः कोऽपि प्राणधार-णोपायो निरुद्ध एव। लन्दनविश्वविद्यालयानुयायिपाठ्यक्रमानुसारिण इङ्गलैण्डीयराजपुरुष-प्रतिष्ठापिताः कलिकाता-मुम्बापुरी-मद्रासनगरीस्था विश्वविद्यालया भारतवर्षस्य संस्कृतचर्चायाश्च महोपकारमेकं साधितवन्तः। कतिपयपरीक्षार्थं ते संस्कृतमनिवार्यविषयत्वेन निर्द्धारितवन्तः। परिणामतश्च तदा सर्वप्रथमं संस्कृतभाषाद्वारं जातिधर्मनिर्विशेषं सर्वेषां कृते उन्मुक्तमभवत्। एतदेव च तस्य सद्यः फलं यद्ब्राह्मणेषु विशिष्टकोविदान्तरेषु चैतावन्निरुद्धं संस्कृतवाङ्मय-ज्ञानम्, क्षुद्रं निरुद्धमपि क्षेत्रं बृहत्तरक्षेत्रे विततमभूत्। तत्सहितं च सर्वसाधारणेषु संस्कृत-वाङ्मयं जातीयरिक्थमित्यभिमानबोधः संजातः। नूनमेवैष एको महान् लाभः। अनेन च सहान्यदपि किंचित् सुफलं संजातम्। बहवः संस्कृतपण्डिताः, येऽन्यथा यथाकथंचिदपि प्राणधारणार्थं हिन्दूसमाजान्तर्भूतधनिकानां दानध्यानादिके सुसमाजबोधे च निर्भरशीला आसन्, ते परःशतेषु विश्वविद्यालयान्तर्भूतेषु देशस्य सर्वत्र प्रतिष्ठापितेष्वाङ्ग्लविद्यालयादिषु सम्मान-जनकशिक्षकाध्यापकादिवृत्तिषु नियुक्ता अभवन्।

किन्तु भाग्यस्यैषा विडम्बना ययाऽधुना, विशेषतोऽस्माकं स्वाधीनतोत्तरकाले सर्वमेतत्

सम्पूर्णं विपर्येति। भारतीयशिक्षाक्षेत्रस्य पुरोभागे मातृभाषाणामाञ्चलिकभाषाणां वा क्रमेण वर्धमाना स्वीकृतिर्न केवलमाङ्ग्लभाषायाः, परं संस्कृतभाषाया अपि विरुद्धमाचरति बहुषु स्थानेषु हिन्दीभाषा संस्कृतभाषायाः प्रतिस्पर्धिनी जाता। अहिन्दीभाषिराज्येषु छात्रसम्प्रदायो हिन्दी-संस्कृतयोरन्यतरनिर्द्धारणे संशेते इति मयैव दृष्टम्। बहव एवं चिन्तयन्ति यद्-भाविराष्ट्रभाषारूपिण्या हिन्दीभाषयाऽर्थोपार्जनं भविष्यति। अतस्ते संस्कृतपरिहारेणापि हिन्दीभाषामेव सादरं गृह्णन्ति। बहुषु विश्वविद्यालयेषु प्रवेशिकापरीक्षार्थं विद्यालयाध्ययनसमापनपरीक्षार्थं वा नातः परं संस्कृताध्ययनस्यानिवार्यत्वं वर्त्तते। ततश्च तेषु विद्यालयेषु संस्कृतशिक्षका न नियोज्यन्ते। फलेन च शतशः संस्कृतशिक्षका एवं स्ववृत्तिच्युता भविष्यन्ति। प्राचीनेषु पाठशालादिषु च संस्कृतशिक्षार्थिनां संख्याह्रासः संजातः, यतोऽविमिश्रसंस्कृतशिक्षाप्राप्ताः कृतिनोऽपि च्छात्रा वर्षाद्वर्षान्तरं बुभुक्षयैव पीड्यन्ते। कोऽत्र प्रतीकारः?

बहव एवं मन्यमाना इव संलक्ष्यन्ते, यत्प्राचीना संस्कृतपद्धतिः परम्परानुयायिनां हिन्दूनां कस्मिंश्चिद् भावादर्शे प्रतिष्ठिता। तेषां मते कालोपयोगित्वाधुनिकत्ववास्तववादित्वाद्यर्थमस्माभिर्दृष्टिपरिवर्तनमवश्यमेव विधेयम्। एवंविधमतावलम्बिषु बहुषु विद्वज्जनेषु संस्कृतवाङ्मयस्य भारतीयसंस्कृतेश्चानुरागिणामभावो नास्ति। तेषु केचिदेवमामनन्ति यत्प्राचीन-पाठशालाटोलचतुष्पाठीप्रभृतिषु प्रचलितायाः संस्कृतशिक्षापद्धतेर्वर्त्तमानकालोपयोगी संस्कारो विधेयः। संस्कृतं प्रत्यन्धभक्तिमूलको मनोभावः समालोचनात्मके इतिहाससम्मते च समादरे परिणमतु नाम। श्रेष्ठतमा यूरोपीयपण्डितास्तेषां यवन- (ग्रीक) -लातिनादि प्राचीन-भाषाः प्रतीदृशमेव मनोभावं पोषयन्ति। एष मनोभावः प्राचीनपद्धतिसम्मतपाण्डित्ये संस्कृतं प्रति मूलभित्तित्वेन यान्धभक्तिरप्यस्ति, तस्यां किंचिदपहारं कुर्यान्नाम। परमनेन समालोचनात्मकमितिहाससम्मतं च सुयौक्तिकं किमप्यानेष्यते, यत् सर्वेषां मनसि संस्कृत-वाङ्मयसाहित्यं प्रति श्रद्धानुरागादिकं जनयिष्यति। विषय एष ह्याङ्ग्लविद्यापीठविश्वविद्यालयादिषु यूरोपीयप्रणाल्या शिक्षितानाम्, तथा प्राचीनपाठशालादिषु निःस्वार्थशास्त्रचर्चया देववाण्यां समधिगतप्रावीण्यानां चिन्तानायकानां मनोयोगाकर्षणमर्हति। आधुनिककाले भारतीयचिन्ताधारायां शिक्षाक्षेत्रे च संस्कृतवाङ्मयस्योपयुक्तस्थानरक्षणार्थं कांचित् सुयौक्तिकीं शाश्वतीं च नीतिं निर्धारयितुमुपयुक्तानां द्विविधानामपि विपश्चितां सहयोगिता नितरामावश्यकी।

विदितं खलु भवतां यद्भारतीयेनाधिशासनेनैकः 'संस्कृतायोगः' नियुक्तः। ये च तस्यायोगस्य सदस्यत्वेन निर्दिष्टास्ते सर्वे एतद्विषये जनसाधारणानां मतामतम्, चिन्तानायकानां

सुचिन्तितसूचनां च परिज्ञातुं समुत्सुकाः सन्तिष्ठन्ते । स्वभावत एवायोगस्य सिद्धान्त एतद्विषय-मधिकृत्याभिमतप्रदानसमर्थानां जनानां सुयौक्तिकमतोपहारबाहुल्येन प्रतिष्ठितो भविष्यति । ममैषा च सुदृढा धारणा यदेतादृशजातीयगुरुत्वपूर्णविषयेऽस्मदीयजातीयपरमरिक्थगौरवान्वितानां सर्वेषामेव पूर्णसहयोगिता भविष्यति ।

समावर्त्तनोत्सवे साफल्यमण्डितानां छात्राणामाशाकांक्षासमस्याकर्त्तव्यादर्शादिक-मधिकृत्य किमप्यनुशासितुं नियमोऽस्ति । मया च तेभ्य इदमेव वक्तव्यं यत्ते नितरां विचित्रावस्थामापतिताः, ते चेमामवस्थां सदुःखमनुभवन्ति च । यदि तावदिदानीं स्वाधीनभारतस्या-धुनिकविश्वविद्यालयानामपि स्नातकसाधारणानां भाग्यं न केवलमनिश्चितम्, परं नैराश्य-मण्डितमपि, तदा संस्कृतमहाविद्यालयपाठशालादिभ्य उच्चैस्तमपरीक्षोत्तीर्णच्छात्राणामपि भाग्यं नूनमेव न समुज्ज्वलतरम् । आत्मनः परितः सर्वत्रैव ते एकदा समाजदेहे सजीवायाः प्रथाया ध्वंसावशेषं पश्यन्ति । अधुना त्वेषा खण्डशो विभिद्यते । न च शक्नुवन्ति ते स्वीयं स्थानं यथायथं रक्षितुम् । यदि तावदधिशासनं संस्कृतवाङ्मयस्य प्राचीनपोषकाणां भूम्यधि-कारिणां धनिकवणिजां च स्थानमधिकर्तुं नाग्रे सरति, तदा तु भविष्यन्न समुज्ज्वलमिव प्रतिभाति । अधुनापि समृद्धदेशेऽस्मिन् महाधनिनो वणिजो वर्त्तन्ते । यथाकर्त्तव्यं पालयितु-मधुना तैरेव स्वयं चेष्टितव्यम् । तत्र भवद्भिर्महात्मगान्धीमहोदयैर्भारतीयवैश्य-( वणिक् )-कुलस्य आदर्श एवं पुनरुद्घोषितो यत्तैर्जनसाधारणानां न्याससंरक्षकत्वेन चरितव्यम् । यः प्रभूतोऽर्थ-सञ्चयस्तैः क्रियते स सर्वजनीनन्यासत्वेन तैर्मन्तव्यः, लभ्यांशाच्च स्वल्पमेव स्वप्रयोजनार्थं परिगृह्या-वशिष्टो निखिलसमाजमङ्गलायैव व्ययितव्यः । एष खलु भारतात्मानुसारी महानादर्शः । निःसन्दिग्धमेतद् यत्सन्ति खलु बहवो महाधनिका वणिककुलतिलका ये आत्मपरकर्त्तव्य-परायणाः सन्ति, एवमादर्शमनुसरन्ति च । परमपरैरपि विषय एष ह्यनुधातव्यः । अद्यतने भारतवर्षे समाजविध्वंसिशक्तयः सर्वत्रैवास्मानभिभवन्तीति संस्कृतनिहितास्मदीयसंस्कृतिभित्तिः सुतरां परिपोषणमपेक्षते । अधिशासनस्यापि कर्त्तव्यमस्ति । यतो भूम्यधिकारिप्रथाविलोपेन सर्वे भूम्यधिकारिणः साधारणनागरिकपर्याये परिणताः, ततः खल्वधिशासनेन पूर्वतोऽप्याधिक्येन संस्कृताध्ययनादिपरिपोषणं कर्त्तव्यम् ।

विषयेऽस्मिन् सम्भावनाबाहुल्यं वर्तते, तच्च यथायथमनुसन्धेयम् । अनुवादादिद्वारा संस्कृतवाङ्मयस्य जनप्रियत्वसाधनायाधिराष्ट्रमधिराज्यं वा विभिन्नक्षेत्रेषु नियोज्यमानाः संस्कृतपण्डिताः ससम्मानं जीविकामुपार्ज्जयितुं समर्था भविष्यन्ति । केचन ग्रन्थप्रकाशका एवं

कृतवन्तः, यथा—वङ्गेषु सर्वाण्येव अष्टादशपुराणानि रामायणं महाभारतं तथापराणि च गुरूणि संस्कृतपुस्तकानि वङ्गाक्षरैः सवङ्गानुवादं प्रकाशितानि, महार्हसम्पद्रूपैस्तैस्तैर्ग्रन्थैर्मातृभाषा-पठनक्षमेभ्यो जनसाधारणेभ्यः संस्कृतविषयकं ज्ञानमेवं वितरितञ्च। माहाराष्ट्री-हिन्दी-गुर्जरो-ड्रियान्ध्रीयाप्रभृतिषु विभिन्नभाषास्वपि एवंविधा ग्रन्थाः प्रकाशिताः। सावहितं विचार्यापि एवंविधान्युपायान्तराण्यपि सन्ति। विभिन्नराज्येष्वधिशासनं संस्कृतस्नातकेभ्य आधुनिकविश्व-विद्यालयस्नातकसमां मर्यादां स्वीकर्त्तुं समुत्सुकमेव। कतिपयैरावश्यकविषयाध्ययनैः संस्कृताध्ययने समुपबृंहिते सति संस्कृतस्नातका अपि लोकसेवाराजसेवादिकर्मणां योग्या भवितुमर्हन्ति। लोकसेवाकर्मसु राज्यशासने च यथानिश्चितानुपातं यथायोग्यशिक्षाप्राप्ताः संस्कृतस्नातका नियुक्ता भवेयुः।

अस्मद्देशीयसंस्कृतस्नातकैरपि देशकालयोः परिवर्तितं रूपं सम्यग् बोद्धव्यम्, तेन च सह यथासम्भवं स्वीयसामञ्जस्यं विधेयम्। संस्कृतविद्यालयेषु या शिक्षा तैः प्राप्यते सा नूनमेव तेषां 'शाश्वती सम्पद्' भविष्यति। अनया शिक्षया तैरधिगतं मानसिकं स्थैर्यमपरेषु दुर्लभमेव। तया सम्पदा यथातथवास्तवदृष्ट्या च तेषां स्वकीयं स्थानमक्षुण्णमेव भविष्यतीति मन्यामहे।

किन्तु मया पुनरवश्यमेवैतद् वक्तव्यं यदस्मिन् विषये संस्कृतस्नातका अपरेभ्य-श्छात्रेभ्यः सामधिक्येन सुपरिकल्पितं राष्ट्रियं समर्थनं परिपोषणञ्चार्हन्ति। कार्येऽस्मिन् अस्मदीयसमाजस्य सर्वविभागस्थैश्चिन्तानायकैः कटिबद्धैर्भाव्यम्, स्वीयं च कर्त्तव्यं तैः सम्पादनीयम्।

प्राचीनभारतीयशिक्षादर्शं सुसंरक्षन्तो वाराणसीसंस्कृतमहाविद्यालयस्य भाविवाराणसेय-संस्कृतविश्वविद्यालयस्यैतद्वर्षीयाः पूर्वतनाश्च स्नातका अनुयायिनश्चापरे स्नातकपरीक्षार्थिनः स्वेषु जीवनेषु साफल्यं सुखं शान्तिं सम्पदञ्च प्राप्नुयुरिति वयमाशास्महे।

शाश्वतैरौपनिषदवाक्यैरधुनोपसंह्रियते—

सह नाववतु, सह नौ भुनक्तु, सह वीर्यं करवावहै।
तेजस्वि नावधीतमस्तु, मा विद्विषावहै॥

—×—

# कुलपतिभाषणम्

**श्रीकुबेरनाथशुक्लः, राजकीयसंस्कृतमहाविद्यालयप्रधानाचार्यः, वाराणसी ।**

माननीया अध्यक्षमहोदयाः, सम्मान्या अतिथयः श्रीसुनीतिकुमारचट्टोपाध्यायमहोदयाः, श्रद्धेया विद्वांसः, स्नातकाः, देव्यः, नागरिकाश्च !

श्रीकाशीमधितिष्ठतो विश्वेशितुर्निरवधिकृपातः सम्पद्यमाने राजकीयसंस्कृतमहाविद्यालयस्यैकादश उपाधिवितरणोत्सवे समुपस्थाय भवन्तोऽस्माननुकम्पितवन्त इति वयं भवतां सर्वेषां हार्दं स्वागतं व्याहरामः । विशेषतः डा० श्रीसुनीतिकुमारचट्टोपाध्यायमहोदयानां, यैरनेकासु विधिव्यग्रतासु सतीष्वप्यस्माकं स्नातकान् दीक्षान्तोपदेशेनानुग्रहीतुमागमनक्लेशः सोढः ।

अयं महाविद्यालयः साम्प्रतं स्वायुषः सप्तत्यधिकशततमे वर्षे प्रवर्तते, अस्मिंश्च महति कालेऽनेन राष्ट्रस्य बहुविधान्युत्थानपतनानि दृष्टानि । शताब्दीद्वयसंबद्धा उत्तरभारतस्य पूर्णा संस्कृतशिक्षापद्धतिरनेन निरतिशयं सम्बद्धा । साम्प्रतमयं महाविद्यालयः संस्कृतशिक्षा च भारतीयस्वातन्त्र्येण साकं नवं युगमनुप्रविशत इति सर्वविदितमेव । अत एव वयं ( १९४७ ) सप्तचत्वारिंशदधिकैकोनविंशतिशततमेशवीयवर्षात् प्रभृति संस्कृतशिक्षायास्तत्परीक्षाणां संस्कृतपाठशालानां च व्यवस्थाविधिषु संस्कृतविद्यालयानां तदध्यापकानां चार्थिकसमुन्नतौ च वेगेन प्रयतामहे, यत्नानुरूपं फलं च लभामहे । अतीतैर्नवभिर्वत्सरैर्ये संस्कृतशिक्षाविषया नवाः प्रयोगा व्यवस्थाविधयो वा कृतास्तैरद्य संस्कृतशिक्षाया भविष्यन् कालोऽविहताभ्यामुत्साहमनोरथाभ्यां संयुतो लक्ष्यते । संस्कृतपरीक्षाणां पाठ्यक्रमे नवीनविषयान् संनिवेश्य तासां नवां संघटनां विधाय तन्मूलीकृत्य प्रथमापूर्वमध्यमोत्तरमध्यमाशास्त्रिपरीक्षाः क्रमतो जूनियरहाईस्कूल-हाईस्कूल-इण्टरमीडियट-बी० ए०-परीक्षाभिः समानतां राज्यप्रशासनत आपादिताः, येनैतत्संस्कृतपरीक्षोत्तीर्णच्छात्राणां कृते विविधप्राविधिकसंस्थासु प्रशिक्षणमहाविद्यालयेषु च प्रवेशद्वारमपावृतम् । किन्त्वस्य सर्वस्योद्देश्यस्य सिद्धिस्तदैव सम्भवेद्यदि पाठशालासु नवीनविषयाणामध्यापनव्यवस्था सुसम्पादिता स्यात् । इदमालोच्य ( १९५३ ) त्रिपञ्चाशधिकैकोनविंशतितमेशवीयवर्षे संस्कृतपाठशालानां समुत्थानायैकाऽऽदर्शयोजना प्रस्तुता । पूर्वं तादृशयोजनान्तर्गता अष्टानवतिः संस्कृतविद्यालया आदर्शविद्यालयत्वेन स्वीकृताः । अतिरिक्तं धनमनुदायाऽऽदर्शविद्यालयस्थानां प्रधानाध्यापकानामध्यापकानां च वेतनस्तरोन्नयनाय पुस्तकालयानां समुपबृंहणाय, नवीनविषयाणां

सम्यगध्यापनप्रवर्तनाय छात्रावासानां विस्ताराय च सोत्साहः प्रयासः प्रारम्भि। एषु विद्यालयेषु च नवीनविषयाणामध्यापनाय योग्याध्यापकानां नियुक्तयो जाताः। नवयोजनामनुसृत्यै-तद्विद्यालयानां नवानि भवनानि निर्मितानि, सुसम्पन्नाः पुस्तकालयाः स्थापिताः, छात्रावासानां च यथापेक्षं समुचिता व्यवस्था संपादिता। अस्मिन् वर्षे चादर्शयोजनायां चतुर्नवतिर्विद्यालया अतिरिक्ताः समावेशिताः। इत्थं साम्प्रतं पञ्चनवत्यधिकशतमादर्शसंस्कृतपाठशालाः सञ्जाताः।

इदानीमुत्तरप्रदेशे चतुस्त्रिंशदधिकं सहस्रं संस्कृतपाठशालाः सन्ति। आस्वादर्शविद्यालय-व्यतिरिक्ता दश राजकीयपाठशाला अपि सन्ति, या पूर्णरूपेण राज्यव्ययेन प्रवर्तन्ते। राज्यद्वारा-नुदानमाप्नुवतीनां संस्कृतपाठशालानां संख्या अष्टापञ्चाशदधिकानि चत्वारि शतानि। पाठशा-लानां राजकीयमनुदानमपि पूर्वापेक्षया साम्प्रतं पर्याप्तमभिवृद्धम्। यत्पुरा त्रिंशत्सहस्राधिकमेकलक्ष-मासीत् तदद्यत्वे उपपञ्चलक्षं वर्तते। एतदावर्तकसहायतातिरेकेण पुस्तकालयानां भवनानां च कृतेऽतिवर्षणभूस्वामित्वोन्मूलनादिप्रयुक्तक्षतिपूर्तये च प्रभूतमर्थसाहाय्यं वितीर्णम्। इत्थमुप-युक्तराजकीयनवीनव्यवस्थया ह्रसन्ती छात्रसंख्या पुनः प्रवर्धितुमारब्धा। ऐषमः केवलमस्मिन्नेव प्रदेशे संस्कृतविद्यालयेष्वधीयानानां छात्राणां संख्या उपचत्वारिंशत्सहस्रं वर्तते। आसु संस्कृत-पाठशालासु कन्यानां संस्कृतपाठशालाद्वयं वर्तते, यत्र पठन्तीनां छात्राणां पञ्चनवत्यधिकानि षट्शतानि सन्ति। पाठशालानां निरीक्षणकर्मणि विशेषातिशयलाभाय संस्कृतभाषायाः प्रजास्वाधिक्येन प्रचारणाय च प्रधाननिरीक्षकस्य साहाय्यायापरे त्रयो निरीक्षकाः क्षेत्रप्रविभागेण नियुक्ताः। इदानीं तु कार्यवृद्धिं समीक्ष्य सहायकनिरीक्षकत्रयस्य स्थाने निरीक्षकपञ्चकं नियोक्तव्यमिति राज्यप्रशासनेन व्यवसितम्। एतन्निरीक्षकपञ्चकस्य क्षेत्रीयकार्यालया वाराणसी-प्रयाग-लक्ष्मणपुर-बरेली-मेरठनगरेषु भवितारः।

संस्कृतपरीक्षार्थिनां संख्या उत्तरोत्तरमेधमाना वर्तते। ऐषमोऽस्य महाविद्यालयस्य परीक्षाः पञ्चषष्टिकेन्द्रेषु संपन्नाः, येषु पञ्चचत्वारिंशत्केन्द्राणि उत्तरप्रदेशे, त्रिंशदुत्तरप्रदेशाद्-बहिर्मध्यप्रदेश-बम्बई-राजस्थान-पंजाब-नेपालप्रभृतिदेशेषु सन्ति। आसु परीक्षासु त्रिपञ्चाशद-धिकत्रिशताधिकचतुर्दशसहस्राणि (१४३५३) छात्राः सम्मिलिताः। नवत्यधिकनवशतानि (९९०) विद्यालयाः स्वच्छात्रान् प्रैषिषन्। एषु पञ्चविंशत्यधिके द्वे शते (२२५) विद्यालयाः उत्तरप्रदेशाद् बाह्या आसन्। नेपाल-बर्मा-लङ्का पाकिस्तानप्रभृतिदेशानामपि च्छात्रा आसु परीक्षासु प्रविशन्ति।

संस्कृतविद्यालयानां विकासः प्रशिक्षिताध्यापकैर्विना दुष्कर इत्यालोच्य, अयं महाविद्यालयोऽतीतैरष्टभिर्वर्षैः प्रतिवर्षमेकं प्रशिक्षणसत्रमपि आयोजयति। अत्र प्रशिक्षिताः

पञ्चपञ्चाशदधिकानि पञ्चशतानि ( ५५५ ) अध्यापकाः संस्कृतविद्यालयेषु मनोवैज्ञानिकपद्धतिमाधारीकृत्य साम्प्रतमध्यापयन्ति। अनयाऽध्यापनपद्धत्या छात्राः सविशेषमाकृष्टाः सन्ति। अत एव छात्रसंख्यायां पर्याप्ता वृद्धिर्दृश्यते।

एतत्कालान्तराल एव सरस्वतीभवननाम्नो महतो ग्रन्थालयस्यात्रत्यस्य स्वरूपविकासार्थमेका योजना निर्मिता। ततोऽस्मिन् काले वार्षिकानुदानातिरेकेणान्यैरनुदानैरुपपञ्चसहस्राणि हस्तलिखितपुस्तकानि क्रीतानि। साम्प्रतमस्मिन् पुस्तकालये षष्टिसहस्राणि पुस्तकानि संगृहीतानि सन्ति। अत्र साम्प्रतिकेन वैज्ञानिकरूपेण सूचीनिर्माणकार्यमपि प्रारब्धम्। सप्तविंशत्यधिकशतद्वयाधिकचतुर्दशसहस्रग्रन्थानां ( १४२२७ ) विवरणात्मिका सूची मुद्रिता। सहस्रत्रयग्रन्थसूचीमुद्रणमुपक्रम्यते। राज्यप्रशासनेनैतादृशो व्यवस्थाविधिः क्रियते, येन संगृहीतानां सर्वेषां हस्तलिखितपुस्तकानामागामिषु पञ्चवर्षेषु सूची सुसंपन्ना स्यात्। 'माइक्रोफिल्म'यन्त्रं क्रीतमस्ति, तेनेदानीं जीर्णपुस्तकानां छायाचित्रं प्रस्तूयते। 'माइक्रफिल्म'यन्त्रस्योपयोगाय शासनेनैकः शाखाविभागः कृतः, तेन जीर्णपुस्तकानां छायाचित्रनिर्माणे स्थायी व्यवस्थाविधिः कृतः।

सरस्वतीभवनपुस्तकालये मुद्रितविभागेऽप्यतिरिक्तैर्विशेषानुदानैरतिरिक्तानि पुस्तकानि क्रीतानि, प्राचीनपुस्तकानां सुरक्षायै नवा व्यवस्था च विहिता। महाविद्यालये छात्राणां कृते राज्यप्रशासनेनैकः पुस्तकालयः स्थापितः, य आवर्तकानुदानैरुत्तरोत्तरमेधते।

अस्य महाविद्यालयस्य विविधेषु श्लाघ्यकार्येषु दृश्यपञ्चाङ्गप्रकाशनमप्येकमभिनवं मुख्यं च कार्यम्। इतः प्राग्राज्यप्रशासनद्वारा प्रकाश्यमानं किमपि पञ्चाङ्गं नासीत्, अत इतः प्राक् चतुर्थे वर्षे दृश्यपञ्चाङ्गमेकं प्रकाशयितुमुपक्रान्तम्। अस्मिन् पञ्चाङ्गे इतरापेक्षया महदिदं वैजात्यं यदस्य निर्माणं दृश्यगणितमाश्रित्य क्रियते। आदावतिरिक्तानुदानं प्रदायास्य प्रकाशनमारब्धम्। इदानीं तु स्वतन्त्र एवास्य विभागो वर्तते, यत्र विशिष्टा विद्वांसस्तत्सम्पादनकार्यं सम्यङ् निर्वर्तयन्ति।

इतः प्रागेकादशे वर्षे 'सारस्वती सुषमा'नाम्नी अनुसन्धानसंस्कृतपत्रिकैका प्रारब्धा। साम्प्रतमियं कलेवर-विषयप्रौढि-गवेषणाभिर्भारतस्य सर्वा अपि संस्कृतपत्रिका अतिशेते। एशिया-यूरोपनाम्नोर्द्वयोरपि भूखण्डयोः सर्वेष्वपि प्राच्यविद्याप्रतिष्ठानेषु पत्रिकेयं प्रायः प्रचरति। अस्या गुणग्राहका ग्राहकाश्च विविधदेशेषु विद्वांसः सन्ति। अस्या विनिमयरूपेण उपषष्टि पत्रिकाविभिन्नभाषासु निबद्धा विभिन्नदेशीयाश्च सरस्वतीभवनपुस्तकालये समागच्छन्ति। अस्यामेतत्कालावधि अप्रकाशिता महिमशालिनश्च लघवो महान्तश्च दश ग्रन्थाः प्रकाशिताः। अस्या दशमवार्षिकेऽङ्के प्राक्प्रकाशितलेखानां लेखकानाञ्चानुक्रमणिका वाचकानां विषयसौलभ्याय प्रकाशिता।

विदुषां परस्परसंवादेन सम्मत्या च शास्त्रीयदुरूहपदार्थतत्त्वानुसन्धानाय चैतन्महाविद्यालयसंबद्धं विद्वद्गोष्ठी-दर्शनपरिषदिति समितिद्वयं विशेषोल्लेखमर्हति। अतीतेषु दशसु वर्षेषु दर्शन-साहित्य-व्याकरण-ज्यौतिषादिविषयानुद्दिश्य विशिष्टविदुषां निबन्धा भाषणानि च विद्वद्गोष्ठ्यां कारितानि। इयं सर्वेषां संस्कृतविदुषां विभिन्नविषयावगाहनवित्तानां सम्मिलितानां गोष्ठी। दर्शनानां विशेषविस्ताराभ्यां सम्यग् ज्ञानाय परुद्वर्षे 'दर्शनपरिषत्' प्रतिष्ठापिता। आर्षदर्शनानां तत्त्वानुसन्धानम्, नवीनदार्शनिकसिद्धान्तानामुद्भावनम्, सामाजिकजीवनोपयुक्तानां दार्शनिकसिद्धान्तानामाकलनमित्येतानि दर्शनपरिषद उद्देश्यानि। इयं दर्शनपरिषत् तिसृभिर्विधाभिः क्षेत्रत्रये व्याप्रियते—१. वादविवादभाषणादिभिश्छात्रेषु तत्तद्दर्शनविषयकाभिलाषजननम्, २. दार्शनिकविषयाणामिदानीमुपेक्षितानां सम्यक् परिचयाय विदुषोऽध्येष्य तद्द्वाराऽनुसन्धानपुरस्कृतनिबन्धपाठस्तेषां भाषणानि च, ३. दार्शनिकशब्दानां कोशनिर्माणं चेति। भारतस्य दार्शनिकविद्वद्भिरस्या बाहुल्येन सम्बन्धः संपन्नः। प्रमाणशास्त्र-शैव-शाक्तागम-वैष्णवदर्शन-बौद्धदर्शनादिष्वपरिचितप्रायेष्वपि विषयेष्वस्मिन्नल्पीयस्येव समये त्रिंशन्निबन्धा विद्वद्भिर्विधापिताः। सांख्ययोगवैष्णवदर्शनागमबौद्धदर्शनान्तर्गतपारिभाषिकशब्दानां कोशनिर्माणमप्युपक्रान्तम्। तत्र सांख्ययोगशब्दकोशः सम्प्रति पूर्णकल्पः।

प्राक् प्रवर्तितां पोष्टाचार्यविधां प्रौढीकर्तुं तत्स्थाने विशिष्टाचार्यनाम्नी अनुसन्धानविधा नवा प्रवर्तिता। इदानीं तस्यां वेदान्तज्यौतिषयोरनुसन्धानं संपाद्यते। साधोलालसमाख्ययाऽनुसन्धानवृत्त्या छात्रान् द्वारीकृत्य, अग्निपुराणस्य समीक्षात्मकं विशुद्धं संस्करणं सज्जीक्रियते।

इत्थमतीतवर्षेषु संजातैतन्महाविद्यालयप्रगतिः समासेनालोचिता। साम्प्रतं संस्कृतशिक्षा अयं च महाविद्यालय एतादृशं कालमुपागतौ यदुत्तरमनेन महाविद्यालयेनोत्साहं धृतिमाशां चाश्रित्य भविष्यते संस्कृतशिक्षानवनिर्माणायावश्यं प्रयतितव्यम्। द्वितीया पाञ्चवर्षिकी योजना नः समक्षमस्ति। एनां फलतः परिपूर्य वयमागामिनीष्वनेकशताब्दीषु एतन्महाविद्यालयस्यायत्यामुन्नतिमार्गानसंबाधान् कर्तुं प्रभविष्यामः। द्वितीया पाञ्चवर्षिकी योजना एकतः संस्कृतविद्यालयानां महाविद्यालयानां चार्थिकसमुन्नतिं विधाय तान्नव्यशिक्षायोजनावहनयोग्यान् विदधाति, अन्यतस्त्वेतं महाविद्यालयं विश्वविद्यालयं विधाय संस्कृतविद्याया प्रौढिं प्रकर्षं च स्थापयति ख्यापयति च।

द्वितीयस्याः पाञ्चवर्षिकयोजनायाः प्रथमवर्षे पञ्चाशन्नवीनसंस्कृतविद्यालयेभ्य उपचत्वारिंशत्सहस्राणि रूप्यकाणि नवं साहाय्यम्, भवननिर्माणाय च पञ्चाशत्सहस्राणि रूप्यकाणि साहाय्यरूपेण वितीर्णानि। अस्या अवशिष्टेषु चतुर्षु वर्षेषु प्रतिवर्षं चत्वारिंशन्नवीनविद्यालयेभ्यः

शतं शतं रूप्यकाणि नवं साहाय्यं दास्यते, तथा प्रतिवर्षं दशविद्यालयेभ्यः पञ्चाशत्सहस्राणि रूप्यकाणि भवननिर्मितये साहाय्यरूपेण दास्यन्ते। अन्यच्च वाराणस्यामेको राजकीयः कन्यासंस्कृतमहाविद्यालयः, प्रत्येकं मण्डलेष्वेको राजकीयसंस्कृतविद्यालयश्च स्थापयितव्यः। अध्यापकानां कृते निर्वाहनिधिस्तेषां मर्यादानुरूपोचितवेतनव्यवस्थेत्यादिकमपि प्रशासनस्य साम्प्रतं विचारपदवीमधिरोहति। आशास्यते एताः सर्वाः प्रागुक्ता योजना अग्रिमवर्षेषु चतुर्षु संपूर्तिमाप्स्यन्तीति।

द्वितीयपाञ्चवर्षिकयोजनायाः सर्वतो मुख्यं कार्यमेतन्महाविद्यालयस्य विश्वविद्यालयरूपेण परिणमनम्। संस्कृतविश्वविद्यालयस्य विधेयकं पारितमेव। तस्य प्रारम्भिककार्याणि संपादयितुमेको विशेषाधिकारी अपि नियुक्त एव। अस्य विश्वविद्यालयस्य संचालनार्थं द्वात्रिंशल्लक्षाणि रूप्यकाणि स्वीकृतानि। ऐषमः सरस्वतीभवन-पुस्तकालयस्य भवनसंवर्द्धनार्थमध्यर्धलक्षं रूप्यकाणि स्वीकृतानि। हस्तलिखितग्रन्थान् क्रेतुं प्रकाशयितुं च प्रतिवर्षं सप्ततिसहस्राणि रूप्यकाणि निर्धारितानि। एतानि कर्माणि संपादयितुं कर्मचारिवर्गे विस्तारोऽपि क्रियमाणो वर्तते।

हस्तलिखितग्रन्थानां प्रकाशनं श्रेणीत्रयेण विभक्तं भविष्यति—१. सरस्वतीभवन-पुस्तकालये संचितानां प्राचीनहस्तलिखितपुस्तकानां प्रकाशनम्, २. प्राचीनहस्तलिखितपुस्तक-सूचीनां प्रकाशनम्, ३. आधुनिकैर्विद्वद्भिर्विहितानां संस्कृतग्रन्थानां च प्रकाशनमिति। तत्र प्रथमवर्षे उपर्युक्तश्रेणीत्रये प्रथमायां ग्रन्थनवकस्य, द्वितीयायामैकस्य, तृतीयायां च ग्रन्थचतुष्कस्य प्रकाशनं सम्पादनं च भविष्यति।

महतः प्राक्कालादेव काशी संस्कृतविद्यायाः प्रमुखं स्थानमस्ति। सम्प्रदायप्रदेशादिभेदं दूरीकृत्य शिष्यानध्यापयन्त आचार्या एतन्नगर्याः संस्कृतविद्यायाश्चायतिस्थिरं गौरवं वर्धितवन्तः, अत्र स्थिता एव चाशेषं भारतं स्वीयाभिः सत्प्रेरणाभिर्भासितवन्तः। उत्तरप्रदेशप्रशासनं काश्या गौरवरक्षायै सर्वात्मना निरुपधि सन्नद्धम्। दार्शनिकविद्वत्सु वित्तस्य विदुषो वर्तमानमुख्यमन्त्रिणो डा० सम्पूर्णानन्दमहोदयस्य वर्तमानशिक्षामन्त्रिणः श्रीहरगोविन्दसिंहमहोदयस्य च सत्प्रयाससुमनांस्येव वाराणसेयसंस्कृतविश्वविद्यालयरूपेण फलितानि। अस्य संस्कृतविश्वविद्यालयस्य स्कन्धे एव सकलः संस्कृतशिक्षादिङ्निर्देशनभारः। अस्मिन् विश्वविद्यालये यो यो विधिः संस्कृतशिक्षायै समाश्रयिष्यते, तस्य सर्वस्य प्रभावः सर्वां संस्कृतशिक्षामाक्रमिष्यति। स्वतन्त्रतावाप्त्यनन्तरं संस्कृतशिक्षायाः समुद्धाराय केन्द्राधिशासनस्य, राज्यप्रशासनानाम्, प्रजायाश्चैकपदे एव वेगेन मनांसि समाकृष्टानीत्यस्माकं महत्सौभाग्यम्। अस्य च सर्वानुकूल्यस्यास्माभिरुपयोगः कर्तुं युज्यते।

## कुलपतिभाषणम्

सर्वतः प्राक् प्राचीननिधीनां हस्तलिखितग्रन्थरूपाणां संरक्षणमेव कार्यम्। अद्यापि एते निधयः सकले भारते विप्रकीर्णाः सन्ति, येऽस्माभिर्न निधित्वेन परिचीयन्ते सामिपरिचिता वा भवन्ति। एतेषां राष्ट्रायत्तीकरणविधयाऽतित्वरया संचयनमावश्यकम्। एतावदेव न पर्याप्तम्, किन्त्वस्मत्प्रतिवेशिदेशेषु त्रिविष्टप-चीन-जापानादिषु मूलरूपेणानुवादरूपेण वा यो महान् संस्कृतग्रन्थराशिर्वर्तते, तस्योद्धारायापि यतितव्यम्। यथा विनश्यतां संस्कृतग्रन्थनिधीनां संरक्षणमावश्यकम्, तथैव वर्तमानेषु प्राचीनविद्वत्सु संचितस्य ज्ञाननिधेरुत्तराधिकारप्राप्तये विदुषां व्युत्पन्नविद्यार्थिनां चाजीविकाप्रदानेन संतोषणमप्यावश्यकम्। अन्यथा प्राचीनपरम्पराप्राप्तप्रौढपाण्डित्यस्योत्तरोत्तरं ह्रासो नावरोद्धुं शक्यते।

परःशतैर्वर्षैः संस्कृतविद्यायाः प्रजासु व्यावहारिकः सम्बन्धो विच्छिन्नकल्पः। तदभावादेवाधुनिकज्ञानस्य संस्कृतविद्यायामपेक्षितो विकासो न समजनि। अतः प्राचीनज्ञानेन सह नवीनज्ञानस्य संयोजनमावश्यकम्। एतदर्थं निष्ठावन्तः कुशाग्रबुद्धयस्तपस्विनो विद्वांसश्छात्राश्च प्रोत्साहनीयाः, आर्थिकसाहाय्येन च निश्चिन्तचित्ता विधेयाः। संस्कृतभाषायामाधुनिकस्य गणितस्य, समाजशास्त्रस्य, राजशास्त्रस्य, अर्थशास्त्रस्य चापेक्षितः समावेशोऽवश्यं कर्तव्यो व्यवहारज्ञानाय। अन्यथा संस्कृतभाषा लोकशास्त्रोभयोपयुक्ता न भविष्यति। एतेषां विषयाणां संस्कृतभाषायां समावेशे च संस्कृतस्य प्राधान्यं प्रौढिश्च यथा न हीयेत तथा प्रयतितव्यमवधातव्यं च। यतः प्रौढपाण्डित्यस्य संपादनमेवास्माकं प्रमुखमुद्देश्यम्। नवीनज्ञानं तु तत्पूरकत्वेनापेक्षितम्।

एवमत्र समासेनास्य महाविद्यालयस्यातीतकार्याणां दिग्दर्शनम्, संस्कृतभाषासंस्कृतविद्वत्समाजयोः संमुखमुपस्थितानां प्रश्नानां संक्षिप्तं समाधानं च प्रस्तुवन्तो वयं प्रशासनं जनतां संस्कृतविदुषश्च सविशेषमनुरुन्ध्मो यत्ते कथितेषु सर्वविषयेषु जागरूकाः सप्रयत्नाश्च भवन्तु येन संस्कृतशिक्षाया जीवनं समुन्नतं प्रोज्ज्वलं च सम्पद्येत।

अन्ते च वयमस्योत्सवस्य सम्पद्यमानायाः सफलतायाः कृते भगवतः श्रीकाशीविश्वनाथस्य चरणयोः प्रणाममुपहरन्तो निजागमनेनोत्सवमिमं प्रसाधितवते काशीहिन्दूविश्वविद्यालयोपकुलपति-श्रीवेणीशंकरझामहोदयाय, अस्माकं सम्मान्यातिथये डा० श्रीसुनीतिकुमारचट्टोपाध्यायमहोदयाय, भवद्भ्यः सर्वेभ्यः समागतसज्जनेभ्यश्चानेकान् हार्दिकान् धन्यवादान् वितरन्तः संस्कृतशिक्षासम्बन्धिनामस्मन्मनीषितानां सम्पन्नतायै अस्मासु समुत्साहं बलं योग्यताञ्चाधातुं सर्वेश्वरं जगन्नियन्तारमभ्यर्थयामहे।

सर्वे कुशलिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्॥
ॐ शान्तिः, शान्तिः, शान्तिः।

# बृहत्तरं भारतम्

श्री डा० सत्यव्रतशास्त्री, देहलीविश्वविद्यालयः, देहली ।

प्रथमोंऽशः

अस्ति दक्षिणपूर्वस्यां दिशि ऋद्धिं परां गता ।
समुद्ररशना भूमिः ख्याता रामायणादिषु ॥ १ ॥
भारतीयोपनीवेशा इत्येवं सम्प्रकीर्तिताः ।
यवस्वर्णादयो द्वीपाः पुरा तत्र चकाशिरे ॥ २ ॥
द्वीपस्थानभिलष्यन्तो विनीतान् संस्कृतानथ ।
पुरा भरतवर्षीया देशात्स्वस्माद् विनिर्ययुः ॥ ३ ॥
तेषां प्रयत्नसम्भारः फलेग्रहिरभूदिति ।
नात्र कस्यापि सन्देहः पौर्वापर्यं विजानतः ॥ ४ ॥
आचारश्च विचारश्च धर्माचरणमेव च ।
भारतीयेन संवादि द्वीपस्थानामसंशयम् ॥ ५ ॥
पुरा तेऽभिविनीताः स्युरार्यैर्वर्षात्समागतैः ।
पारेसमुद्रं संयातैर्लोकानुग्रहकाङ्क्षिभिः ॥ ६ ॥
चक्षुरुन्मीलयेमैषां ज्ञानाञ्जनशलाकया ।
धर्मं वा ग्राहयेमैतानिति बुद्ध्या प्रचोदिताः ॥ ७ ॥
चतुर्थ्यां हि शताब्द्यां ते पंचम्यां वा विपश्चितः ।
परिहाय निजां भूमिं द्वीपानेतान् समभ्ययुः ॥ ८ ॥
यद्यप्युपनिवेशत्वमेतेषां परिकीर्तितम् ।
ऐतिह्यविद्भिर्विद्वद्भिस्तथापि नहि तत्तथा ॥ ९ ॥
अद्यत्वे ह्युपनीवेशा देशा येऽमी प्रकीर्तिताः ।
साम्राज्यवृद्धिमिच्छद्भिः शासकैस्ते विनिर्जिताः ॥ १० ॥

परं भरतवर्षीया न शस्त्रेण जयं पुरा।
अरोचयन्नतस्ते नो बलाद्देशान् विजिग्यिरे ॥ ११ ॥
विना युद्धं विना शस्त्रं विना सेनाश्च भीषणाः।
विना नीतिं पुरा द्वीपा भारतीयैर्विनिर्जिताः ॥ १२ ॥
किं मुधा रक्तपातेन किं वा नो भूमिकाम्यया।
इत्येवं धर्मजिष्णुत्वं कामयांचक्रिरे हि ते ॥ १३ ॥
अत्र केचिन् महाभागाः शास्त्राध्यनचुञ्चवः।
उपन्यस्यत्यभिप्रायं स्वीयं युक्तिविभूषितम् ॥ १४ ॥

## द्वितीयोऽशः

धर्मप्रचारो नहि केवलः स्याद्धेतुः पुरा येन प्रचोदिताः स्युः।
सहस्रशो भारतवासिनः स्वं देशं विहायापरदेशमेतुम् ॥ १५ ॥
नैषोऽत्र हेतुः प्रतिभाति साधुर्हेत्वन्तरं किंचन मार्गणीयम्।
कैमर्थिकीं सिद्धिमपेक्षमाणाः पारेसमुद्रं भरता गताः स्युः ॥ १६ ॥
वाणिज्यहेतोर्धनसिद्धिहेतोः साम्राज्यहेतोर्भ्रमणस्य हेतोः।
अब्धेः परं दिग्विजयस्य हेतोर्गताः पुरा स्युर्वद कस्य हेतोः ॥ १७ ॥
क्व वा समुद्रो गहनो गभीरस्तरङ्गमालापरिवेल्लितश्च।
क्व वाऽप्रगल्भाः प्रथमे तितीर्षवस्तथापि तेषां न विचारणाऽभूत् ॥ १८ ॥
परैर्हृतायां निजराजलक्ष्म्यां तिरस्कृता बन्धुजनैः स्वकैर्वा।
गताः पुरा जन्मभुवं विहाय वीराः कुमाराः किमु राजवंश्याः ॥ १९ ॥
दुर्भिक्षवृष्ट्यादिपरम्पराभिः कदर्थिताः प्राणपरीप्सवः किम्।
याताः स्वदेशात् परकीयदेशानितीव नाना विदुषां वितर्काः ॥ २० ॥
इत्थं विवादे प्रबले प्रवृत्ते न शक्यते निश्चयतः प्रवक्तुम्।
तथापि वच्मोऽवितथं निरुक्तं सर्वं वचः संभविकार्थकत्वात् ॥ २१ ॥
नैकोऽत्र हेतुः परिकल्पनीयो न हेतुनैकेन प्रसिद्ध्यतीदम्।
तथापि वाक्ये प्रथमे य उक्तस्तमेव हेतुं प्रथमं गृहाण ॥ २२ ॥

स्वं स्वं चरित्रं भुवि भूमिदेवाः प्रशिक्षयन्तः किल सर्वपुंसः।
पुरा प्रयाता इहदेशजाता यवादिदेशान् दिशि दक्षिणस्याम् ॥ २३ ॥
तथा नियुक्ताः प्रियदर्शिना प्राक् सम्राडशोकेन सहस्रशो ये।
शाक्यस्य सन्देशहरा मुनेस्ते द्वीपान् यवादीन् मुदिताः प्रयाताः ॥ २४ ॥
अतो दरीदृश्यत एव भूयान् द्वीपेषु सर्वेषु समः प्रभावः।
प्रमाणितो भारतवर्षजस्य धर्मस्य शीलस्य च संस्कृतेश्च ॥ २५ ॥
गीर्वाणवाणीग्रथिताभिधेया उत्कीर्णलेखाश्शतशश्शिलासु।
अभ्रंलिहाग्राणि सुविश्रुतानि ध्वस्तावशिष्टानि च मन्दिराणि ॥ २६ ॥
नृत्यानि गीतानि दिगन्तरेषु ख्यातानि माधुर्यरसाप्लुतानि।
चित्राणि वा भित्तिसमर्पितानि प्रौढैः कलायां कृतिभिः कृतानि ॥ २७ ॥
दूरङ्गतानामिहदेशजानामाख्यापनान्यूर्जितगौरवस्य।
आलोकमालोकमिमानि भूयः संजायते चेतसि हर्षवर्षः ॥ २८ ॥
अद्यापि सीतेति सरस्वतीति प्रभावतीति श्रुतितर्पणानि।
रामेति कृष्णेति सुदर्शनेति स्वरन्ति नामानि मनोहराणि ॥ २९ ॥
अद्यापि धर्मान्तरसंश्रयेऽपि द्वीपेषु बालिप्रमुखेषु हन्त।
पुण्याः कथाः संकथयन्ति लोका रामायणाद्वाऽपि पुराणतो वा ॥ ३० ॥
अद्यापि यातेषु शतेषु वर्षेष्वहो महान् संस्कृतशब्दराशिः।
ध्वनेर्मनाक् सम्परिवर्तनेन प्रयुज्यमानो मुदमातनोति ॥ ३१ ॥

अद्यापि पूर्वविहिताः कलनाः समस्ता
आर्षेषु शास्त्रनिवहेष्वथ सौगतेषु।
आजन्ममृत्युकलया परिपालयन्तो
धन्या नरा नयनयोरयनं प्रयान्ति ॥ ३२ ॥

### कम्बुजद्वीपवर्णनम्

बभूव धीमानिह नीवृतिद्विजः कुले प्रसूतः प्रथतेऽतिविस्तृते।
स कुण्डिनानां यशसा महीयसां चिचिन्त नित्यं भरतंप्रपंचनम् ॥ ३३ ॥

इदं परं सुष्ठु विधाय स्वं मनो विहाय देशं प्रणयैकभाजनम् ।
स्थितान्समुद्रात्परतो दवीयसो जगाम देशान्प्रथितान्स कम्बुजान् ।। ३४ ।।
यंशूमसीहस्य स जन्मनः परं तृतीयके हायनसंगते शते ।
उदुह्य राज्ञीं विधिवत्तदीश्वरां शशास राज्यं शमितारिसंहतिः ।। ३५ ।।
गुणैरुदारैर्विकलाः प्रियङ्करैर्वनस्थसत्वैरथ साम्यमागताः ।
अनावृताः स्त्रीपुरुषा अपत्रपा विचेरुरत्र प्रकटं सहेतरैः ।। ३६ ।।
क्रमेण तत्र स्थितिकामुकैर्जनैरुपागतैरार्यकुलोद्गतैस्तथा ।
स्वयं विनीतैर्विनिनीषुभिः परान्विनिन्यिरे कम्बुजवासिनो जनाः ।। ३७ ।।
ततः परैः कैरपि शासकैः किल लओस-मुख्या मलयावसानकाः ।
सदेशदेशास्तरसात्मसात्कृताः सुहिन्दचीनाः कलया च निर्जिताः ।। ३८ ।।
अमीभिरेव प्रथमैः प्रशासकैर्नयज्ञधुर्यैरपि चीनभारते ।
सुदौत्यबन्धेन दृढेन योजिते श्रियोऽभिवृद्धेरुभयत्र कामुकैः ।। ३९ ।।
वियत्सु ऋत्वब्दशतेषु यीशुतः शशास पृथ्वीं जयवर्मसंज्ञकः ।
स रुद्रवर्मा च कुलप्रभावती सुतः कलत्रं च कुले स्म विश्रुतौ ।। ४० ।।
शिलार्पिता अद्य तयोर्द्वयोरपि प्रशस्तिबन्धा विलसन्ति भूरयः ।
यतोऽस्य वंशस्य च वर्णनाऽखिला प्रतीयतेऽनीप्सजनस्य हर्षदा ।। ४१ ।।
इहैव वंशे जयवर्मनामकः परोऽपि भूपः कृतलक्षणोऽभवत् ।
गुणातिरेकात्खलु यत्र दुर्लभात् प्रजाजनः पश्यति देवरूपताम् ।। ४२ ।।
असंशयं तस्य महात्मनः कृतेः प्रवृत्तिमान्स्वर्णयुगस्तदाऽभवत् ।
तथाहि तादात्विकसम्पदो विभोः सुरम्यसौधानि निबोधयन्ति नः ।। ४३ ।।
ततो हि राज्ञो जयवर्मणः परं ततोऽधिकं स्फीतपराक्रमो बली ।
शशास भूमिं यशसाऽन्वितो नृपो यथार्थनामा स हि वर्मणा युतः ।। ४४ ।।
यदा यशोवर्मनृपो यशोऽन्वितः स्वराज्यगुर्वीं धुरमाधितात्मनि ।
तदा बभूवुः सकलाः प्रजा अपि प्रसन्नचित्ता परिवृद्धिकामुकाः ।। ४५ ।।
पवित्रवर्येऽथ प्रजानुरञ्जके जनाधिनाथे पृथिवीं प्रशासति ।
प्रजा बभूवुः सकला निरामया बभूव राष्ट्रं सकलं निरीति च ।। ४६ ।।

बभुश्च तत्रत्यभटा रणोद्भटा निरीक्ष्य तं दिग्विजयार्थमुद्यतम् ।
रराज सोऽपि प्रथमो जयैषिणां घनव्यपायेन गभस्तिमानिव ॥ ४७ ॥
रणोऽप्रधृष्यः खलु शत्रुयोषितां विधाय वक्त्रं च्युतपत्रकांकनम् ।
स मन्यमानः कृतकृत्यतां स्वकां मुदः परां कोटिमथाश्रितोऽभवत् ॥ ४८ ॥
न केवलं तस्य रणेऽतिपाटवं जनाधिनाथस्य बभूव विश्रुतम् ।
कलासु दाक्ष्यं सकलासु तास्वपि जहार चेतांसि भृशं मनस्विनाम् ॥ ४९ ॥
कृतश्रमः शास्त्रचये विचक्षणो विलक्षणः प्रौढिमवाप्य निर्वृतः ।
सदा कवीनामुपजीव्यतां गतो दिगन्तविश्रान्तयशा बभूव सः ॥ ५० ॥
पतञ्जलेर्व्याकरणेऽतिविश्रुता कृतिर्महाभाष्यमिति प्रसंज्ञिता ।
नृपेण सूक्ष्मेक्षिकया युतेन सा स्वकीयवृत्त्या समयोजि हृद्यया ॥ ५१ ॥
स वास्तुविद्यानिपुणो जनप्रियो बहूनि देवायतनानि निर्ममे ।
सुराश्च भक्त्या दिवि भक्तवत्सलाः परं प्रसेदुः परया महौजसः ॥ ५२ ॥
सदा यतीनां सुखचिन्तने रतो बहूनि चैत्यानि मठांस्तथाऽऽश्रमान् ।
स कारयामास वशी नराधिपस्ततः परं किञ्चिदभून्न तत्प्रियम् ॥ ५३ ॥
स धर्मकृत्याकुशलो हिते रतः प्रजानुरागोद्धुरकन्धरो नृपः ।
ततान तां कीर्तिमहो यया पुनः सुवास्यतेऽद्यापि हि सागराम्बरा ॥ ५४ ॥
न राज्यसादृश्यमिहास्ति मे पुरे रमेय येनात्र कृतारिशातनः ।
इतीव मन्ये मनसा विचिन्तयन् स राजधानीमपरां विनिर्ममे ॥ ५५ ॥
चकार तां कम्बुपुरीति नामिकां स कम्बुजानां विजयी नराधिपः ।
ततोऽतियाते समये कियत्यपि यशोधरेति प्रथिता पुरी बभौ ॥ ५६ ॥
प्रवर्तकोऽनूकविशेषकस्य यः स सूर्यवर्मा प्रथमश्चकास्ति नः ।
अयं स्वराज्ये परमेऽन्तराणयदवाक्स्थिताञ्छ्यामसुखान्प्रदेशकान् ॥ ५७ ॥
अनन्तरं सूर्यसमानसंज्ञको परो हि सम्राट् परशक्तिकोऽभवत् ।
स वाटमंगस्थमथाकरोत्प्रभुस्ततोऽस्य कीर्तिं प्रजगुर्दिगङ्गनाः ॥ ५८ ॥
चिरं च चम्पामभियोधयन्नृपो दिवंगतः सोऽनवसाय्य विग्रहम् ।
ततश्च चम्पाजननाथ इन्द्रकः समुद्रचम्वाऽस्य पुरीमलुण्ठयत् ॥ ५९ ॥

ततः प्रतीतो जयवर्मसत्तमः क्रमागतं प्राप च पित्र्यमासनम् ।
शमादिसंज्ञैर्गुणिभिः समादृतैः श्रियोऽभिवृद्धिं व्यदधाच्च साधनैः ॥ ६० ॥
अथारिवर्गस्य स भीतिदो नृपः क्रियाभिरामः सुविदूरदर्शनः ।
पुराणविद्भिः कथितां सुचम्पिकां चिरं स्वतंत्रां वशमानयत्प्रभुः ॥ ६१ ॥
युधां विजेता स शिरांसि दुर्हृदां लुलाव काण्डानि च हेलया यथा ।
अनामदेशं च चिराय योधयन्नवाक्प्रदेशान्स्ववशं निनाय सः ॥ ६२ ॥
अभूदपूर्वा ननु राष्ट्रविस्तृतिर्बृहत्तरा श्रीरपि सर्वतोमुखी ।
प्रशासके तत्र नृपे जनप्रिये नवं हि सर्वं प्रबभूव शर्मणे ॥ ६३ ॥
स राजधानीं परया श्रिया युतां विनिर्ममे नागरधामसंज्ञिताम् ।
अतीत्य या पुण्यजनैरधिश्रितां स्थिता पुरीं तामलकाभिधानिकाम् ॥ ६४ ॥
इयं हि तेनाश्ममयेन प्रांशुना बलीयसा सालवरेण योजिता ।
अमुं च सालं परितो भविष्णुना नवापि काचित्परिखा विनिर्मिता ॥ ६५ ॥
प्रमाणमस्याः कथयामि तच्छृणु ध्रुवं हि जिज्ञास्यमिदं सखे तव ।
बुधां च नृणामबुधां विशेषतः कुतूहलिन्यः खलु चित्तवृत्तयः ॥ ६६ ॥
शतं 'गजान्' दाशतयेन संयुतान् निशामनीया परिखा सुविस्तृता ।
तथा च 'मीलान्' दश सा परायता समासतो मानमिदं विदाङ्कुरु ॥ ६७ ॥
निरुक्तपूर्वे वरणे विरेजिरे उदग्रकायानि सुगोपुराणि ।
अमीषु पंचस्वपि पंच जज्ञिरे महापथास्ते शत'फीट'विस्तृताः ॥ ६८ ॥
इयं महापूः समपार्श्वकैर्युता रराज 'मील'द्वयसंमितैः शुभैः ।
सुवास्तुविद्याप्रविचक्षणा हि तां वितेनिरे शात्रवरोधकाम्यया ॥ ६९ ॥
इदं परं नु श्रुतिपेयमस्ति ते बयोन-देवायतने पुरि स्थिते ।
अमी च चत्वार इहाभिकीर्तिता महापथाः संगमलिप्सया ययुः ॥ ७० ॥
अदभ्र देवायतनं परिस्थितं निकर्षणं विद्धि महाप्रमाणकम् ।
हितोपदेशा अपि राजदेशना विशब्दिता यत्र चकाशिरे जनैः ॥ ७१ ॥
प्रशस्यचर्यो गुणिनामपश्चिमो जयाभिधानः खलु राजसत्तमः ।
अधर्मभीरुर्दृढभक्तिसंयमः प्रदानशीलो ननु शालते नृपः ॥ ७२ ॥

अलं बहूक्त्वा विततां वदान्यतां ययाऽतिशेते स शिबिं महीपराट् ।
कृते स देवालयसंविधेः सुधीर्महान्तमर्थं विनियुक्तवान्प्रभुः ॥ ७३ ॥
न्ययुङ्क्त धीरः किल देववेश्मनि स केवलेऽस्मिन्नुपसन्नतान्यहो ।
द्विजन्मनां सौम्य सहस्रकाण्ययं कृतप्रसंगानि च देवतार्चने ॥ ७४ ॥
इहाङ्करामार्णवसंमिता द्विजा पुरा खमुन्यङ्कगुरूनुपासते ।
अमी च सर्वे तत एव लेभिरे ससत्क्रियां वृत्तिमलन्तरां नृपात् ॥ ७५ ॥
इदं च लेखादपरं शिलार्पितात्प्रतीयते मोदकरं सतां नृणाम् ।
वसुग्रहर्ष्यङ्कितदेवतालया विरेजुरत्र द्विशतं क्रियागृहाः ॥ ७६ ॥
स एष राजा जयवर्मनामकः क्रियासु दक्षः सततं समुत्थितः ।
विनिर्ममे लोकहितान्यनेकशो गृहाणि मार्गान्तरसंश्रितानि च ॥ ७७ ॥
अयं स राजा महतां महीभृतां सुकम्बुजानां चरमः किलाभवत् ।
अतः परं वृत्तपरम्पराविदः प्रवक्ते नैव तदाश्रयं क्वचित् ॥ ७८ ॥
चतुर्दशे सा यशुजन्मनः परे सुकम्बुजश्रीर्ह्रसिता शताब्दके ।
निवेशनान्यस्य च यानि संनिधौ स्थितानि देशस्य विनष्टयेऽभवन् ॥ ७९ ॥
पुरा प्रकर्षं परमं जगाम यः शशास राज्यानि समृद्धिमन्ति यः ।
स सम्प्रति फ्रांसजनैरधिष्ठितः प्रहीणतेजाः परमं च सीदति ॥ ८० ॥
अहो विधिश्चित्रविचेष्टिता बत स यो विधाता सदयः स शोभते ।
कथं स दत्त्वा स्वयमुन्नतिं परां पुनर्हरंस्तां विषमीभवत्यहो ॥ ८१ ॥

## शैलेन्द्रराज्यवर्णनम्

शैलेन्द्रराज्यभवत् प्रथितं पुरा यत्
स्वर्णे यवे मलयदेश उतापरेषु ।
देशेषु तस्य नहि वर्णनमस्ति शक्यं
शक्तो नु केवलमिहास्ति सहस्रजिह्वः ॥ ८२ ॥
दिव्यस्य वा सुचरितस्य हि पुण्यभाजां
संकीर्तनं किमपि पुण्यमथातनोति ।

एवं यतेन मनसा प्रविचिन्त्य चिन्त्य-
मस्मिन् वयं सुखदकर्मणि सम्प्रवृत्ताः ॥ ८३ ॥
अर्बाभिधे प्रथितदेशवरे प्रजातै-
स्तात्कालिकैः कृतिवरैरितिहासविद्भिः ।
शैलेन्द्रनाम्न इति वृत्तमलेखि राज्य-
स्यास्ते तदेव खलु नः परमं प्रमाणम् ॥ ८४ ॥
पोतेन तीव्रगतिनाऽपि कथंचिदेव
वर्षद्वयेन परितो भ्रमणं भवेन्नु ।
साम्राज्यमेवमभवत् सुतरां विशालं
यद्वैभवस्य तुलना भुवि नो बभूव ॥ ८५ ॥
चीनादिराष्ट्रपतयोऽपि च चोलपाला
अन्ये च येऽपि प्रतिवेशिनृपा बभूवुः ।
दूतादिप्रेषणपराः सममानयंस्तान्
ते चापि भूमिपतयः समभावयंस्तान् ॥ ८६ ॥
कालेऽम्बु वर्षति सदा भुवि वारिवाहो
देशोऽपि चास्ति सकलो बहुसस्यशाली ।
एवं पुरा बहुविधं समभिष्टुताऽभूत्
शैलेन्द्रराजकुलजा महती समृद्धिः ॥ ८७ ॥
द्वीपेषु तेषु च शिलासु समर्पिता ये
लेखाः पुराणपुरुषैः शतसङ्ख्यकास्ते ।
अद्यापि साग्रहमहो प्रथितामपूर्वा-
मृद्धिं पुरा पिशुनयन्ति जनस्य दिव्याम् ॥ ८८ ॥
कालेन शक्तमपि ऋद्धमपि प्रसिद्धं
शैलेन्द्रराज्यमभवत् खलु नामशेषम् ।
माजापहीतमभवत्तदनन्तरं च
द्वीपे यवे नृपतिचक्रकमद्वितीयम् ॥ ८९ ॥

दण्डेन शत्रुशमनं प्रविधाय तत्र
शान्त्या सुखं नृपतयो वसुधां शशासुः ।
तेषां च 'नागरकृतागम'नाम्नि काव्ये
सौराज्यवर्णनमभूदनवद्यहृद्यम् ॥ ९० ॥

बालिद्वीपवर्णनम्

ततो याति काले कुतोऽप्यागतेन मुसल्मीनधर्मप्रियेणाऽप्रियेण ।
नृपाः शान्तिकामाः पराजिग्यिरे ते न साम्येन तिष्ठत्यहो कश्चनापि ॥ ९१ ॥
चतुःसागरावेष्टितायाः शुभाया गतायाः परां कोटिमृद्धेर्जगत्सु ।
बलेनैव बाह्वोः सुखं निर्जिताया अभूवन् पुरा ये भुवः शासितारः ॥ ९२ ॥
गतास्तेऽपि देशाच्च्युतास्तेऽपि राज्याद्धहा पश्य चित्रं विलासं विधातुः ।
प्रतापेन येषां बभुर्दिग्दिगन्ता गतास्तेऽपि कष्टां दशां मन्ददिष्टाः ॥ ९३ ॥
सुखं प्राज्यराज्ये चिरं संस्थितानां नृपाणां निपातो ध्रुवोऽस्तीति विद्धि ।
जगद् भानुभिर्भासयित्वा प्रकामं रविः श्रान्तकायोऽस्तमद्रिं प्रयाति ॥ ९४ ॥
ततस्तत्र कालात्परीवर्तशीलान् मुसल्मीनधर्मावलम्बिप्रचारः ।
प्रवृत्तः समस्तेषु देशेषु वेगात् स्रवन्त्या यथा वारि कूलङ्कषायाः ॥ ९५ ॥
कथं धर्मरक्षा भवेन्मेऽधुनेति नृपोऽभूत् पुरा यो यवद्वीपशास्ता ।
स संचिन्तयामास दीर्घं न चापि विवेदाभ्युपायं विना विप्रवासात् ॥ ९६ ॥
स्थितोऽहं यदि स्यां स्वके देश एव ध्रुवो म्लेच्छसम्पर्क इत्याकलय्य ।
स पंचाधिकायां दशम्यां शताब्द्यां श्रितो बालिदेशं नृपोऽधर्मभीरुः ॥ ९७ ॥
प्रजास्तस्य साम्राज्यविभ्रंशदूना श्रिया नाम हीना गुणैर्जात्वहीनाः ।
स्वपुत्रैः कलत्रैः सुहृद्भिः समेता उपेतास्ततो द्वीपकं बालिसंज्ञम् ॥ ९८ ॥
अथाद्यापि रामायणादेः पुराणी महाभारतादेः पुराणादिकाद्वा ।
कथाः श्रोतुकामाः पुमांसः स्त्रियो वा समेत्य व्रजन्ति प्रगे मन्दिराणि ॥ ९९ ॥
पुराणं स रक्षन् जगत्यां प्रसिद्धं सुशर्मैकहेतुं निजं हिन्दुधर्मम् ।
सुखी बालिदेशो भुवो मण्डलस्याखिलस्यावतंसः श्रिया मोमुदीति ॥ १०० ॥

———

# चयनिका

## विविधपत्रिकाभ्यः संचिता संस्कृतवाङ्मयसंबद्धा लेखसूची

श्रीव्रजवल्लभद्विवेदः, राजकीयसंस्कृतमहाविद्यालयः, वाराणसी।

**आलोचना, व० ५, अ० १, जनवरी १९५६**

श्रीरमाशंकर तिवारी—साधारणीकरण का नवीन स्तर।

श्रीविजयदेव नारायण साही—सहित्यिक अश्लीलता का प्रश्न।

डॉ० हरदेव बाहरी—व्रीडाजुगुप्सामङ्गलव्यञ्जकत्वात्।

डॉ० बदरीनारायण श्रीवास्तव—रामानन्द सम्प्रदाय में योग।

**व० ५, अ० २, अप्रैल १९५६**

श्रीरामविलास शर्मा—कालिदास-साहित्य के स्थायी मूल्यों की समस्या।

श्रीनारायण मिश्र—कवि-प्रेरणा का स्वरूप और काव्य-प्रतिभा।

श्रीरामलाल सिंह—साधारणीकरण तथा आचार्य शुक्ल।

**इण्डियन फिलासफी एण्ड कल्चर, व० २, अ० १, जनवरी १९५७**

डा० महानामव्रत ब्रह्मचारी—विज़िन आफ दी गीता (गीताया दर्शनम्)।

श्री एम० वी० वी० के० रङ्गाचारी—श्रीरामानुज एण्ड वैष्णविज्म (३) (श्रीरामानुजाचार्यः, वैष्णवमतं च)।

डा० एम० हफीज सैयद—दी आर्यन व्यू आफ लाइफ (जीवनसंबन्धिनी आर्यचिन्तनधारा)

डा० मोतीलाल दास—दी बुद्धिस्ट वे आफ लाइफ (बौद्धानां जीवनमार्गः)।

डा० सुशीलकुमार मित्र—ए क्रिटिकल इस्टीमेट आफ रियलिज्म (यथार्थवादस्य समीक्षात्मकं मूल्याङ्कनम्।

**इण्डो-एशियन कल्चर, व० ५, अ० ३, जनवरी १९५७**

डा० रवीन्द्रनाथ टैगोर—ग्रेटर इण्डिया (बृहत्तरं भारतम्)।

डा० एम० ज़ेड० सिद्दीकि—इण्डिया एज नोन टू दी एंश्येण्ट अरब्स (प्राचीनैर् अरबनिवासिभिर्विज्ञातं भारतस्वरूपम्)।

डा० डी० सी० सरकार—न्यू इंस्क्रिप्शन्स आफ अशोक ( अशोकस्याचिरेणोपलब्धाः शिलालेखाः ) ।

प्रो० जीन फिलिओजत—फ्रांस एण्ड इण्डोलॉजी ( फ्रांसदेशे भारतीयविद्याध्ययनम् ) ।

डा० अणिमा सेन गुप्ता—दी सेन्ट्रल कोर आफ बुद्धिस्ट फिलासफी ( बौद्धदर्शनस्य केन्द्रीयं संघटनम् ) ।

प्रो० पी० नागराज राय—बुद्ध एण्ड बुद्धिज्म ( बुद्धस्तस्य मतं च ) ।

श्रीवाल्टेयर लीफर—बुद्धिज्म इन जर्मनी ( जर्मनदेशे बौद्धमतप्रचारः ) ।

**इपिग्राफिया इण्डिका, व० ३०, अ० ४, अक्टूबर १९५३**

श्री डी० सी० सरकार—निनगोण्डी ग्राण्ट आफ प्रभञ्जनवर्मन् ( प्रभञ्जनवर्मणो निनगोण्डीस्थानीयं शासनपत्रम् ) ।

श्री ए० एस० अल्तेकर—मूसनगर ब्रिक इंस्क्रिप्शन ( मूसनगरे उपलब्ध इष्टिकामयः शिलालेखः ) ।

श्री डी० सी० सरकार—टू इंस्क्रिप्शन्स आफ गौरी ( गौरीनृपतेर्द्वौ शिलालेखौ ) ।

डा० बहादुरचन्द छाबड़ा—देवप्रयाग ब्राह्मी इंस्क्रिप्शन्स ( देवप्रयागस्था ब्राह्मीलिपिमयाः शिलालेखाः ) ।

श्री डी० सी० सरकार—बाँदा प्लेट्स आफ पर चक्रशल्य, संवत् ५६ ( परचक्रशल्यस्य ५६ संवत्सरीयो बाँदास्थानीयस्ताम्रलेखः ) ।

श्री वी० वी० मिराशी—फर्दर नोट आन धूलेव प्लेट आफ महाराज भेत्ति ( भेत्तिमहाराजस्य धूलेवस्थानादधिगतताम्रलेखसंबन्धिनी नूतना टिप्पणी ) ।

श्री डी० सी० सरकार—टू प्रतीहार ग्रान्ट्स फ्रॉम कुरेथ ( कुरेथस्थानादधिगते प्रतिहारनृपतीनां द्वे शासनपत्रे ) ।

श्रीमोरेश्वर जी० दीक्षित—सांगली म्यूजियम प्लेट्स आफ कृष्णदेवराज, शक १४३४ ( सांगलीसंग्रहालये स्थितः १४३४ शकीयः कृष्णदेवराजस्य ताम्रलेखः ) ।

श्री डी० सी० सरकार—भुवनेश्वर इंस्क्रिप्शन्स आफ राघव, शक १०९०, ( राघवस्य १०९० शकीयो भुवनेश्वरशिलालेखः ) ।

**एंश्येन्ट इण्डिया, नं० १२ सन् १९५६**

डा० बी० बी० लाल—एन एग्जामिनेशन आफ सम मेटल इमेजेज फ्रॉम नालन्दा ( नालन्दात उपलब्धानां कतिपयधातुप्रतिमानां परीक्षणम् ) ।

श्रीवाई० डी० शर्मा—रोक कट केव्स इन कोचीन ( कोचीनप्रदेशीयाः कृत्रिमा गुहाः ) ।

**जर्नल आफ दी अमेरिकन ओरियण्टल सोसाइटी, व० ७७, अ० १, जनवरी-मार्च ५७**

श्रीजे० ए० बी० वान व्युतनन—स्टडीज इन सांख्य-२ ( सांख्यशास्त्राध्ययनम्-२ ) ।

श्रीलुडविक स्टेनवाच—चाणक्याज् एफोरिज्म्स इन हितोपदेश-२ ( हितोपदेशे उद्धृतानि चाणक्यवाक्यानि-२ ) ।

**जर्नल आफ दी एशियाटिक सोसाइटी, बंगाल ( लेटर्स ), व० १६, अ० १, सन् १६५३**

श्रीएम० एन० शाह—डिफ्रेन्ट मैथड्स आफ डेट-रिकोर्डिंग इन एंश्येन्ट एण्ड मिडीवल इण्डिया, एण्ड दी ओरिजिन आफ दी शक एरा ( प्राचीने मध्यकालीने च भारते तिथिनिर्धारणस्य विविधाः प्रकाराः, शकसंवत्सरस्य मूलमुपादानं च ) ।

श्रीकृष्णचन्द्र पाणिग्रही—दी डेट आफ खारवेल ( खारवेलराज्ञः कालनिर्णयः ) ।

श्रीसुन्दरलाल होरा—नोलेज आफ दी एंश्येन्ट हिन्दूज कंसर्निंग फिश एण्ड फिशरीज आफ इण्डिया ( भारते पुरातनहिन्दूनां मत्स्यतद्व्यवसायसंबन्धि परिज्ञानम् ) ।

डा० आर० सी० हाजरा—दी विदूषक इन संस्कृत ड्रामा- हिज ओरिजिन (संस्कृतरूपकेषु विदूषकस्य स्थानं तदुत्पत्तिश्च ) ।

**व० १६, अ० २, सन् १६५३**

डा० प्रियतोष बनर्जी—सम ओब्जर्वेशन्स आन दी सो-काल्ड थ्योरी आफ दी ब्राह्मणिकल रिवोल्यूशन अण्डर पुष्पमित्र शुंग ( पुष्पमित्रशुंगसमये संजातस्य ब्राह्मणप्राबल्य-सिद्धान्तस्य कैश्चन तर्कैः परीक्षणम् ) ।

श्रीभवतोष भट्टाचार्य—रघुनन्दन'स इण्डेब्टेडनेस टू हिज प्रेडेसर्स ( रघुनन्दनस्य तत्पूर्ववर्तिना-माधमर्ण्यम् ) ।

**व० २०, अ० १, सन् १६५४**

श्रीप्रफुल्लचन्द्र भंजदेव—पिशिताशना ( पिशिताशना देवी ) ।

डा० आई० सी० हाजरा—सम लोस्ट उपपुराणस ( कतिपयानि लुप्तान्युपपुराणानि ) ।

श्रीपी० सी० सेनगुप्त—ए नोट ऑन भीमाष्टमी ओर दी एनिवर्सरी आफ भीष्मा'ज एक्स-पायरी ( भीष्माष्टमीम्, अथवा भीष्मनिर्वाणजयन्तीमभिलक्ष्य काचन टिप्पणी ) ।

श्रीडी० सी० सरकार—मदनपाल एण्ड हिज सक्सेसर ( मदनपालस्तत्परवर्तिनश्च )

श्रीअशोक चटर्जी—दी स्वर्गखण्ड आफ दी पद्मपुराण- ए क्रिटिकल एनेलिसिस ( पद्मपुराणीयस्वर्गखण्डस्य समालोचनात्मकं परीक्षणम् )

श्रीभवतोष भट्टाचार्य—रघुनन्दन'स इण्डेब्टेडनेस टू हिज प्रेडेसर्स ( रघुनन्दनस्य तत्पूर्ववर्तिनामाधमर्ण्यम् ) ।

**व० २०, अ० २, सन् १९५४**

डा० सुकुमार सेन—रायल चार्टर्स एण्ड एडमिनिस्ट्रेटिव डाक्युमेन्ट्स इन एंश्येन्ट इण्डिया ( प्राचीने भारते राजकीयानि शासनपत्राणि शासकीयानि लेखानि च ) ।

श्रीभवतोष भट्टाचार्य—रघुनन्दन'स इण्डेब्टेडनेस टू हिज प्रेडेसर्स ( रघुनन्दनस्य तत्पूर्ववर्तिनामाधमर्ण्यम् ) ।

प्रो० शिवप्रसाद भट्टाचार्य—दी आथरशिप आफ दी लेटर हाफ आफ दी कुमारसंभव ( कुमारसंभवीयोत्तरार्द्धस्य रचयिता कः ) ।

**व० २१, अ० १, सन् १९५५**

डा० सुन्दरलाल होरा—फिश इन दी जातक स्कल्प्चर ( जातककथासंबन्धिमूर्तिषु मत्स्योत्कीर्णनम् ) ।

डा० सुन्दरलाल होरा एण्ड एस० के० सरस्वती—फिश इन दी जातक टेल्स (जातककथासु मत्स्योल्लेखः ) ।

**जर्नल आफ दी तंजोर सरस्वती महल लाइब्रेरी, व० ११, अ० २, सन् १९५७**

संगीतमकरन्दम् ( नृत्याध्यायः ) वेदसूरिविरचितम् । श्रीके० वासुदेवशास्त्रिकृत-आङ्गलानुवादसहितम् ।

वैयाकरणसिद्धान्तकौमुदी—श्रीपी० बी० नागनाथशास्त्रिविरचिता ।

श्रीएन० एस० देवनाथाचारियर—पारिजातनाटकस्योपोद्घातः ।

**फिलासफिकल क्वार्टर्ली, व० २९, अ० ४, जनवरी १९५७**

श्रीप्रवासजीवन चौधुरी—दी मीनिंग एण्ड वेरीफिकेशन आफ ट्रुथ ( सत्यपदार्थस्तस्य परीक्षणं च ) ।

श्रीके० वेङ्कटरमण—दी सेन्स आफ 'आई' ( अहंपदार्थविमर्शः ) ।

श्रीरिचार्ड वी० डे समेट—टू वर्ड्स रि-ओरियन्टिंग इण्डियन फिलासफी-हिन्ट्स फ्रोम ए टॉमिस्ट (कथं नु पुनर्भारतीयदर्शनस्य पथप्रदर्शनं कर्तव्यम्, टामसमतानुयायिनः परामर्शः)।

श्रीनरसिंहनारायण—इज इण्डियन् फिलॉसफी नीड रि-ओरियन्टेशन ( किं भारतीयं दर्शनं पुनः पथप्रदर्शनमपेक्षते )।

**भारती, व० ७, अ० ६, चैत्रः, संवत् २०१४**

श्रीगणेशरामशर्मा दैवज्ञः—विचित्ररूपाः खलु चित्तवृत्तयः।

श्रीरामनारायणदीक्षितः—गुरुदक्षिणा ( एकाङ्कनाटकम् )।

श्रीरामेश्वरप्रसादशास्त्री—नलोदयटीकाकर्तुः परिचयः।

**व० ७, अ० ७, वैशाखः, संवत् २०१४**

डा० रसिकविहारी जोशी—ऐतरेयब्राह्मणस्य काले सामाजिकी व्यवस्था।

श्रीसीतारामाचार्यः—भैमीनैषधीयम् ( एकाङ्कनाटकम् )।

**व० ७, अ० ८, ज्येष्ठः, संवत् २०१४**

श्रीसीतारामाचार्यः—भैमीनैषधीयम् ( एकाङ्कनाटकम् )।

**मञ्जूषा, व० ११, अ० ५, जनवरी १९५७**

श्रीमदमिताभभट्टाचार्यः—भस्मासुरः। अनुवादकः—श्रीफटिकलालदासमहाशयः।

श्रीजीवन्यायतीर्थः—शतवार्षिकम् ( प्रहसनम् )।

**व० ११, अ० ६, फरवरी १९५७**

श्रीशितीक्षचन्द्रचट्टोपाध्यायः—चेलम्।

**व० ११, अ० ७, मार्च १९५७**

श्रीमदमिताभभट्टाचार्यः—भस्मासुरः।

**वेदवाणी, व० ९, अ० ६, चैत्र, संवत् २०१४**

श्रीयुधिष्ठिर मीमांसक—दयानन्ददर्शन-दर्शन

श्रीरामावतार शर्मा—हन् धातु के गत्यर्थक प्रयोग।

**व० ९, अ० ७, वैशाख, संवत् २०१४**

श्रीभवानीलाल एम० ए०—वेदार्थ की त्रिविध प्रक्रिया और सायण की याज्ञिक-पद्धति।

**व० ९, अ० ८, ज्येष्ठ, संवत् २०१४**

श्रीउदयवीर शास्त्री—गीता में सांख्य-योग का स्वरूप।

**सम्मेलन-पत्रिका, व० ४३, अ० २, चैत्र, संवत् २०१४**

श्रीरमाशंकर तिवारी—महाकवि श्रीहर्ष का प्रकृति-वर्णन।

श्रीहरिप्रताप सिंह—मुसलमान शासकों का संस्कृत-प्रेम।

---

# सम्पादकीयम्

**संस्कृतायोगः**

भाषा नाम कस्यापि राष्ट्रस्य मूलभूतायाः संस्कृतेः सभ्यतायाश्च श्रेष्ठतमं संरक्षकं प्रकाशकं प्रचारकञ्च साधनम्। यदा हि श्रुतिर्भगवती विकारजातं वाचारम्भणमात्रं मनुते, तदा किमु वक्तव्यस्तस्या महिमा। तत्रापि देवभारती पुनः 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा' इत्यपि वर्ण्यते। अतो भारतदेशस्य भारतीयसंस्कृत्यभिमानिन्या भारतसन्ततेश्च कृते भारती भाषा नितान्तमनुसर्तव्या। दैवदुर्विपाकेण परकीयसत्तानिगडिते भारते बहुकालमेषा भाषा सर्वतः समुपेक्षिता भवतु नाम, परं सौभाग्येन स्वातन्त्र्यप्राप्त्यनन्तरमस्याः पोषणं संवर्धनञ्च भारतीयानां कृतेऽवश्यकर्तव्यतयाऽऽपतति। अत एव भारतीसेवैकव्रतिभिर्विद्वद्भिः संस्कृतविश्वपरिषदा च मुहुर्मुहुरस्मिन् विषये शासनसूत्रधाराः प्रेरिताः। तस्यैव सुफलं यद्विगतवर्षीये 'अक्तूबर'-ख्यांग्लमासि भारतीयेनाधिशासनेनैकः 'संस्कृतायोगः' नियुक्तः, अध्येषितञ्च यदेष आयोगो भारतगतस्य संस्कृताध्ययनस्य साम्प्रतिकीं समवस्थां सर्वतः परिशील्याधिशासनस्य पुरतः स्वीयं प्रतिवेदनं प्रस्तूयादिति।

आयोगस्यास्य आध्यक्ष्यं पश्चिमवङ्गविधानपरिषदध्यक्षा भाषाविशेषज्ञेषु मौलिरत्नायमाना-स्तत्रभवन्तः श्रीसुनीतिकुमारचट्टोपाध्याया अलंकुर्वन्ति। साचिव्यञ्च पुण्यपत्तनविश्वविद्या-लयीयसंस्कृतप्राध्यापका डा० रामचन्द्रनारायणदाण्डेकरमहोदया बिभ्रति। अन्ये च षट् प्राच्यपाश्चात्त्यविद्याविभूषिता विपश्चितः सदस्यत्वेन वृताः, येषां नामान्यधोलिखितानि वर्तन्ते—(१) 'भारतीय-विद्याभवन'-सञ्चालकाः श्रीमन्तो जयन्तकृष्णहरिकृष्णदवेमहोदयाः, (२) यादव-पुरविश्वविद्यालयप्राध्यापका डा० सुशीलकुमारदेवपादाः, (३) वाराणसेयहिन्दूविश्वविद्यालयस्थाः सयाजीरावगायकवाडभारतीयसभ्यतासंस्कृतिप्राध्यापका डा० ति० रा० वेङ्कटाचलमूर्तिमहोदयाः, (४) मद्रपुरविश्वविद्यालयस्थाः संस्कृतप्राध्यापकाः कुप्पुस्वामिगवेषणसमितिप्रधानाश्च डा० वे० राघवन्महाभागाः, (५) बेङ्गलूरस्थशाङ्करमठास्थानविद्वांसः पण्डितराज वे०सु०रामचन्द्रशास्त्रिपादाः, (६) होशियारपुरस्थविश्वेश्वरानन्दवैदिकसंशोधनमन्दिरसञ्चालकाः प्राध्यापकश्रीविश्वबन्धुशास्त्रि-महोदयाश्च। आयोगेनानेन द्विसप्तत्युपधारायुतत्रयस्त्रिंशद्द्वारोपेता सानुबन्धा प्रकरणचतुष्टयात्मिका

## सम्पादकीयम्

प्रश्नावल्येका प्रकाश्य मासद्वयाभ्यन्तरे ( १६-१२-५६, यावत् ) उत्तरितुं भारतीयेष्वखिलेषु विद्वत्सु संस्थासु च प्रचारिता। एतत्सचिवास्थानञ्च पुण्यपत्तन एवास्ते। ततः परमयमखिल-भारतीयसंस्कृतसेविनां मतान्यवगन्तुं प्रस्थितः। आन्ध्र-केरल-मद्र-वंगादिप्रदेशयात्राः परिसमाप्य, उत्तरप्रदेशयात्रायां वाराणसी-प्रयाग-साकेत-लक्ष्मणपुर-हरिद्वारनगरेषु गतश्च सः। तेषु तेषु स्थानेषु गत्वाऽऽयोगसदस्यैस्तत्रस्थविदुषः साक्षात्कृत्य साक्ष्यं संगृहीतम्। यद्यप्यायोगस्य संघटने संस्कृत-केन्द्रभूतस्योत्तरप्रदेशस्य, तत्रापि प्राचीनपरम्परापीठस्थल्या वाराणस्या विदुषां प्रातिनिध्यं सर्वथा समुपेक्षितमधिशासनेन, तदर्थं भेरीघोषायिते आन्दोलने कृतेऽपि स घोषस्तेषां कर्णयोर्न प्रविष्टस्तथापि सन्तोषस्यास्तीदं स्थानं यत्स्वकीयभारतयात्राप्रसङ्गे आयोगसदस्यैरुत्तरप्रदेशीयानां वाराणसेयानाञ्च विदुषां मतानि सादरं सुबह्ववधानेन श्रुतानि, तत्तद्विषयेऽलं विचारविमर्शश्च कृतः। वाराणस्यां च राजकीयसंस्कृतमहाविद्यालये, हिन्दूविश्वविद्यालये, गोयनकासंस्कृतमहाविद्यालये, साङ्गवेद-विद्यालये, रामानुजविद्यालये, विद्वत्परिषत्प्रभृतिषु च प्रधानविद्यापीठेष्वायोगसदस्यैः प्रमुखतमानां विपश्चितां साक्ष्यं संगृहीतम्। काशीविद्वत्परिषत्समक्षमायोगान्यतमसदस्यैः श्रीरामचन्द्रशास्त्रिभिः स्पष्टमुक्तं यद् वयमान्ध्र-केरल-मद्र-वंगप्रदेशेषु संस्कृतस्य साम्प्रतिकीमवस्थां विलोक्य नूनं निराशां गताः। किन्तु संस्कृतविद्याकेन्द्रभूतायामस्यां वाराणस्यां स्फुटं साक्षात्कृतं यदद्याप्यत्र तदेव पाण्डित्यं जागर्ति, यद्धि शङ्करभगवत्पादकाले आसीत्। अद्यापीयमखिलस्य जगतः प्रकाशदानाय सुपर्याप्तं सामर्थ्यं बिभर्ति। काशी हि संस्कृतविद्याया उद्गमस्थली। यावत् संस्कृतविदुषामभावतापेन नेयं शुष्यति, तावद् भारतीयैः स्वसंस्कृतिविषये निराशाभिभूतैर्न भाव्यमिति। अपरैरायोगान्यतमसदस्यैः श्रीवी०राघवन्महोदयैराशंसितं यद् मुक्तिदाया भागीरथ्या धारेव काशीतो निस्सृता संस्कृतधाराप्यखिलं देशं सेक्ष्यतीति। श्रीविश्वबन्धुशास्त्रिभिरुक्तं यद् विभिन्नप्रदेशेषु भ्रमद्भिरस्माभिः सर्वत्र विदुषां विचारेषु विस्मयकरमैकमत्यं समासादितमिति।

आयोगप्रचारितायाः प्रश्नावल्याः सर्वे केचन वा प्रश्ना यथासम्भवं समाहिता अखिल-भारतीयैर्विपश्चिद्भिः। एवं तत्र तत्र साक्ष्यग्रहणमपि सुसम्पन्नम्। काशिकराजकीयसंस्कृत-महाविद्यालयेऽपि समागत्य तैस्तदीया अनेके विद्वांसोऽधिकारिणश्च साक्षात्कृताः। महाविद्या-लयेन च विचारविमर्शेन साकमेव तेभ्यः स्वकीयविद्यापीठ-सरस्वतीभवनपुस्तकालयादिकं दर्शितम्, 'सारस्वती-सुषमा', प्रकाशितहस्तलिखितपुस्तकसूची चोपायनीकृता। पुरैव चानेन महा-विद्यालयेन प्रश्नावलीमिमामनुसृत्य ( फुलिस्केपाकारा ) षोडशपृष्ठात्मिका विस्तृततमा उत्तरावली प्रहितासीत्। सर्वस्यास्य प्रश्नजातस्य विमर्शनमत्र सीमितेऽवकाशे दुःशकम्। एवमायोगीयस्य

प्रतिवेदनस्य प्रकाशनोत्तरमेवात्र विमर्शनमधिकृतं भवेत्। तथाप्यत्र प्रमुखतमान् कांश्चन प्रश्नाऽनुद्दिश्य समासतः किञ्चिद्विचार्यते। सम्प्रति संस्कृतस्य यादृशी किल दुःस्थितिरस्ति, न सा संस्कृतप्रणयिनां कथमपि तिरोहिता। तान्च सुस्थितौ परिणमयितुं य उपायाः श्वोऽनुष्ठेयास्तेऽद्यैव समनुष्ठीयन्तामित्येतादृशी स्थितिरद्य संप्राप्ता। सौभाग्यादुत्तरप्रदेशप्रमुखैरङ्गुलिगण्यैः कतिपयप्रदेशाधिशासनैः स्वीये प्रदेशे द्वितीयपाञ्चवर्षिकयोजनायां यथाशक्ति यथासम्भवञ्च संस्कृतोन्नयनाय सर्वेषु संस्कृतक्षेत्रेषु प्रयतितमास्ते, तथाप्यखिलभारतीयदृष्ट्या विचार्यमाणे स यत्नो लघीयानेव। प्रादेशिकदृशाऽपि च न स सर्वथा सन्तोषावहः। अतः सर्वप्रथममेते संस्कृतज्ञा विपुलेन धनेन विविधाभिः सुविधाभिश्च प्राणनीयाः। एतदर्थमधिशासनन्तु संस्कृतविदुषां छात्राणां च कृते विपुलमनुदानं ददातु, येन साम्प्रतिक्यः संस्कृतसंस्थाः सबला भूत्वा तेषां योगक्षेमं सुखेन परिचालयेयुः। परं नैतावदेव पर्याप्तम्, किन्तु तेषां स्थायिवृत्तिव्यवस्थाऽपि नितरामावश्यकी। तदर्थञ्च वाराणसेयभाविसंस्कृतविश्वविद्यालयमादर्शीकृत्य प्रतिप्रदेशं संस्कृतविश्वविद्यालयसंघटनं प्राथम्यमर्हत्तमत्वं च भजते। एवं संस्कृतपरीक्षोत्तीर्णस्नातकानामपि निखिलेषु राजकीयव्यवहारपदेष्वाङ्गलपरीक्षोत्तीर्णस्नातकैः साकमविशेषं प्रवेशदानमपि महत्तरं साधनम्। एवं माध्यमिकशिक्षायां संस्कृतस्यानिवार्यतया प्रवेशोऽप्यत्यन्तमावश्यकः। एवं संस्कृतप्रचारप्रसाराभ्यामावश्यकं निखिलञ्च साम्प्रतिकं प्रचारसाधनतन्त्रमप्याश्रयणीयम्। विशेषतः संस्कृतवाङ्मयस्य गवेषणम्, सम्पादनम्, राष्ट्रभाषाद्यनुवादमुखेन सर्वजनसुलभीकरणम्, प्राचीनदुर्लभतरहस्तलिखितग्रन्थानां संग्रहः संरक्षणं चैवमादिकमत्र विषये सुमहदुपकारकं भवेत्। तदर्थं चैका केन्द्रीयशासनाधिष्ठिता संस्कृतविदुषां समितिरप्यावश्यकी। संस्कृतपत्रपत्रिकादीनां प्रकाशनमप्यत्र विषये परमं साहाय्यमाचरिष्यति। तथैव संस्कृतशिक्षापद्धतिमपि सर्वाङ्गपूर्णां सामयिकीं व्यवहारक्षमां च विधातुं यत्नो विधेयः। संस्कृताध्ययनस्य प्राचीनतमा पारम्परिकी पद्धतिर्हि नितान्तं पाण्डित्यपूर्णा, अथापि न सा सर्वाङ्गीणा, अपि त्वेकदेशीयैव। साम्प्रतञ्च मानवीयाः संबन्धा विश्वव्यापकीभूताः। अतो वैज्ञानिकैतिहासिकसमीक्षणात्मिकाया नवीनपद्धतेः समाश्रयणमपि कथमपि नोपेक्षणीयम्। उभयोः पद्धत्योः सम्मिश्रणेनाखिले भारते एकरूपा संस्कृतशिक्षा परिचाल्येत चेन्नूनं सा साम्प्रतिकमभीष्टजातं सुसंपाद्य प्राचीनपाण्डित्यपरिरक्षणेऽपि क्षमा भवेत्। प्राचीनपद्धतावपि सम्प्रत्युपेक्षितानां विविधकलानां ह्रासपथमुपेयुषां वैदिक-तान्त्रिकवाङ्मयानां ज्यौतिषायुर्वेदादिविषये गवेषितसमुन्नतविज्ञानानामन्येषां चावश्यकविषयाणां सपरिकरं प्रायोगिकं च प्रशिक्षणं परिष्कृते नूत्नसंस्कृतशिक्षाक्रमे परमावश्यकम्। विषयस्यास्य विश्वविद्यालया-

नुसन्धानप्रतिष्ठान-पुस्तकालयादीनां च स्वरूपनिर्धारणोपक्रमोऽपि काशिकराजकीयसंस्कृतमहाविद्यालयेन कृत एव। सम्प्रति च सर्वापि संस्कृतज्ञजनता संस्कृतायोगप्रतिवेदनं सोत्कण्ठं प्रतीक्षते, आशास्ते च तत्प्रतिवेदनं सम्पद्यमानसंस्कृतह्रासावरोधोपायान् संस्कृताभ्युत्थानोपायांश्च समक्षमुपस्थाप्य केन्द्राधिशासनं तदनुष्ठानायानुरोध्य च संस्कृतस्य शं विधास्यतीति।

## द्वादशवर्षे प्रवेशः

पत्रिकेयमेतदङ्कतः स्वयसो व्यतीत्यैकादशहायनानि द्वादशे वर्षे प्रविशति। शुभे ह्यवसरेऽस्मिन् ग्राहका अनुग्राहकाश्चाभिनन्द्यन्ते। विदुषां साहाय्यमन्तरा अस्याः परिदृश्यमाना उत्तरोत्तरसमुन्नतिः सर्वथा दुःशका। निरुपाधिकी हि तेषामियं कृपा। वयं विश्वसिमो यदितः परं ते इतोऽप्यधिकं पत्रिकामेतामनुगृह्य वर्धयिष्यन्तीति। एकादशवर्षस्य तृतीय-चतुर्थाङ्कौ संयुक्तौ 'दर्शनपरिषदङ्कः' भविष्यति, योऽचिरादेव प्रकाशमेष्यति।

## शिक्षामन्त्रिणां शुभाशंसनम्

अस्मिन्नेवाङ्के आदौ तत्रभवतामुत्तरप्रदेशीय-गृह-शिक्षा-सूचनामन्त्रिवराणां श्रीकमलापतित्रिपाठिमहोदयानामाशंसनं प्रकाशितमास्ते, यत्र तैरिमां द्वादशहायनां भाविवाराणसेयसंस्कृतविश्वविद्यालयस्य मुखपत्रिकात्वेन भाविनीमाशास्य रत्नकाञ्चनयोगः समुपस्थापितः। विश्वविद्यालयश्चाचिरेणैव समुदेष्यतीति मन्यामहे। यतो हि सौभाग्यादेषमो निर्वाचनेऽपि जनसाधारणैः सादरं सोत्साहञ्च निर्वाचितास्तत्रभवन्तो डा० श्रीसम्पूर्णानन्दमहोदयाः पुनरपि प्रदेशस्यास्य मुख्यमन्त्रिपदमलंकुर्वन्ति, येषां हि संस्कृतविश्वविद्यालयस्थापनं व्रतम्। तत्रापि विशेषत आशाप्रदमेतद्यत् श्रीपण्डितकमलापतित्रिपाठिमहोदयाः शिक्षामन्त्रिपदे विराजन्ते। एते विविधविद्याविशारदाः, कार्यदक्षाः, नीतिनिष्णाताः, सफलसम्पादकाश्च सन्ति। एतेषां तातपादाः स्वर्गीयश्रीनारायणपतित्रिपाठिमहोदयाः सुप्रसिद्धाः संस्कृतपण्डिता आसन्। मातामहपादाः पुनरखिलस्य संस्कृतसमाजस्याराध्यचरणाः पण्डितराजशिरोमणयः कैलासवासि-महामहोपाध्यायश्रीशिवकुमारशास्त्रिमहाभागाः। एवमेतेषां कुलद्वयमपि देववाण्याः सुचिरसततोपासनया नितान्तं परिपूतमास्ते। संस्कृतविद्याकेन्द्रभूतस्य प्रदेशस्यास्य शिक्षामन्त्रिपदे स्थाने खलु नियोजितास्ते विद्वद्धौरेयैर्मुख्यमन्त्रिमहोदयैः। श्रीसम्पूर्णानन्दसदृशं पुरुषरत्नं प्राप्य चिरं विभूषितं शिक्षामन्त्रिपदं पुनरप्येभिरलंकृतम्। मनोहरा मूर्तिः, मनोरमा वाक्, रसवती लेखनी, उर्वरितं मस्तिष्कम्, निगूढं तलस्पर्शि च राजनीतिपाटवम्—सर्वं चैतद्भारतीयसंस्कृतेरपरां मूर्तिं श्रीकमलापतिं श्रयते। यत्पदं ते भूषयन्ति, तदन्तर्गतं विभागं स्वीययाऽदम्योत्साहशक्त्या क्रियाशक्त्या च ते सर्वत आलोकयन्ति। विगतमन्त्रिमण्डले सूचना-सेचनमन्त्रिपदे अलंकृत्य तयोर्विभागयोः स्वीयमप्रतिमं साफल्यं स्फुटं दर्शितवन्तस्ते। एतादृशानां शिक्षामन्त्रिवर्याणां शासनकाले संस्कृतज्ञैः संस्कृत-संस्कृतज्ञसमुन्नतिः संस्कृतविश्वविद्यालयस्थापनं चाचिरेणैवाशास्यते।

---

# समालोचनम्

**भारतीय संस्कृति का विकास**—डाक्टरमङ्गलदेवशास्त्रिप्रणीतः। प्रकाशकः—समाज विज्ञान परिषद्, काशी विद्यापीठ, वाराणसी। मूल्यम् ७) रूप्यकाणि। पृष्ठसंख्या ३१८

नाविदितं केषाञ्चिद् यत् काशिकराजकीयसंस्कृतमहाविद्यालयस्य भूतपूर्वाध्यक्षा डॉ॰मङ्गलदेवशास्त्रिणो हि चिररात्राय भारतीयसंस्कृतितत्त्वालोचने लग्नाः, इदानीमधीतिबोधाचरण-प्रचारणमुखेन विषयेऽस्मिन्नाचार्यत्वं भजन्ते। शास्त्रिमहाभागैरेतद्ग्रन्थनिर्मित्या न केवलं भारतीय-संस्कृतिस्वरूपमेवोद्ग्राहितम्, अपि त्वेतदध्ययनक्रमे तत्त्वावगाहिन्येका नूतना सरणिरप्युद्घाटिता। भारतीयसंस्कृतिविषये विवेचकेष्वस्ति नाम महद्वैमत्यम्। मन्ये, शास्त्रिणामेतत्प्रयासेनात्र काचित् संमतिः समन्वितिश्च समुदेष्यति। संस्कृतेर्लक्षणं नाम यत्किमपि भवेत्, परं तस्याः संग्राहकत्वं न तिरोहितम्। अविरोधः समत्वं च संग्रहात्मनस्तत्त्वस्य हृदयमिव भवति। अनेकशताब्द्यनन्तरमिदानीमेतानि भावनातत्त्वानि संस्कृतिपर्याये राष्ट्रात्मनि पुनरुन्मिषन्ति। एतच्छुभाय। परं च यद्येतस्याः स्वरूपाकलनं सम्यङ् न स्यात्तदा मध्यकालिकधर्मसम्प्रदा-यानामिवैषा संस्कृतिरपि स्वविरोधिसंस्कारेण व्याख्यानेन च मुण्डे मुण्डे भेदमेव जनयेत्। वस्तुतोऽद्य भारतीयानां समस्याऽर्थतो राजनीतितो वाऽधिका दुःसमाधेया संस्कृतेर्नीतेश्चैवास्ति। यदीदानीं मानवानां महत्त्वं तेषां च जीवनोद्देश्यं युगानुरोधेनाऽविषमं प्रशस्तं च न प्रतितिष्ठेत् तदा नूनं तेषां भावि तमोवृतमेवावशिष्येत। मानवो हि विनशनधर्माऽपि, स्वयं जातिजरामरणैः कवली-कृतोऽपि स्वोपार्जितं सातिशयमपूर्वमिव कमपि संस्कारं चिरं जीवते मानववंशाय प्रयच्छति। एतत्संस्कारदायमादायैव मानवानुजः पुरुषार्थमधिगच्छति। परमपुरुषार्थः कश्चित् सिद्ध्येन्मा वा, मानवताख्यो नाम मानवसंस्कारः स्वीकर्तव्य एव। अयमेव नवः शाश्वतश्च पुरुषार्थो मानवा-नन्यतो व्यावर्तयति। अयं हि मानवताख्यः संस्कारः कथमिवोत्तरोत्तरमभिवर्धेत ! कथं नाम स्वार्थानलतप्तं मानवमुपशमयेदित्येवाद्यत्वे दुरुत्तरणीयः प्रश्नः। उच्चावचानेकानेकजात्युपजाति-सम्प्रदायोपसम्प्रदायमार्गोपमार्गबहुलायां भारतीमभूमिकायां संग्राहकं तत्तत्संस्कारसूत्रं निलीनमिव प्रतीयते, यदनुवर्तमानं पुरा सर्वमेव वैविध्यं वैचित्र्यं च संग्रथितवत्। प्राचीनतमं तत्संग्रन्थनकौशल-

मप्यनन्तमिथ्याग्राहैर्ग्रस्तमिवाद्य जातम्, तस्य आवरणशतेभ्यो निष्कास्य प्रतिभासनम्, प्रतिभासमानस्य नवाभिसंस्करणं नाम विदुषां महद् वैदग्ध्यकौशलम्। एतत्सम्पादनदिशि डॉ० मङ्गलदेवशास्त्रि-णामस्मिन् ग्रन्थे महान् प्रयासो लक्ष्यते। एतद्ग्रन्थायोजनोद्देश्ये डॉ० शास्त्रिभिरयमेवार्थः स्वशब्देनापि समर्थ्यते [पृ० १५]।

उपर्युक्तां विवेचनापद्धतिमङ्गीकृत्य सप्तखण्डेष्वयं ग्रन्थः पर्यवसास्यति। भूमिकाया वैदिकधारायाश्च प्रस्तुतेऽस्मिन् प्रथमे खण्ड एकादश परिच्छेदाः सन्ति। क्रमशस्तेषु भारतीयसंस्कृतेराधारः, भारतीयसंस्कृतेर्दृष्टिः (तस्याः प्रगतिशीलता, असाम्प्रदायिकता, भारती-यानां सकलेतिहासे ममत्वभावना, अखिलभारतीयभावना च), एतद्विषये वैज्ञानिकी विचार-पद्धतिः, भारतीयसंस्कृतेर्लक्ष्यम्, वैदिकवाङ्मयस्य स्वरूपं तद्दर्शनं च, वैदिकसंस्कृतेस्तिस्रो-ऽवस्थाः (मन्त्रकालः, मन्त्रप्रवचनकालः, प्रवचनश्रवणकालः), वेदानामुदात्तभावास्तेषां विशाला दृष्टिः, वैदिकानां महत्त्वपूर्णं दानम्, वैदिकधारायाश्च ह्रासकारणमित्येते विषयाः प्राधान्येन विवे-चिताः सन्ति। अवसाने द्वे परिशिष्टे अपि संलग्ने, ययोर्वैदिकसंस्कृतिसंबन्ध्यनेकविषयाणामुप-बृंहणमस्ति। एतेषु भगवद्गीताया असाम्प्रदायिकमध्ययनम्, वर्णभेदजातिभेदयोः पारस्परिकः संबन्धश्चेत्येते विशेषतो मननार्हे।

डॉ०शास्त्रिभिर्भारतीयसंस्कृतिविषये इदानीन्तनप्रमुखविचारधाराः पर्यालोच्यैकाऽऽधुनिकी विज्ञानमूलैतिहासिकी दृष्टिः समुद्भाविता। एतया भारतीयसंस्कृतिरनादिकालतः स्वभावतः प्रगतिशीला समन्वयात्मिका च परिचीयते। भारतीयसंस्कृतेः प्रगतिशीलत्वे समन्वयात्मकत्वे चास्ति बहूनां समूलः सन्देहः। तत्र मन्ये, एतदाकलयितुं कस्याश्चिद् वैज्ञानिक्याः प्रणाल्या अभाव एव प्रधानं कारणम्। एतदाकलनप्रयास एव ग्रन्थस्यास्य वैशिष्ट्यम्। एतत्समन्वयदृष्ट्यैव शास्त्रिणः प्राग्वैदिकजीवनस्रोतसा वैदिकार्यजीवनं संगमयन्ति, अत्यर्वाचीनभारतीयेस्लामख्रिष्टीय-मतान्यपि भारतीयसंस्कृतिस्रोतस्येव आपादयन्ति च। अनन्तकालतोऽद्य यावदनेकानेकजाति-सम्प्रदायधर्माणां सहजं संयोजनमैकात्म्येन संपुञ्जनं च यद्यनया प्रणाल्या भवेत्, मन्ये शास्त्रिणा-मिदं प्रवर्तितायोजनं भारतीयानां महते सौभाग्याय भवेत्।

भारतीयसंस्कृतावन्तर्निहितां समन्वितिं तस्याः प्रगतिं विकासं चोपपादयितुं शास्त्रिमहाभागै-र्वर्तमानभारतीयधर्मस्य निगमागममूलकत्वं व्यवस्थापितम्। आगमस्य प्राग्वैदिकत्वं व्यवस्था-पयद्भिरृग्अथर्वादिवेदेभ्यो बौधायनादिधर्मसूत्रेभ्यो विविधस्मृतीतिहासपुराणादिभ्यो बहुशः प्रमाणा-न्युद्धृतानि। एतेषां मते एकस्यामेव भारतीयसंस्कृतौ विभिन्नविभिन्नविरोध्याचारविचार-

देवाधिदेवोपासनादीनां समवायस्य निदानं वैदिकावैदिकानां जातिधर्माचाराणां संयोग एव। एतन्मते सर्वेषामेवैतेषां संग्रह ऋषिसम्प्रदायमुनिसम्प्रदाययोरपि सहजमेव कर्त्तुं शक्यते। तदनुसारेण भारतीयसंस्कृतेरध्यात्मत्ववैराग्यपरलोकवादाहिंसादिसत्प्रवृत्तीनां मूलं वैदिकाचार-विचारावतीत्याऽवैदिकमुनिसंस्कृतावेव निगूढं तिष्ठति। ऋषिसम्प्रदायापरपर्यायवैदिकसंस्कृते-र्यद्यप्यस्ति बहु वैशिष्ट्यं महत्त्वं च तथाप्यन्येभ्यः स्वरक्षणविधौ जनसमुदायेभ्यः पृथग्भावस्तेषां कौशलमिवासीत्। एवमासीत्तयोर्भावभेदो विचारसंघर्षश्च, तथापि ते समेत्यैकामेव संस्कृतिं समापादयताम्। एतदेव तथ्यं निगमागमधर्मनाम्ना श्रुतिस्मृतिपुराणधर्मनाम्ना वाऽद्यापि सूच्यते। भारतीयसंस्कृतेरेतादृगुद्गमं विकासं चाकलयितुं शास्त्रिणः समष्टिदृष्टिरेव तत्त्ववाहिनीति प्रतिपादयन्ति [ द्रष्टव्यम्– पृ० १३-१५ ]।

एषा समष्टिदृष्टिः शास्त्रिभिर्नारोप्य व्यवस्थापिता, न वा राजसमाजव्यवस्थामात्रानुरोधेन बलात् कल्पिता। एतदर्थं ते भारतीयसंस्कृतेश्चत्वारः सिद्धान्ताः स्वभावभूता अवितथाः कार्य-कारणमूलाः सन्तीति भावयन्ति। इमे हि चत्वारः सन्ति सिद्धान्ताः—भारतीयसंस्कृतेः प्रगति-शीलत्वम्, असाम्प्रदायिकत्वम्, समस्तेतिहासे ममत्वभावः, अखिलभारतीयभावश्चेति। स्वीयां वैज्ञानिकीं विचारपद्धतिं स्फुटीकुर्वद्भिः शास्त्रिभिः प्रसङ्गतो भारतीयसंस्कृतेरध्ययनस्याद्य यावत्प्रचलिता साम्प्रदायिकी विचारसरणिः (एकवाक्यतायाः, व्याख्याभेदस्य, प्रक्षेपस्य च), आंग्लविदुषां राजनीतिकस्वार्थाभिनिविष्टा विचारप्रणाली चालोचिता; स्फुटीकृतं च तेषां तथ्यज्ञानकार्पण्यम्। डॉ० शास्त्रिणां वैज्ञानिक्यां विचारपद्धतौ तुलनात्मकैतिहासिकप्रक्रियया न केवलं विचाराणामितिहासो विकासो वाऽपेक्ष्यते, अपि तु वर्तमानपरिस्थितेरध्ययनमप्यनिवार्य-त्वेनोररीक्रियते। एतस्यां पद्धतौ प्राचीनशास्त्राणामध्ययनाय प्राचीनतमा प्रणाली यथाऽऽद्रियते, तथैव सहजमेव नवीनप्रणाल्या अपि समावेशः क्रियते। एतेन प्रागैतिहासिककालतोऽद्य यावद् भारतीयसंस्कृतिः प्रवहमाना जीवन्ती च साक्षात्क्रियते। एतत्साक्षात्कर्तुं कालभेदमनुसृत्य स्थूलदृष्ट्या परापरयोः कार्यकारणभेदाकलनमात्रमेव न पर्याप्तमपि तु पूर्वावस्थातः परावस्थोत्पत्तिमध्यगतानेका-नेकदशानां विश्लेषणमप्यावश्यकमित्युक्तं डॉ० शास्त्रिभिः [ द्रष्टव्यम्–पृ० ३८ ]।

एवं ग्रन्थस्य तत्त्वालोचनप्रभूतायां भूमिकायां डॉ० शास्त्रिभिर्भारतीयसंस्कृतेरध्ययनस्य समीचीना सर्वतः समन्वितैका प्रणाली पुरस्कृता। एतत्सर्वं मनसि कृत्वैवान्ते चतुर्विधां फलोपलब्धिमनयाधिगन्तुं वयं प्रभवेमेत्याकाङ्क्षितं ग्रन्थकृता [ द्रष्टव्यम्–पृ० ५० ]।

अनया वैज्ञानिकसमष्टिदृष्ट्या डॉ० शास्त्रिभिर्वैदिकसंस्कृतेः सुगभीरमध्ययनमुपस्थापितम्। संस्कृतीनां स्वरूपं तात्पर्यं चावगाहितुं ते शास्त्राणामिव संस्कृतीनामपि कालत्रये विभागं कुर्वन्ति— मन्त्रकालः, मन्त्रप्रवचनकालः; प्रवचनश्रवणकालश्चेति। एतत्कालत्रयानन्तरं कस्याश्चित् संस्कृतेस्तदनुरोधिसाहित्यस्य च ह्रासो भवति। तेषां ह्रासकारणेष्वेवान्यसंस्कृतिसाहित्यानामुदयाय बीजानि भवन्ति। डॉ० शास्त्रिणां वेदविषयकं पाण्डित्यकौशलमेवास्ति यत्तैरस्या अभिनवप्रणाल्या आद्यन्तं साफल्येन निर्वाहः कृतः। एवमौपनिषद-जैन-बौद्ध-पौराणिकादिसंस्कृतीनामध्ययनं यदा भविष्यति तदा मन्ये, एका नूतना सरणिर्विदुषां पुरत उपस्थास्यति। भाविनि प्रयासे साफल्यं भवेन्न वा, डॉ० शास्त्रिणामेष प्रयास एवान्येषां दिङ्निर्देशायालम्। राष्ट्रभाषायामेतद्ग्रन्थं विलिख्य राष्ट्रगौरवाय यच्छ्रद्धेयशास्त्रिभिः कृतं तत्तेषामौदार्यमात्रम्। एतदर्थमेते विशेषतो धन्यवादार्हाः सन्ति।

**श्रीजगन्नाथ उपाध्यायः।**

---

**१. देवबन्दी वरदराजः। २. महीपो मनुनीतिचोलः। ३. कामशुद्धिः।**

अत्राद्ये द्वे खण्डकाव्ये, अन्तिमं चैकाङ्करूपकम्। रचयिता चैतेषां समेषां सुप्रथितः काञ्चीकामकोटिपीठाधिपशङ्कराचार्यवर्यलब्धकविकोकिलपदवीको डा० वे० राघवशर्ममहोदयः। तत्र प्रथमे खण्डकाव्ये श्रीरङ्गतीर्थमधिवसतो भगवतो रङ्गनाथस्य स्तुतिपाठकस्य ब्राह्मणकुलोत्पन्नस्य वरदराजस्य कयाचन मातङ्गकन्यया प्रणयो वर्णितः। ब्राह्मणसमाजेन मातङ्गकुलेन च न्यक्कृतो वरदराजो नोपेक्षितो भगवता रङ्गनाथेन। एकदा कस्मिंश्चिदुत्सवावसरे देवदेवेन भगवता विष्णुना स स्वयमेवाहूतो गातुं नर्तितुं च। तदैव भगवदाज्ञया नगरं प्रविशतस्तस्य प्राणज्योतिर्भगवद्विग्रहं समाविशत्। प्रसादगुणगुम्फितेष्वेकोनषष्टिमितेषु पद्येषु समाप्ताया अस्याः कथाया मूलं तमिलभाषानिबद्धे 'कोइलोलुलु' नामके ग्रन्थे भागवतारपरम्परासु च लभ्यते।

द्वितीयेऽष्टाविंशतिश्लोकात्मके खण्डकाव्ये तमिलदेशस्य मनुनीतिचोलनाम्नश्चोलनृपतेर्न्यायप्रियत्वमुपवर्णितम्। तेन ह्यपराधिनि स्वपुत्रेऽपि मृत्युदण्डं श्रावयता मनसि न कोऽपि विकारः समुपदर्शितः। मनुना स्थापितां मर्यादां यथावदनुपालयति स्मेति कृत्वैवास्य नृपतेर्मनुनीतिचोल इत्याख्या समजायत। अस्य कथा प्राचीनेषु तमिलसंगीतेषु गीयते स्म, नाट्येषु चाभिनीयते स्म। ११२३ तमे ई० वर्षीय एकस्मिन् शिलालेखे, लङ्काद्वीपीये महावंशनामके बौद्धेतिहासग्रन्थे चैषा कथा समुपलभ्यते। तिरुवरूरनगरे त्यागराजमन्दिरं निकषा साम्प्रतमपि

तस्य रथस्य पाषाणनिर्मिता प्रतिकृती राजतेतराम्। इयं प्रतिकृतिः कथं राजशासनानुसारं राजपुत्रस्य शरीरं कदर्थितं यशःशेषीकृतं चेति वृत्तं स्मारयति। नृपतेः पक्षपातरहितेन न्यायेन संतुष्टो भगवान् त्यागराजस्तर्णकं राजपुत्रं च संजीवयामास।

अन्तिम एकाङ्करूपककाव्ये निर्मर्यादस्य कामस्य शुद्धयै तत्सहधर्मचारिण्या रत्या तपस्यन्त्या कथं नाम महेश्वराद्वरो लब्ध इति कल्पिता कथा कामदहनकथायाः पीठिकाभूता समुपनिबद्धा। उक्तं च स्वयं रूपककारेण—"किमिदं कामशुद्धिर्नाम वस्तु? वस्तु चैतत् कवेः कालिदासस्य कुमारसंभवान्महाकाव्यादुत्थितम्, तस्य च हृदयभूतम्" [ पृ० २ ] इति।

अस्मिन्नन्तिमे रूपककाव्य एव विशेषतः परिस्फुरति कवेः स्वच्छन्दा प्रतिभा। पश्यन्तु नाम—"अथवा निरोज इव साहित्यं निर्मन्यु प्रेम केवलपेशलिम्ना पर्यवस्यत्यरुचौ" [ पृ० २ ] इति, "भर्तुरप्यवलिप्तस्य धर्माधर्ममजानतः। उत्पथं प्रतिपन्नस्य भार्या भवति शासिका॥" [ पृ० ३ ] इति, "सैषा मदीयस्य आनन्दस्य विवर्तः, यं जना रतिमाहुः, यां च दुर्विनीतः कामो बलात् साहचर्ये नियोजयितुं यतते, न शक्नोति च तथा कर्तुम्" [ पृ० ६ ] इति, "अशुद्ध एव कामः पुमर्थान्तराणामङ्गम्, शुद्धः पुनरनङ्गः स्वयमेव परमपुरुषार्थः" [ पृ० ८ ] इत्यादीनि वाक्यानि प्रसादगुणगुम्फितान्योजोभरितानि च कवेर्वर्णनामाधुरीं नूतनां कामपि विचारपद्धतिं च परिचाययन्ति। अत्र कविना शुद्धः कामः परमपुरुषार्थस्थानीय आम्नातः। गभीरेऽनुसन्धानकर्मणि व्यापृतस्यैतादृक्सरसकाव्यप्रसवित्री प्रतिभा नूनं सहृदयहृदयावर्जिका भवेदिति वयमीदृशानां रूपकाणां निर्माणाय प्रकाशनाय च डा० वे० राघवमहोदयान् साधुवादैः सभाजयामः।

अ० व० द्वि०।

---

१५२६१०८६५२
× १२
१८३१३३०७४२४ | ११
१५७७६१७८२८
२५३४१२६१४४
१५७७६१७८२८
६५६२११३१६
× ३०
२८६८६३३६४८० | १८
१५७७६१७८२८
१२६०७१६१२००
१२६२३३४२६२४
२८३८१८५७६
× ६०
१७०२६११४५६० | १०
१५७७६१७८२८
१२४६६३६२८०
× ६०
७४६६६१७६८०० | ४७
६३११६७१३१२
११८७६४६३६८०
११०४५४२४७६६
८३४०३८८८४

अथ चन्द्रोच्चक्षेपानयनम् ।

७१४४०४०२६३६४
४८८२०३
२१४३२१२०८८१८२
१४२८८०८०५८७८८ × ×
५७१५२३२२३५१५२ ×
५७१५२३२२३५१५२ ×
२८५७६१६११७५७६ ×

१५७७६१७८२८ | ३४८७७४१६०३६२२३८६८२
३१५५८३५६५६ | २२१०३४४४४ = गतभगणाः

३३१९०६२४७६
३१५५८३५६५६
१६३२२६८२०२
१५७७९१७८२८
५४३५०३७४२३
४७३३७५३४८४
७०१२८३९३९८
६३११६७१३१२
७०११६८०८६९
६३११६७१३१२
७०००९५५७८
६३११६७१३१२
६८८४२४२६६२
६३११६७१३१२
५७२५७१३५०
× १२
११४५१४२७००
५७२५७१३५० ×
चन्द्रोच्चयस्य क्षेपः =४।१०।३७।५३ ६८७०८५६२००|४
आचार्योक्तक्षेपः =४ । ९ । ३ । ४३ ६३११६७१३१२

अन्तरम् =०। १°।३४'।१०'' ५५९१८४८८८
× ३०
अत्र महदन्तरमापतति। अतोऽनुमीयते १६७७५५४६६४०|१०
यच्चन्द्रोच्चसाधनमन्यरीत्या साधितमस्ति। १५७७९१७८२८
तच्च श्रीब्रह्मदेवविरचितकरणप्रकाशा- ९९६३६८३६०
सन्नमायाति। अतस्तत्साधनमग्रे प्रदर्श्यते। × ६०
५९७८२१०१६००|३७
४७३३७५३४८४
१२४४४५६६७६०
११०४५४२४७९६
१३९९१४१९६४
६०

आचार्योक्तक्षेपः =६।१२।०।३

अन्तरम् = १।४०।०

१००११०६३८४०|६
९४६७५०६९६८
५४३५५६८७२
× ३०
१६३०६७०६१६०|१०
१५७७९१७८२८
.५२७५२७८८०
× ६०
३१६५१६७२८०० |२०
३१५५८३५६५६
९३३१६२४०
× ६०
५५९८९७४४००|३
४७३३७५३४८४
८६५२२०९१६

—o—

## अथ भौमस्य क्षेपानयनम्

अहर्गणः = ७१४४०४०२९३९४
भौमयुगभगणाः = × २२९६८३२

१४२८८०८०५८७८८
२१४३२१२०८८१८२ ×
५७१५२३२२३५१५२ ×
४२८६४२४१७६३६४ ×
६४२९६३६२६४५४६ ×
१४२८८०८०५८७८८ ×
१४२८८०८०५८७८८ ×

१५७७९१७८२८ = युगसावनदिवसाः | १६४०८६६०३५६४१०७९८०८ | १०३९८९३२१० = गतभगणाः
१५७७९१७८२८

६२९४८२०७६४
४७३३७५३४८४
१५६१०६७२८०१
१४२०१२६०४५२

१४०९४१२३४९०
१२६२३३४२६२४
१४७०७८०८६६७
१४२०१२६०४५२
५०६५४८२१५९
४७३३७५३४८४
३३१७२८६७५८
३१५५८३५६५६
१६१४५११०२०
१५७७९१७८२८

राश्यादिभौमक्षेपः = २।२३।२९।१३
आचार्योक्तक्षेपः = २।२३।२९।११
अयं पठितक्षेपाद् विकलाद्वयासन्नमानेनान्तरितः ।

३६५९३१९२८
× १२
४३९११८३१३६|२
३१५५८३५६५६
१२३५३४७४८०
× ३०
३७०६०४२४४००|२३
३१५५८३५६५६
५५०२०६७८४०
४७३३७५३४८४
७६८३१४३५६
× ६०
४६०९८८६१३६०|२९
३१५५८३५६५६
१४५४०५०४८००
१४२०१२६०४५२
३३९२४४३४८
× ६०
२०३५४६६०८८०|१२
१५७७९१७८२८

४५७५४८२६००
३१५५८३५६५६
१४१६६४६६४४

—o—

### अथ बुधशीघ्रोच्चक्षेपानयनम्

७१४४०४०२९३९४ सृष्ट्यादितोऽहर्गणः
× १७९३७०६० यु० बु० शी० उ० भ०

४२८६४२४१७६३६४०
५०००८२८२०५७५८ × ×
२१४३२१२०८८१८२ ×
६४२९६३६२६४५४६ ×
५०००८२८२०५७५८ ×
७१४४०४०२९३९४ ×

यु०कु०दि० १५७७९१७८२८ | १२८१४३०७९३९४८१९४१६४० | ८१२१०२३६१२
| १२६२३३४२६२४ | = गतभगणाः

१९०९६५३१५४
१५७७९१७८२८ राश्यादिक्षेपः ३।२३।२६।३८
३३१७३५३२६८
३१५५८३५६५६
१६१५१७६१२१
१५७७९१७८२८
३७२५८२९३९४
३१५५८३५६५६
५६९९९३७३८१
४७३३७५३४८४
९६६१८३८९७६
९४६७५०६९६८
१९४३३२००८४
१५७७९१७८२८
३६५४०२२५६०
३१५५८३५६५६

बुधस्य राश्यादिक्षेपः =
३।२३।२६।३८
+ ६।१६।३९ बीजं धनम् ।
३।२९।५९।९

४६८१८६६०४
× १२
६६६३७३८०८
४६८१८६६०४×
५६७८२४२८४८|३ राशिः
४७३३७५३४८४
१२४४४८६३६४
× ३०
३७३३४६८०६२०|२३ अंशाः
३१५५८३५६५६
५७७६३२४३६०
४७३३७५३४८४
१०४२५७०८७६
× ६०
६२५५४२५२५६०|३६ कला:
४७३३७५३४८४
१५२१६७१७७२०
१४२०१२६०४५२
१०१५४५७२६८
× ६०
६०६२७४३६०८०|३८ विकलाः
४७३३७५३४८४
१३५८६६०१२४०
१२६२३३४१६२४
०६६६५५८६१६

अयं क्षेपः पाठपठितसमः ।

---

अथ बृहस्पतेः क्षेपानयनम्

७१४४०४०२६३६४ अहर्गणः
× ३६४२२० गु० गु० भगणाः

१४२८८०८०५८७८ ८०
१४२८८०८०५८७८ ८× ×

२८५७६१६११७५७६ ×
४२८६४२४१७६३६४ ×
२१४३२१२०८८१८२ ×

यु.कु.दि.१५७७९१७८२८ | २६०२००२३५५८५८८२६८० | १६४९०१००४
१५७७९१७८२८
१०२४०८४५२७८
९४६७५०६९६८
७७३३३८३१०५
६३११६७१३१२
१४२१७११७९३८
गुरो राश्यादिक्षेपः = १४२०१२६०४५२
०१५८५७४८६८२
१५७७९१७८२८
०७८३०८५४६८०
६३११६७१३१२
१५१९१८३३६८
× १२
३०३८३६६७३६
१५१९१८३३६८ ×
१८२३०२००४१६|११
१५७७९१७८२८
२४५१०२२१३६
१५७७९१७८२८
८७३१०४३०८
३०
२६१९३१२९२४०|१६
१५७७९१७८२८
१०४१३९५०९६०
९४६७५०६९६८
९४६४४३९९२
× ६०

११|१६|३५|५९
—३|९|४६ = बीजमृणम्
११|१३|२६|१३

अयं क्षेपः पाठपठितसम एव। अत्र बीजानयने—"अर्धाधिके रूपं ग्राह्यम्" इति नियमेन एका विकलाऽधिका गृहीताऽस्ति, तेनैकविकलान्तरं दृश्यते।

# सारस्वती-सुषमाया उद्देश्या नियमाश्च

१. एषा देशे विदेशे च लब्धप्रसारा त्रैमासिकी संस्कृतपत्रिका।
२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठभाद्रमार्गफाल्गुनपूर्णिमासु भवति।
३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः समालोचना-प्रवृत्तेरुद्‌बोधनं प्रोत्साहनं चास्ति।
४. अस्यां सरस्वतीभवनस्य काशिकराजकीयसंस्कृतमहाविद्यालयस्य च विदुषामन्येषां च लेखकानां मौलिकविचारपूर्णा अनुसन्धानप्रधाना अन्य-विधाश्चोपयोगिनो निबन्धाः प्रकाश्यन्ते।
५. उपर्युक्तप्रकारा एव निबन्धाः प्रकाशनार्थं प्रेषणीयाः।
६. फुलस्केपपरिमितेषु पत्रेष्वेकस्मिन् पार्श्वे एव पर्याप्तं रिक्तं स्थानं (मार्जिन) दत्त्वा सुस्पष्टं शोभनाक्षरैर्लिखिता निबन्धा ग्राह्या भविष्यन्ति।
७. निबन्धे संशोधनाधिकारः सम्पादकायत्तः।
८. अस्वीकृता निबन्धाः प्रत्यावर्तनव्ययप्राप्तौ सत्यामेव परावर्तिताः स्युः।
९. लेखकैः प्रकाशितनिबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः।
१०. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्गलग्रन्थानां समालोचना प्रकाश्यते।
११. लेखकैः प्रकाशकैश्च समालोचनार्थं सम्पादकपार्श्वे ग्रन्थस्य द्वे प्रती प्रेषणीये।
१२. अस्या वार्षिकं मूल्यं सार्द्धसप्तरूप्यकाणि, प्रत्यङ्कं च द्वादशनवपणकन्यूनं रूप्यकद्वयं वर्तते।
१३. पत्रिकायाश्चतुर्थपञ्चमषष्ठवर्षीया अङ्का अर्धमूल्येन प्राप्तुं शक्यन्ते।
१४. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः—"सम्पादक, सारस्वती सुषमा, राजकीयसंस्कृतमहाविद्यालय, वाराणसी-२" इति संकेतेन विधेयः।